**पूर्णप्रज्ञसंशोधनमन्दिरम्**
**नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-**
**राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्**

**श्रीजयतीर्थभिक्षुविरचिता**

# प्रमाणपद्धतिः

**श्रीमद्रामचन्द्रतीर्थपूज्यपादविनेय-वानिवालनरसिंहाचार्यविरचितया**
**'भावचन्द्रिका' टिप्पण्या तथा वेदेशीयादिषट्टिप्पणीनां विशिष्टांशैश्च भूषिता**
**नवदेहलीस्थराष्ट्रियसंस्कृतसंस्थानेन विद्यावारिधिः (Ph.D.)**
**इत्युपाधिप्रदानेन सम्मानितोऽयं शोधप्रबन्धः**

मार्गदर्शकः
**दि. प्रा. ए. अनन्ततन्त्री**
अलङ्कारशास्त्रप्राध्यापकः, पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

प्रबन्धा
**डा. शङ्करनारायण अडिगः**
उपनिदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु-२८

**पूर्णप्रज्ञसंशोधनमन्दिरम्**
**पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८**
**२०१०**

**Poornaprajna Samshodhana Mandiram**
Recognised by Rashtriya Sanskrit Samsthan, Deemed University,
Ministry of H.R.D., Govt. of India, New Delhi

# PRAMĀṆA PADDHATIḤ

**of Śri Jayatīrtha**

**with the Bhāvacandrikā of Śri Vānivāla Narasimhācārya and selected parts of other six commentaries.**

**Approved by**
**Rashtriya Sanskrit Sanstan, New Delhi**
**for the award of Vidyavaridhi (Ph.D.)**

*Guide :*
**Late : Prof. A. AnantaTantri.**
Professor of Alankāra Dept.,
Poornaprajna Vidyapeetha,Bangalore-28

*Edited by*
**Dr. Shankaranarayana Adiga**
Deputy Director,
Poornaprajna Samshodhana Mandiram, Bangalore

*Published by*
**Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Katriguppa Main Road,
Bangalore-28

2010

Poornaprajna Samshodhana Mandira Granthamālā -74

# PRAMĀṆA PADDHATIḤ of Śri Jayatīrtha

**with the Bhāvacandrikā of Śri Vānivāla Narasimhācārya and selected parts of other six commentaries.**

Approved by Rashtriya Sanskrit Sanstan, New Delhi for the award of Vidyavaridhi **(Ph.D.)**

**ISBN - 978-81-910246-2-3**

*Edited by* **Dr. Shankaranarayana Adiga**

Published by **Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Katriguppa Main Road,
Bangalore-28

*This publication is brought out by the generous financial help of*

**Rashtriya Sanskrit Samsthan,**
**(Deemed University),**
**New Delhi**

First Edition : 2010

Copies : 1000

Pages : 80 ÷ 257

**Price : Rs. 80/-**

*Printed by :*
**VAGARTHA**
No. 149, 8th Cross, N.R. Colony, Bangalore-19
Ph. 080-22427677

**पूर्णप्रज्ञसंशोधनमन्दिरम्**
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्

श्रीजयतीर्थभिक्षुविरचिता

# प्रमाणपद्धतिः

**श्रीमद्रामचन्द्रतीर्थपूज्यपादविनेय-वानिवालनरसिंहाचार्यविरचितया**
**'भावचन्द्रिका' टिप्पण्या तथा वेदेशीयादिषट्टिप्पणीनां विशिष्टांशैश्च भूषिता**

नवदेहलीस्थराष्ट्रियसंस्कृतसंस्थानेन विद्यावारिधिः (Ph.D.)
इत्युपाधिप्रदानेन सम्मानितोऽयं शोधप्रबन्धः

मार्गदर्शकः
**दि. प्रा. ए. अनन्ततन्त्री**
अलङ्कारशास्त्रप्राध्यापकः, पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

प्रबन्धा
**डा. शङ्करनारायण अडिगः**
उपनिदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु-२८

प्रकाशनम्
**पूर्णप्रज्ञसंशोधनमन्दिरम्**
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

२०१०

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला – ७४

श्रीजयतीर्थभिक्षुविरचिता **प्रमाणपद्धतिः**
**श्रीमद्रामचन्द्रतीर्थपूज्यपाद**विनेयवानिवालनरसिंहाचार्यविरचितया
'भावचन्द्रिका'टिप्पण्या तथा वेदेशीयादिषट्टिप्पणीनां विशिष्टांशैश्च भूषिता ।

नवदेहलीस्थराष्ट्रियसंस्कृतसंस्थानेन विद्यावारिधिः (Ph.D.)
इत्युपाधिप्रदानेन सम्मानितोऽयं शोधप्रबन्धः

**ISBN - 978-81-910246-2-3**

सम्पादकः **डा. शङ्करनारायण अडिगः**

प्रकाशनम्- **पूर्णप्रज्ञसंशोधनमन्दिरम्**
पूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पा मेन्रोड्, बेङ्गलूरु - २८

पुटानि : ८०+२५७

प्रथममुद्रणम् : २०१०

मुद्रितपुस्तकसङ्ख्या : १०००

मूल्यम् : ८० रूप्यकाणि

मुद्रणम् : वागर्थमुद्रणम्, बेङ्गलूरु

# अनुग्रहसन्देशः

श्रीमज्जयतीर्थपूज्यचरणप्रणीता प्रमाणपद्धतिः द्वैतसिद्धान्तरीत्या प्रमाणस्वरूपविविदिषूणां विद्यार्थिनां विदुषाञ्च महते उपकाराय कल्पते । चराचरात्मकमिदं समग्रमपि विश्वं भगवता विष्णुना सृष्टं सर्वदा सर्वथा तदधीनञ्च । विष्णोः निर्दोषगुणपूर्णत्वविज्ञानं रमाब्रह्मादीनां तारतम्यं तद्वशत्वं च न कदाऽपि विस्मर्तव्यम् । एतदेव हि सकलशास्त्रसारमिति भगवत्पादैः प्रतिपादितम्-

**'य एतत् परतन्त्रं तु सर्वमेव हरेः सदा ।**
**वशमित्येव जानाति संसारान्मुच्यते हि सः ।।'** इति ।

एतादृशविज्ञानं च **'मानाधीना मेयसिद्धिः'** इति न्यायेन प्रमाणस्वरूप-विज्ञानसापेक्षम् । यद्यप्यस्य ग्रन्थस्य मूलं तु भगवत्पादाचार्यप्रणीतं प्रमाणलक्षणमेव । तथापि तस्य तु मूलं भगवद्बादरायणप्रणीतं ब्रह्म-तर्कम् । तमुपजीव्यैव प्रमाणस्वरूपं, प्रमाणत्रित्वं, साक्षिस्वरूपम् इत्यादयो विषयाः भगवत्पादैरुपवर्णिताः । तदुक्तम्- **'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः'** इत्यादि ।

प्रमाणस्वरूपविमर्शनावसरे नैयायिका ज्ञानसाधनस्य प्रामाण्यं, मीमासका ज्ञानस्य प्रामाण्यं मन्यन्ते । श्रीमदानन्दतीर्थभगवत्पादाचार्यास्तु ज्ञान-तत्कारणोभयसाधारणं **'यथार्थं प्रमाणम्'** इति प्रमाणलक्षणं प्रत्यपीपदन् । **'ज्ञानविषय एव हि करणानामपि विषयः । न हि किमप्य-विषयीकृत्य करणानि ज्ञानं जनयितुमीशते'** इति वदद्भिः टीकाकृद्भिः ज्ञान-करणयोः साक्षादेव ज्ञेयविषयीकारित्वमस्तीति सम्यक् प्रति-पादितम् । अन्यैरनङ्गीकृतं स्मृतिप्रामाण्यमपि यार्थार्थ्यादेव निरूपितम् । मनसः स्वातन्त्र्येण स्मरणसाधनत्वरूपनूत्नविषयोपपादनेन तस्य

प्रामाण्यमपि उपवर्णितम् । **'प्रत्यक्षं सप्तविधं साक्षिषडिन्द्रियभेदेन'**, **'स्वरूपेन्द्रियं साक्षी'** इति च वदद्भिराचार्यैः साक्षिस्वरूपं, साक्षिग्राह्याः विषयाश्च सम्यगेव निरूपिताः । ख्यातिस्वरूपविमर्शावसरेऽपि, अभिनवान्यथाख्यातिः सुष्ठूपपादिता- 'शुक्तिसन्निकृष्टमिन्द्रियम् अत्यन्तासदेव रजतं विषयीकरोति' इति ।

अनुमाननिरूपणावसरेऽपि, अर्थवचनदोषभेदाद् द्विविध उपपत्तिदोष इत्युक्तम् । विरोधासङ्गती तु साक्षादुपपत्तिदोषौ । तद्द्वारा वचनस्यापि । वचनदोषौ न्यूनाधिक्ये । वचनद्वारेणार्थस्यापि । एवं पञ्चावयवनियमः, हेतुसाध्ययोः सामानाधिकरण्यनियमश्च नाऽऽदृतः । एवमनेकेऽपूर्वा एव विषया अत्र निरूपिता विदुषां विद्यार्थिनां च द्वैतदर्शनोक्तप्रमाणस्वरूपं यथावदावेदयन्ति ।

प्रमाणपद्धतिग्रन्थरत्नमिदं गात्रेणात्यल्पमपि, अनल्पमेव विषयं प्रतिपादयतीति सर्वैर्द्वैतविद्यापीठविद्यार्थिभिः पाठ्यग्रन्थत्वेन स्वीकृतः । ग्रन्थरत्नमिदम् इतः प्रागप्रकाशितरामचन्द्रभिक्षुविनेयवानिवालनरसिंहाचार्यप्रणीतव्याख्यया टिप्पण्यन्तरविशिष्टविषयैश्चोपबृम्हिता अस्मत्प्रियच्छात्रेण डा. शङ्करनारायण अडिगेन सुष्ठु संशोधिता । विमर्शपूर्णः विस्तृतश्चोपोद्धातो विलिखितः । विद्यावारिध्युपाधये सज्जीकृतोऽयं प्रबन्धः संशोधनमन्दिरद्वारा प्रकाश्यत इति विदित्वा हृष्टा वयम् । अस्मदाराध्यः श्रीकृष्णो ज्ञानाद्यभिवर्धनेन एनं समनुगृह्णात्विति सम्प्रार्थयामहे । समेषां शास्त्रग्रन्थानां प्रकाशनार्थं समुचितवित्तप्रदानेन बहूपकृतवतां विद्वत्प्रवराणां श्रीराधावल्लभत्रिपाठिमहाभागानां कृष्णानुग्रहं च प्रार्थयामहे ।

**श्रीश्रीविश्वेशतीर्थश्रीपादाः**

श्रीपेजावर-अधोक्षजमठः, उडुपि

# Director's Note

The Pramanapaddhati is an important work of Dvaita epistemology based on Pramana-lakshana of Sri Madhvacharya. Sri Jayatirtha wrote a valuble commentary (Teeka) on this monograph. Now the Teeka is published with unpublished commentary Bhavachandrika, written by Vanivala Narasimhacharya who belongs to circa 16th century. This has been edited using four original manuscripts with a critical and exhaustive introduction. Dr. Shankaranarayana Adiga, Dy. Director of Poornaprjna Samshodhana Mandiram, has submitted this for Doctoral thesis and also awardee of Vidyavaridhi (Ph.D). I congratulate Dr. Adiga for his valuable contribution in the field of critical edition of manuscripts and research.

Sri Teekacharya explained new definitions on Dvaita epistemology in the light of Pramana-lakshana of Sri Madhvacharya. Concept of Smrti, Mind, Sakshi, Khyati, etc., are new contributions to the Indian epistemology field. I hope scholars of Indian philosophy will be benefitted by this edition.

With the continued guidance and blessing of Sri Vishveshatirtha Swamiji of Sri Pejavara Matha, this Research Institute is sailing smoothly and doing its best in meeting the goals set by Sri Swamiji. While praying for continued guidance, we as a team do the work worthy of his blessings.

We gratefull to Prof. Radha Vallabh Tripathi Vice-chancellor, Rashtriya Sanskrit Samsthan (Deemed University),

New Delhi, who has been kind enough to grant the amount towards the publication of this work. We look upon his help and guidance at every step of our activities.

I will be failing in my duty, if I donot express my thanks to Prof. Ramanuja Devanathan Registrar of Rashtriya Sanskrit Samsthan, New Delhi for his anytime cooperation in all our venture.

I thank M/s. Vagartha Printers who have printed neatly in a short span of time. I hope they extend the same co-operation in future also.

**Dr. A.V. Nagasampige**
Director

# विषयानुक्रमणिका

## प्रमाणपद्धतिभावचन्द्रिका

### प्रत्यक्षपरिच्छेदः

## अनुमानपरिच्छेदः

*****

# कृतज्ञतासमर्पणम्

तत्र प्रथमतः, यैरहं श्रीमन्न्यायसुधानुव्याख्यानतात्पर्यचन्द्रिकादिग्रन्थपाठनचिन्तनमन्थनादिना समनुगृहीतोऽस्मि तेभ्यः परमपूज्येभ्यः दिग्दिगन्तविश्रान्तयशोभ्यः सहस्राधिकशिष्यप्रशिष्योपगीयमानचरितेभ्यः उडुपि श्रीपेजावराधोक्षजमठाधीशेभ्यः अनन्तश्रीविभूषितेभ्यः **श्रीविश्वेशतीर्थश्रीचरणेभ्यः** सभक्तिसाष्टाङ्गप्रणामान् समर्पयामि ।

परमपूज्याः अनन्तश्रीविभूषिता उत्तरादिमठाधीशाः **श्रीसत्यात्मतीर्थश्रीचरणाः** मच्चिकीर्षितस्य प्रमाणपद्धतिटिप्पणीभावचन्द्रिकासम्पादनकार्यस्य (क.)हस्तप्रतिप्रदानेन महतीमुपकृतिं कृतवन्तः । तेभ्यः शास्त्रकाननपञ्चाननेभ्यः सभक्तिसाष्टाङ्गप्रणतिततीः समर्पयामि ।

नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीनराष्ट्रियसंस्कृतसंस्थानस्य कुलपतिपदमधिष्ठितवद्भ्यः विद्वदग्रेसरेभ्यः **प्रो.राधावल्लभत्रिपाठिमहाभागेभ्यः** सादराणि वन्दनानि निवेदयामि ।

पूर्णप्रज्ञसंशोधनमन्दिरस्य अध्यक्षभूतेभ्यः नैकविधशास्त्रनिपुणेभ्यः, **राष्ट्रपतिप्रशस्तिपुरस्कृतेभ्यः प्रो.डि.प्रह्लादाचार्य**महाभागेभ्यः कृतज्ञतापूर्वकाणि वन्दनानि समर्पयामि ।

शोधकार्यमिदं कर्तुमनुमतिं दत्वा आदितः आकार्यपरिसमाप्ति समयोचितसूचनदानेन सकलविधसहकारसम्पत्तिप्रदानेन प्रोत्साहितवतां पूर्णप्रज्ञसंशोधनमन्दिरस्य निदेशकानां **डा.ए.वि.नागसम्पिगे** महाभागानां कृतज्ञताप्रसूनानि वितरामि ।

शोधप्रबन्धमिमं समापयितुं मार्गदर्शनं कृत्वाऽनुगृहीतवतां पूर्णप्रज्ञविद्यापीठसंस्कृतमहापाठशालायाः अलङ्कारशास्त्रविभागाध्यक्षेभ्यः (साम्प्रतं स्वर्गस्थेभ्यः) **प्रो.ए.अनन्ततन्त्रि** महाभागेभ्यः सप्रणतिकार्तज्ञ्यं विनिवेदये ।

विद्यावाचस्पतयः प्रवचनचतुराः व्यासमध्वप्रतिष्ठानाध्यक्षाः **डा. प्रभञ्जनाचार्य महाभागाः** भावचन्द्रिकायाः (घ.)हस्तप्रतिदानेन मम गुरुतरं कार्यं लघूकृतवन्तः । तेभ्यः आचार्यवर्येभ्यः हार्दं कार्तज्ञ्यं निवेदयामि ।

बेङ्गळूरुनगरस्थसत्यध्यानविद्यापीठगुरुकुलस्य प्रांशुपालाः **पं. सत्यध्यानाचार्यकट्टि** महाभागाः भावचन्द्रिकायाः (क.)हस्तप्रतिप्रदानेनोपकृतवन्तः । तेभ्यः सादरकृतज्ञता अर्पयामि ।

तथा शोधप्रबन्धनिर्माणे प्रत्यक्षतः परोक्षतः बहुविधसाहाय्यं कृतवद्भ्यः श्रीविभूषितेभ्यः **प्रो.के.टि.पाण्डुरङ्गिमहाभागेभ्यः, हयवदनपुराणिकमहोदयेभ्यः, हरिदासभट्टमहोदयेभ्यः, रङ्गनाथकट्टि** महाभागेभ्यः, **वीरनारायणपाण्डुरङ्गि**वर्येभ्यः, **श्रीनिवासवरखेडि** वर्येभ्यः, मैसूरुप्राच्यविद्यासंशोधनालये संशोधनसहायकाय, **डि.पि. मधुसूदनाय** च तथा पूर्णप्रज्ञविद्यापीठस्य **ज्येष्ठेभ्यः उपाध्यायवर्येभ्यो** भूयसो धन्यवादान् निवेदयामि ।

संशोधनप्रबन्धमिमं गणकयन्त्रे टङ्कयित्वोपकृतवन्तः **श्रीअञ्जनप्रसाद्**महाभागाः मदीयहार्दसाधुवादानर्हन्तीत्युक्त्वा विरमामि ।

**के.शङ्करनारायण अडिगः**

श्रीः

## ०. उपोद्घातः

### १.० प्रमाणानां स्थानश्रैष्ठ्यम्

विदितचरमेवेदं समेषां विदुषां यत् प्रमाणजन्यप्रमात्मकज्ञानेन जायमाना प्रवृत्तिरर्थक्रियाजनकत्वेन सार्थकीति । अपि च प्रमाणेनैव सकलो लौकिको वैदिको वा प्रवृत्तिनिवृत्त्यन्यतररूपो व्यवहारः प्रवर्तते । किमु सर्वेषां प्राणिजातानामसन्दिग्धो व्यवहारः प्रमाणं पुरस्कृत्य सम्भवतीति ? तथा सर्वाणि दर्शनानि च प्रमाणाधारकतया न्यरूपिषत । अत एव **'मानाधीना मेयसिद्धिः'** इति महतामुक्तिः जगति जागर्ति । तस्मादेव स्वनिरूपणीय-प्रमेयस्वरूपनिष्कर्षार्थं सर्वे दार्शनिकाः प्रमाणान्याश्रयन्तेत्यत्र नास्ति विवादः । **'मानसिद्धिश्च लक्षणात्'** इत्यतो हेतोः उद्देशलक्षणविभाग-परीक्षादिना प्रमाणस्वरूपनिरूपणार्थं प्रायः सर्वे दार्शनिकाः प्रायतन्त, तथा द्वैतसिद्धान्तिनोऽपि ।

### २.० द्वैतदर्शने प्रमाणमीमांसा

#### २.१ प्रमाणविषये ग्रन्थाः

द्वैतसिद्धान्ते प्रमाणस्वरूपप्रपञ्चनं तत्र तत्र ग्रन्थेषु कृतप्रायमपि तत्स्वरूपनिष्कर्षैकदीक्षौ द्वौ ग्रन्थौ प्रवर्तितौ दृश्येते । तत्रैकः श्रीमदानन्दतीर्थभगवत्पादविरचितः (१२३८-१३१७) **'प्रमाण-लक्षणम्'** इत्यन्वर्थाभिधः, अपरा च श्रीजयतीर्थमुनिकृता (१३६८-१३८८) **प्रमाणपद्धतिः**[1] । सेयं प्रमाणपद्धतिः द्वैतदर्शनप्रमाण-स्वरूपचिन्तनरता विविधदर्शनवर्णितप्रमाणलक्षणादिविमर्शनपट्वी,

---

१. **'प्रमाणानां प्रत्यक्षादिप्रमाणानां पद्धतिरिव पद्धतिः प्रमाणपद्धतिः । प्रसिद्धमार्गस्य गम्यप्रापकत्वमस्य प्रकरणस्य ज्ञेयप्रमाणस्वरूपप्रापकत्वम् ।'**– (प्र.प.टि.भा.च.)

विद्वज्जनमनीषानिकषायिताऽपि बालानां प्रमाणमार्गप्रविविक्षूणामतीवोपकरोति[1] ।

एतद्ग्रन्थद्वयमाधारीकृत्य छलारिशेषाचार्यैः (१६-१७ शतके) प्रमाणचन्द्रिकाख्यकृतिरारचिता वर्तते । कृतिरियं १९८६ तमे वर्षे श्रीसत्याभिज्ञसंस्कृतविद्यापीठम्- उत्तरादिमठः - बेङ्गळूरु - एतया संस्थया प्रकाशं नीता ।

एवमेव श्रीमदानन्दतीर्थविरचितसर्वमूलग्रन्थेषु, टीकाचार्येत्यन्वर्थनामभाग्जयमुनिविरचितन्यायसुधादिग्रन्थेषु व्यासतीर्थवादिराजतीर्थराघवेन्द्रतीर्थादिविरचितटिप्पण्यादिकृतिषु विक्षिप्ततया तत्र तत्र प्रमाणलक्षणादिकं प्रत्यपादि ।

### २.२ *प्रमाणज्ञानस्याऽवश्यकता*

अस्मिन् वैरिञ्चे प्रपञ्चे सकलोऽपि जनः 'सुखमेव मे स्यात्, दुःखं मनागपि मा भूत्' इति सकलानिष्टनिवृत्तिपूर्वकम् इष्टप्राप्तिरूपं मोक्षं कामयते । स च मोक्षो विष्णुतदन्यस्वातन्त्र्यास्वातन्त्र्यज्ञानाभ्यां भवतीत्यतः मुमुक्षुणा परतन्त्रं जगदिदं स्वतन्त्रभगवदायत्तमित्यवश्यं ज्ञातव्यम् । तदुक्तमानन्दतीर्थभगवत्पादैः-

**'य एतत् परतन्त्रं तु सर्वमेव हरेः सदा ।**
**वशमित्येव जानाति संसारान्मुच्यते हि सः ॥**[2]' इति ।

स्वतन्त्रपरतन्त्ररूपपरापरतत्वज्ञानं च प्रमाणाधीनम् । प्रमाणज्ञानं च लक्षणादिना भवति । तस्मादवश्यं प्रमाणलक्षणादिकं सर्वैर्ज्ञातव्यं भवति ।

१. **'प्रणम्य चरणाम्भोजयुगलं कमलापतेः ।**
**प्रमाणपद्धतिं कुर्मो बालानां बोधसिद्धये ॥'** (प्रमाणपद्धतिमङ्गलश्लोकः प्र.प. पृ.१.)

२. तत्त्वविवेकः – श्लोकः – ११.

### २.३. *प्रमाणशब्दार्थः*

द्वैतसिद्धान्ते प्रमितिः प्रमासाधनं चेति द्वयं प्रमाणशब्दार्थः । '**भावे**[१]' इति सूत्रानुसारं भावव्युत्पत्त्या प्रमाणशब्दः प्रमावाची ।

'**करणाधिकरणयोश्च**[२]' इति सूत्रानुसारेण 'प्रमीयतेऽनेनेति करणव्युत्पत्त्या स एव प्रमाकरणवाची । यद्यपि पूर्वोक्तसूत्रेण भावकरणयोरिव अधिकरणेऽपि ल्युटो विधानात् । प्रमाकर्तुः प्रमाधिकरणत्वात् प्रमातर्यपि प्रमाणशब्दप्रयोगः स्यात् । तथाऽपि तत्र प्रमाणशब्दस्याभिधानाभावान्न वृत्तिः कल्प्यते । कृत्प्रत्ययान्त-शब्दव्युत्पत्तिकल्पनेऽभिधानं हि कारणम् ।

यद्यपि '**प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु**' इति नैघण्टिक-मनुशासनात्मकमभिधानमस्ति । परन्तु तदतिप्रसक्तत्वेन नार्थ-व्यवस्थापकं भवति । न हि प्रमाकर्ता प्रमां प्रत्यधिकरणम् । यतः अधिकरणं नाम न क्रियाधारः । किन्तु कर्तृकर्मणोः क्रियाश्रययोः धारणक्रियां प्रत्याधार एव[३] । तस्मात् प्रमातत्करणोभयवाची एव प्रमाणशब्दः ।

### २.४. *प्रमाणलक्षणम्*

#### २.४.१. *विविधदर्शनानुसारेण प्रमाणलक्षणानि*

केचन वादिनः प्रमाणशब्दस्य प्रमित्यर्थत्वमात्रमङ्गीकृत्य लक्षण-मवदन् । परैः कैश्चित् प्रमासाधनत्वमात्रार्थत्वमङ्गीकृत्य लक्षणमवादि । तथा हि- बौद्धमते प्रमाणलक्षणकथनावसरे प्रमाणवार्तिके आचार्य-धर्मकीर्तिना '**प्रमाणमविसंवादि ज्ञानम्**[४]' इति न्यरूपि । तत्रैव-

१. पा. सू. ३-३-१८. २. पा. सू. ३-३-११७.
३. श्रीमन्न्यायसुधा – २-२-२-१.पृ.२४७१. ४. प्रमाणवार्तिकम् – १.पृ.३.

**'धीप्रमाणता ।**

**प्रवृत्तेस्तत्प्रधानत्वाद्धेयोपादेयवस्तुनि ॥[१]'**

इत्यादिना, यथार्थज्ञानादेव प्रवृत्तिदर्शनात् प्रमितेरेव प्रामाण्यमिति न्यगदि ।

जैनमते माणिक्यनन्दिना **'स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम्'** (परीक्षामुख सूत्र-१) इति प्रमैव प्रमाणमित्यगदि । तथा विजयधर्मसूरिः[२] **यथार्थज्ञानं प्रमाणं'** इति प्रमाणमलक्षयत् ।

मीमांसकमते– 'अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायण-स्यानपेक्षत्वात्' (जै.सू. १-१-५) इति जैमिनीसूत्रस्थप्रमाणशब्दं व्याकुर्वन् पार्थसारथिमिश्रः **'करणदोषबाधकज्ञानरहितम् अगृहीत-ग्राहि ज्ञानं प्रमाणम्[३]'** इति न्यरूपयत् । कुमारिभट्टेनापि श्लोकवार्तिके

**'तस्माद् दृढं यदुत्पन्नं नापि संवादमृच्छति ।**

**ज्ञानान्तरेण विज्ञानं तत् प्रमाणं प्रतीयताम् ॥[४]'**

इति प्रमितिरेव प्रमाणत्वेन प्रत्यपादि । **'स्मृतिव्यतिरिक्तं ज्ञानमनुभूतिः, अनुभूतिः प्रमाणम्'**[५] इति प्राभाकरणां लक्षणम् । अत्र सर्वत्र प्रमितिरेव प्रमाणमित्युच्यते ।

---

१. प्रमाणवार्तिकम् – १. पृ. ४.

२. प्रमाणपरिभाषा – पृ. ४.'प्रकर्षेण संशयादिव्यवच्छेदेन मीयते परिच्छिद्यते वस्तुतत्त्वं येन तत् प्रमाणम् । यथार्थज्ञानत्वं तस्य लक्षणम् । अर्यतेऽधिगम्यते इत्यर्थो विषयः । तमनतिक्रम्येति यथार्थम् । अर्थाव्यभिचारि । तथाभूतं ज्ञानं प्रमाणम् ।'

(न्यायालङ्कार-पृ.४)

३. शास्त्रदीपिका – ४४-४५.

४. श्लोकवार्तिका – पृ.५२. श्लो.सं.८०.

५. 'अनुभूतिः प्रमाणं सा स्मृतेरन्या स्मृतिः पुनः । पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ॥' (प्रकरणपञ्चिका – पृ.-८०-अध्यायः-५, श्लो - १)

### २.४.२. *न्यायमते प्रमाणलक्षणम्*

प्रमा, प्रमितिः, यथार्थानुभवः इत्यनर्थान्तरमिति न्यायसिद्धान्तः । प्रमाणं तु एतस्मादन्यदेव, प्रमासाधनमिति तद्दर्शने लक्षणमाटङ्कितम्। वात्स्यायनेन '**उपलब्धिसाधनानि प्रमाणानि**'[१] इति भाष्ये प्रमाणपदं प्रमितिसाधनार्थतयाऽङ्गीकृतम् । '**उपलब्धिहेतुः प्रमाणम्**[२]' इति न्यायवार्तिककारेणापि लक्षितम् । '**सम्यगनुभवसाधनं प्रमाणम् । सम्यग्ग्रहणं संशयविपर्ययापोहार्थम्**[३]' इति वदता भासर्वज्ञेनापि प्रमाणशब्दस्य प्रमितिसाधनमात्रवाचकत्वं स्वीकृतम् ।

### २.४.३. *द्वैतमते प्रमाणलक्षणम्*

द्वैतमते यथार्थज्ञानं यथार्थज्ञानसाधनमुभयं प्रमाणमित्युच्यते । '**यथार्थं प्रमाणम्**[४]' इति प्रमाणलक्षणकारैः श्रीमदानन्दतीर्थ-भगवत्पादैरुभयत्र साधारणं प्रमाणलक्षणं कथितम् । तस्याभिप्राय-माविष्कुर्वन्तः प्रमाणपद्धतिकाराः श्रीजयतीर्थमुनयः प्रमातत्साधनोभयं प्रमाणशब्दार्थमिति न्यरूरुपन् । तदनुसारेण प्रमाणपद्धतौ '**यथा-वस्थितज्ञेयविषयीकारित्वम्**[५]' प्रमाणसामान्यलक्षणमुक्त्वा तत्र ज्ञेय-विषयीकारित्वं च साक्षाद्वा, साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन वा विवक्षितमिति न प्रमासाधनेष्वव्याप्तिरित्यवदन् । तत्र प्रमाणं तावद् द्विविधम् । केवलमनुप्रमाणं चेति। तत्र यथार्थज्ञानं केवलप्रमाणम् । यथार्थज्ञानसाधनमनुप्रमाणम् । यथावस्थितज्ञेयविषयीकारित्वरूप-प्रमाणलक्षणं तु केवलानुप्रमाणयोरुभयोर्वर्तते । यद्देशकालयोर्यादृशं

---

१. गौतमसूत्रभाष्यम् – १-१-१५.    २. न्यायवार्तिकम् – १-१-१५.

३. न्यायसारः – पृ. १०.    ४. प्रमाणलक्षणम् – पृ.९.

५. प्रमाणपद्धतिः – प्र. परिच्छेदः - पृ.३३.

वस्तु, तादृशमेव पदार्थं तद्देशकालयोः प्रमातत्साधनद्वयं विषयीकरोती-त्युभयत्र लक्षणसमन्वयः ।

ननु ज्ञानस्य सविषयकत्वादस्तु ज्ञेयविषयीकारित्वम् । चक्षुरादि-करणानां तु न कथङ्कारमपि विषयीकारित्वं सम्भवतीति लक्षण-स्यास्यानुप्रमाणेष्वव्याप्तिरिति चेत्, नात्राव्याप्तिः सम्भवति दोषः। ज्ञानं यथा साक्षादेव ज्ञेयं विषयीकरोति तथा करणानामपि साक्षाद् ज्ञेयविषयीकारित्वमस्त्येव । ज्ञानविषय एव हि करणानां विषयः । [१]न हि किमप्यविषयीकुर्वन्त्येतानि ज्ञानं जनयन्ति । नाप्यन्यविषयकाणि सन्ति एतद्विषयकज्ञानमुत्पादयन्ति । अतिप्रसङ्गात् । यत्सन्निकृष्ट-करणेन यज्ज्ञानमुत्पद्यते स तस्य विषयः- इति विषयत्वनिरुक्त्या यथा ज्ञानं सविषयकं तद्वच्चक्षुरादिकरणान्यपि सविषयकाणीति सिद्धम् । करणानि यत्सन्निकृष्टानि ज्ञानजनकानि भवन्ति तस्य ज्ञानविषयस्यैव करणानि प्रत्यपि विषयत्वं स्वीकृतम् । सन्निकर्षपदेन प्रत्यासत्ते-रभिमतत्वात् । इन्द्रियाणां संयोग इव लिङ्गशब्दयोरपि लिङ्गि-वाक्यार्थाभ्यां व्याप्तिरूपप्रत्यासत्त्या लिङ्गिवाक्यार्थबोधजनक-त्वेनानुमानशब्दरूपानुप्रमाणयोरपि सविषयकत्वोपपत्तिः ।

एवं च यथावस्थितज्ञेयविषयीकारित्वं ज्ञानरूपकेवलप्रमाणे तत्साधनेषु इन्द्रियलिङ्गशब्दरूपानुप्रमाणेषु चैकविधमेव । परन्त्वर्थे यद् ज्ञेयत्वमस्ति तद् ज्ञानरूपोपाधिजमेव । न करणोपाधिकम्[२] । अतो ज्ञेय-विषयीकारीत्यत्र ज्ञेयत्वांशेऽनन्यापेक्षत्वान्यापेक्षत्वरूपभेदमात्रेण ज्ञाने

१. प्र.प.रा.टि – पृ.४०.

२. श्रीमन्न्यायसुधा - २-१. नविलक्षणत्वाधिकरणम् । पृ. २५१६.

साक्षाज्ज्ञेयविषयीकारित्वव्यवहारः । करणे तत्साधनत्वव्यवहारः । अतो न कश्चिद् दोषः ।

### २.४.३.१ . *प्रमाणलक्षणे दलकृत्यविचारः*

यथावस्थितज्ञेयविषयीकारित्वमिति प्रमाणलक्षणे ज्ञेयविषयीकारित्वमात्रोपादाने संशयविपर्ययोरतिव्याप्तिः । अतः यथावस्थितेति । 'यथावस्थितं प्रमाणम्' इत्युक्ते प्रमातृप्रमेययोरतिव्याप्तिः । अतो ज्ञेयविषयीकारित्वोपादानम् । तयोः ज्ञेयविषयीकारित्वाभावान्नातिव्याप्तिः ।

यद्यपि [1]प्रमाणपद्धतौ– **'ज्ञेयविषयीकारित्वं च साक्षाद्वा साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन वा विवक्षितम्'** इति केवलप्रमाणानुप्रमाणाननुगतलक्षणद्वयं जयतीर्थश्रीचरणाः निर्विविशुः । तथाऽपि पूर्वोक्तरीत्या ज्ञानस्येव करणस्यापि सविषयकत्वेनोभयोरप्येकरूपविषयीकारित्वमस्ति । तस्मात् तत्र जयतीर्थपूज्यपादानामयमाशयः । ज्ञानं तावद् वस्तुनो ज्ञेयत्वमुपाधितया सम्पादयति, ज्ञेयताशरीरे ज्ञानस्य घटकत्वात् । करणानि तु तादृशज्ञानरूपोपाधिजनकतया विषयस्य ज्ञेयत्वं गमयन्तीति ।

यदा तु साक्षात्त्वं ज्ञेयत्वे विवक्षितम्, तदाऽनुप्रमाणेषु साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन प्रमाणलक्षणं लगति । यदा तु साक्षात्त्वं विषयीकारितान्वयि तदा न कश्चिद् दोषः । एतदभिप्रायेणैव प्रमाणलक्षणटीकायां टीकाकृद्भिः श्रीजयतीर्थमुनिभिः - **'साक्षाद् यथावस्थितार्थविषयीकारि केवलम् । परम्परया तादृशमनुप्रमाणम्**[2]**'** इत्यभिप्राय आविष्कृतः । विषयस्य ज्ञेयत्वसम्पादनमात्रे एव ज्ञानस्य करणानां च साक्षात्त्वपारम्पर्ययोरत्रोक्तत्वात् ।

१. प्र.प.पृ – ३९. २. प्र.ल.टी. पृ.१०.

यदि लक्षणशरीरे पूर्वोक्तरीत्या साक्षात्त्वं पारम्पर्यं, साधनत्वं वा निविष्टं स्यात् तर्हि लक्षणस्याननुगमरूपदोषः स्यात् । अथवा परस्पराव्याप्तिरूपलक्षणदोष उद्भवेत् । न चैवम् । साक्षात्त्वाद्यनुपसंहितस्य यथावस्थितार्थविषयीकारित्वमात्रस्यैव केवलप्रमाणानुप्रमाणोभयानुगतस्य लक्षणस्य विवक्षितत्वात् ।

अथ च यथावस्थितज्ञेयविषयीकारित्वमात्रं ज्ञाने करणेषु च साधारणं प्रमाणलक्षणमभिप्रेतं तर्हि कथं तयोः केवलप्रमाण-अनुप्रमाणेति-भिन्नपदप्रयोगः इति चेदित्थम् । यथावस्थितज्ञेयविषयीकारित्व-रूपप्रमाणलक्षणे यद् ज्ञेयं प्रविष्टं तत्र ज्ञेयता ज्ञानेन औपाधिकतया भवति । अर्थाद् ज्ञानं विषयस्य ज्ञेयत्वे उपाधिः । करणैस्तु विषये ज्ञेयता ज्ञानद्वाराऽर्थात् तादृशज्ञानजनकतया सम्पाद्यते । अर्थात् करणानि ज्ञेयत्वे निमित्तानि भवन्ति । एवं च ज्ञानस्य उपाधितया तत्र केवल-पदप्रयोगः । करणानां निमित्तत्वनिमित्तेनानुप्रमाणपदवाच्यत्वम् । एतावदल्पविशेषसद्भावमात्रेणाव्याप्तिचोदने गोः सास्नादिमत्त्व-लक्षणेऽपि दैर्घ्यसौक्ष्म्यकार्ष्ण्यशौक्ल्याद्यादिरूपवैलक्षण्यस्य सुवचत्वेन लक्षणमात्रोच्छेदप्रसङ्गः[१] ।

ननु प्रमाणशब्दो भावसाधनः करणसाधनश्चेति अनेकार्थोऽनुभूयते। न तावता उभयत्र साधारणं लक्षणं भवतीति नियमोऽस्ति । न हि **'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु'** इत्यनेकार्थकार्थादिशब्द-वाच्यानामभिधेयादीनां नैकमनुगतं वा लक्षणं शास्त्रकारैरुच्यते । न च तत्रानुगतलक्षणकंथनप्रयासस्तैः स्वीकृतो दृश्यते । अतः प्रमाण-लक्षणस्य ज्ञानकरणोभयानुगमसम्पादनप्रयासो द्वैतिनां व्यर्थ एव इति

१. श्रीमन्न्यायसुधा - २-१-अधि-२ – पृ. २५०५.

चेत्, अत्रोच्यते । प्रमाणशब्दस्तु अर्थशब्दादिवन्नात्यन्तासङ्गता-नेकार्थः । तद्वाच्ययोर्भावकरणयोरनेकत्वेऽपि तदुभयत्रैकमाङ्-धात्वर्थानुगमेनैकत्वस्यापि सम्भवेनैकार्थत्वात् । न ह्यर्थशब्दवाच्येषु प्रयोजनादिष्वेकधात्वर्थानुगमोऽस्ति । येन तेऽप्येकार्थाः भवेयुः । तस्मात् केवलप्रमाणानुप्रमाणेष्वनुगतलक्षणकथनादिकं युक्तमेवेति[१] ।

### २.९. *प्राभाकराद्युदीरितप्रमाणलक्षणसमीक्षा*

अनुभूतिः प्रमाणम्; स्मृतिव्यतिरिक्तं ज्ञानमनुभूतिरिति प्राभाकरोक्तं लक्षणं संशयविपर्ययोरतिव्यापकत्वात् स्मृतौ वेदादिषु च यथार्थज्ञानसाधनेष्वव्याप्तत्वाच्चायुक्तम्[२] । **'ज्ञातताप्राकट्यापरपर्याय-वाच्यस्य विषयाश्रितस्य प्रकाशविशेषस्य साधनं क्रियाज्ञानं प्रमाणम्'** इति भाट्टानां लक्षणमप्ययुक्तम् । ज्ञानव्यतिरिक्तायां ज्ञाततायां प्रमाणाभावेनासम्भवित्वात् । अतीतादिविषयाणां प्रकाशाश्रयत्वासम्भवेन अतीतादिविषयज्ञानानां तज्जनकत्वायोगाच्च । धर्माधर्माद्यतीन्द्रियावेदकेषु वेदादिष्वव्याप्तेश्च ।

**'अनधिगततथाभूतार्थगन्तृ प्रमाणम्'** इति तेषामेव लक्षणान्तर-मप्ययुक्तम् । स्मृतौ वेदादिषु चाव्याप्तेः[३] । **'सम्यगनुभवसाधनं प्रमाणम्'**, इति भासर्वज्ञोक्तं प्रमाणलक्षणं[४], **'प्रमाकरणं प्रमाणम्'** इति विश्वनाथान्नम्भट्टादिनैयायिकोक्तं लक्षणं[५], **'प्रमाव्याप्तं प्रमाणम्'** इत्युदयनाचार्योक्तं प्रमाणलक्षणं, **'प्रमासमग्री प्रमाणम्'** इति जयन्त-भट्टोक्तं[६] प्रमाणलक्षणमपि यथार्थज्ञानेऽव्याप्तेरयुक्तम् ।

---

१. प्र-प- पृ.१२०.

२. श्रीमन्न्यायसुधा २-१. नविलक्षणत्वाधिकरणम् . पृ.२५२९.

३. प्र.प - पृ. ८१ .

४. न्यायसारः – पृ. १०.

५. तर्कसङ्ग्रहः – पृ. १०३.

६. न्यायमञ्जरी – आह्निक - १-पृ.३१.

[1]**'अविसंवादि ज्ञानं प्रमाणम्'** इति आचार्यधर्मकीर्त्युक्तं लक्षणं स्मृत्यादावव्यापकत्वादयुक्तम् ।

[2]**'स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणम्'** इति माणिक्यनन्द्युक्त-लक्षणम् अपूर्वार्थाविषयके स्मृत्यादावव्यापकत्वादयुक्तम् ।

**'अव्यभिचारिणीमसन्दिग्धामर्थोपलब्धिं विदधती बोधाबोध-स्वभावा सामग्री प्रमाणम्'** [3]इति जयन्तभट्टानां लक्षणमपि यथार्थज्ञानरूपकेवलप्रमाणाव्यापकत्वादयुक्तम् ।

तस्माद् याथार्थ्यमेव प्रमाणलक्षणमित्युक्तमेव युक्तम् ।

### *३.० स्मृतिप्रामाण्यविचारः*

### *३.१. द्वैतमते स्मृतिस्वरूपनिरूपणम्*

**'मानसप्रत्यक्षजा स्मृतिः**[4]**'** इति श्रीमदाचार्यैः स्मृतिलक्षण-मभिहितम् । तदनुसारेण द्वैतसम्प्रदाये स्मृतिः केवलप्रमाणम् । तत्करणं मनः प्रत्यक्षम् । अर्थसन्निकर्षलक्षणावान्तरव्यापारसहितं हीन्द्रियं प्रत्यक्षं नेन्द्रियमात्रम् । मनसश्च स्मरणजनने संस्कारोद्बोध एवार्थसन्निकर्षः ।

तत्र मनस्तावद् द्विविधं ज्ञानं जनयति । तत्तदिन्द्रियाधिष्ठातृत्वेन तत्तदर्थविषयकमेकम् । संस्काररूपप्रत्यासत्त्यात्मकावान्तरव्यापार-साहित्येन स्मरणं च[5] । न च वाच्यम्, अतीतार्थेन सह मनसः सन्निकर्षायोगेन न प्रत्यक्षजन्यत्वं स्मृतेरिति । अतीतादि-विषयकयोगिप्रत्यक्षस्यापि प्रसिद्धसन्निकर्षायोगेन तज्जन्यज्ञानस्य

१. 'प्रमाणमविसंवादि ज्ञानम्....' । प्रमाणवार्तिकम् - १-३.

२. प्रमेयरत्नमाला - पृ. ७. परीक्षामुखसूत्रे - सू.१.

३. न्यायमञ्जरी -पृ.३१. सम्पुटम् - १

४. प्रमाणलक्षणम् - पृ. १३१.

५. प्रमाणलक्षणटीका. पृ. १३२.

प्रत्यक्षप्रमात्वाभावप्रसङ्गात् । योगिप्रत्यक्षस्थले यथा योगजधर्मः प्रत्यासत्तिरिति स्वीक्रियते तथाऽत्रापि मनसः स्मरणजनने संस्कारः प्रत्यासत्तिर्भवति । एवं स्मृतेर्यथावस्थितार्थविषयकत्वरूपप्रामाण्य-मङ्गीकृतं द्वैतसिद्धान्ते ।

किञ्च [1]यस्मात् स्मृतिरतीतत्वविशेषितार्थविषयिणी तस्मादपि तस्याः प्रामाण्यं सिद्ध्यति । यस्माच्च स्मृतिविषयीकृतमतीतत्वं वर्तमानतयाऽनुभूतादर्थादाधिक्यमिष्यते सर्वैः दार्शनिकैस्तस्मात् सा कथं न मानम् ?

अपि च, अनधिगतार्थगन्तृत्वं प्रमाणलक्षणमङ्गीकृत्यैवमुपपादितम् । वस्तुतस्तु याथार्थ्यमेव मानत्वम् । तच्च स्मृतेरनुभवसिद्धमस्ति । बाधक-प्रत्यये हि सति तन्न भवति । न चासावत्रास्ति । तदुक्तमनुव्याख्याने श्रीमध्वाचार्यैः[2]–

**'प्रत्यक्षं मानसं चैव यदाऽतीतार्थगोचरम् ।**
**तदा स्मृतिप्रमाणत्वमतीतत्वविशेषितम् ॥**

**आधिक्यमनुभूतात्तु यदाऽतीतत्वमिष्यते ।**
**मानता च कथं न स्यात् स्मृतेर्बाधश्च नात्र हि ॥'** इति ।

### ३.२. *स्मृतिप्रामाण्यविषये न्यायसिद्धान्तः*

उदयनाचार्यास्तु स्मृतेर्याथार्थ्यं निराचक्रुः । तेषामयमाशयः । [3]न हि यादृशोऽर्थः स्मर्यते यदा, तदाऽसौ तादृशः । स्मृतिकाले तद्देश-कालवैशिष्ट्यरूपपूर्वावस्थाया निवृत्तत्वेनाविद्यमानतादृशार्थविषयक-

१. श्रीमन्न्यायसुधा - भागः - V - पृ. ४५५१.

२. अनुव्या. ३-२-१-१. सुधापुस्तके - पृ. ४५५१.

३. न्यायवार्तिकटीकापरिशुद्धिः– पृ.११०. मिथिलापुस्तकम् ।

त्वात् स्मृतेरयथार्थत्वमेव युक्तम् । न च निवृत्तपूर्वावस्थतयैव तमर्थं स्मृतिरालम्बते । पूर्वावस्थानिवृत्तावनुभवाप्रवृत्तेः ।

समानविषयकत्वेऽपि स्मृत्यनुभवयोरनुभवो यथार्थो न तु स्मृतिरिति कुत एतत् ? इति चेद् उच्यते– अनुभवकाले तस्यार्थस्य तादवस्थ्यात् । स्मृतिकाले त्वतादवस्थ्यात् । ननु पूर्वं तावत् तदवस्थ एवासा-वासीदेतावतैव ज्ञानमस्तु यथार्थम् । इति चेन्न । पाकरक्तेऽपि घटे श्यामताप्रत्ययस्य यथार्थत्वप्रसङ्गात् ।

नन्वतीतश्यामताप्रत्ययस्तत्र यथार्थ एव । सत्यम् । तद्विषयस्य तदानीमेव तदवस्थत्वात् । न तु स्मर्यमाणावस्थस्तदानीं तदवस्थः । तस्मात् स्मृतिरयथार्थैव ।

अत्रोच्यते- यतो विषयासत्त्वमेव ज्ञानायथार्थत्वे तन्त्रं न तूल्लिखितस्य विषयस्य ज्ञानकालेऽसत्त्वम् । तथात्वेऽतीतानागत-प्रमयोरप्ययाथार्थ्यापत्तेः । स्मृत्युल्लिखितदेशकालयोश्च 'स्मृतिविषयः सन्' इत्यबाधितप्रतीतिविषयत्वात् सत्त्वमिति न स्मृतेरयाथार्थ्यमिति द्वैतसिद्धान्तः[१] ।

यद्यपि नैयायिकानां स्मृतेर्याथार्थ्यमभिप्रेतम् । तथापि न प्रमात्वं तत्राभ्युपगतम् । यतो नैय्यायिकानां मते याथार्थ्यमन्यत् । प्रमात्वमन्यत् । स्मृतौ याथार्थ्यसद्भावेऽपि कणादगौतमादीनां प्रमात्व-व्यवहाराभावात् प्रमायाश्चानुभवत्वघटितत्वात् नैय्यायिकाः स्मृतिं न प्रमात्वेनोररीकुर्वन्ति ।

यद्यपि जयन्तः, स्मृतिविषयस्य वस्तुनः स्मृतिकालेऽसत्त्वात् स्मृतेरयाथार्थ्यं प्रत्यपीपदत् । तथा च तद्वाक्यम्–

१. प्रमाणपद्धतिवेदेशीयटिप्पणी. पृ. १३६.

**'न स्मृतेरप्रमाणत्वं गृहीतग्राहिताकृतम् ।**
**अपि त्वनर्थजन्यत्वं तदप्रामाण्यकारणम् ॥'** इति ।

अत्र वृत्तिः– **'ननु कथमनर्थजा स्मृतिः ? तदारूढस्य वस्तुनस्तदानीमसत्त्वात् ।'**[१] इति ।

परन्तु तदेतद् भासर्वज्ञेन निराकृतम्– **'स्मृतेरपि कथमर्थजत्वम् ? अर्थाभावेऽपि स्मृत्युत्पत्तेरिति चेत्, कुतः पुनरसावसन्नर्थः स्मृतिं न जनयति ? असत्त्वादेवेति चेद् अतीताद्यर्थज्ञानस्य तर्हि कथमर्थजत्वम् ? इति**[२]' ।

वैशेषिकानामपि स्मृतेर्याथार्थ्यरूपप्रामाण्यमभिप्रेतम् । न्यायलीलावत्यां वल्लभाचार्यवचनमत्र मानम् ।

'[३]**स्मृतिरपि मानान्तरमेवार्थनिश्चयहेतुत्वात् ।'** इत्यादि ।

### *३.३ स्मृतियाथार्थ्यविषये मीमांसकसिद्धान्तः*

स्मृतेर्याथार्थ्यं मीमांसकानामपीष्टमेव । तथा हि **'अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्**[४]' इति जैमिनिसूत्रे विद्यमानं प्रमाणशब्दं व्याख्यन् पार्थसारथिमिश्रः **'करणदोषबाधकज्ञानरहितम् अगृहीतग्राहि प्रमाणम्**[५]' इति प्रमाणलक्षणमाह । तत्र लक्षणे पूर्वदलमात्रोपादाने स्मृतावतिव्याप्तिः । तन्निवारणार्थम् अगृहीतग्राहीति विशेषणम् । तेन स्मृतौ याथार्थ्यमस्तीति ज्ञायते । करणदोषबाधकज्ञानराहित्यं हि याथार्थ्येनैव सिद्ध्यति ।

१. न्यायमञ्जरी - सम्पुटम् - १– पृ. ५९.
२. न्यायभूषणम् - पृ. ९३.
३. न्यायलीलावती - स्मृतिपरीक्षाप्रकरणम् - पृ. ६२०-६२४.
४. जैमिनिसूत्रम् - १-१-५.
५. शास्त्रदीपिका - ४४-४५.

स्मृतेर्याथार्थ्यं प्राभाकराणामपि सम्मतम् । प्रमाणवार्तिके धर्मकीर्तिकथितं प्रमाणलक्षणं निराकुर्वन् शालिकानाथः- '[१]**किं पुनरिदं प्रमाणं नाम ? न तावदविसंवादि ज्ञानं प्रमाणम् । स्मृतेरपि तथाभावप्रसक्तेः**' इति तल्लक्षणस्य स्मृतावतिव्याप्तिमुद्भावयति । तेन च अविसंवादित्वरूपयाथार्थ्यं स्मृतौ तेनाभ्युपगतमिति ज्ञायते ।

अपि च- '**अथ स्मृतिः विकल्परूपतया परमार्थसत् स्वलक्षणम् अगृह्णन्ती संवृतिसन्तमाकारमवस्तुभूतमुल्लिखन्ती द्विचन्द्रादिबोधवन्नाविसंवादिनी**[१]' इति ग्रन्थेनाविसंवादित्वं स्मृतेः प्रत्यपीपदत् ।

### *३.४ स्मृतेर्याथार्थ्यविषयेऽद्वैतविशिष्टाद्वैतसिद्धान्तः*

वेदान्तपरिभाषायां धर्मराजाध्वरीन्द्रैः स्मृतिव्यावृत्तं, स्मृतिसाधारणमित्युभयविधं प्रमात्वं न्यरूपि-

'[२]**तत्र प्रमाकरणं प्रमाणम् । तत्र स्मृतिव्यावृत्तं प्रमात्वम् अनधिगताबाधितविषयज्ञानत्वम्, स्मृतिसाधारणं त्वबाधितविषयज्ञानत्वम्**' इति ।

विशिष्टाद्वैतसिद्धान्ते श्रीवेङ्कटनाथाचार्यैः स्मृतिप्रामाण्यं समर्थितम्, स्मृतिसाधारण्येन च प्रमा लक्षिता-

'[३]**तत्रास्मदीया एव केचिदन्यथाख्यातिमिच्छन्तः स्मृतेः प्रामाण्यमनिच्छन्तः सम्यगनुभवः प्रमेति लक्षयन्ति । उभयमिच्छन्तः यथार्थज्ञानं प्रमेति । उभयमनिच्छन्तोऽनुभूतिः प्रमेति । वयं तु ब्रूमः– यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमेति ।**

---

१. प्रकरणपञ्चिका – ११३ - पृ.९६. २. वेदान्तपरिभाषा- पृ. ९.

३. न्यायपरिशुद्धिः – प्रमालक्षणपरीक्षणे – पृ. १५-१६.

'स्मृतिमात्राप्रमाणत्वं न युक्तमिति वक्ष्यते ।
अबाधितस्मृतेर्लोके प्रमाणत्वपरिग्रहात् ॥' इति ।

एवं सर्वैरपि दर्शनकारैः स्मृतेर्याथार्थ्यमभ्युपगतम् । परन्तु प्रमात्वं तस्याः नास्तीति नैय्यायिकाः मीमांसकाश्च । याथार्थ्याद्भिन्नमेव प्रमात्वम् । तच्चाभियुक्तव्यवहाराधीनम् । स्मृतौ प्रमेति कणाददि-व्यपदेशाभावान्न प्रमात्वमिति तेषां राद्धान्तः । परन्तु द्वैतसिद्धान्ते प्रमालक्षणेऽनुभवत्वानिवेशात् स्मृतौ याथार्थ्यापरपर्यायप्रामाण्यं वर्तत इति सिद्धान्तितम् ।

## ४. *प्रमाणविभागः*

### ४.१. *द्वैतसिद्धान्ते प्रमाणविभागः*

पूर्वलक्षितं प्रमाणं केवलप्रमाणमनुप्रमाणं चेति द्विविधमिति द्वैतसिद्धान्तः । तत्र यथार्थज्ञानं केवलम्[१] । इदं च साक्षाज्ज्ञेय-विषयीकारितया केवलमित्युच्यते । केवलप्रमाणसाधनमनुप्रमाणम् । करणानि विषयस्य ज्ञेयत्वं[२] ज्ञानजनकतया सम्पादयन्तीति तेषामप्यनु-प्रमाणशब्दवाच्यता ।

[३]तत्र केवलप्रमाणमपि द्विविधम् । चैतन्यं मनोवृत्तिरूपं चेति । चैतन्यमेव स्वरूपज्ञानमित्युच्यते । केवलप्रमाणम्- ईश्वरज्ञानं लक्ष्मी-ज्ञानं योगिज्ञानमयोगिज्ञानं चेति चतुर्धा भिद्यते । तत्रेश्वरज्ञानं लक्ष्मी-ज्ञानं च स्वरूपमेव, न तयोर्मनोवृत्तिरूपत्वम् । योगिज्ञानायोगि-ज्ञानयोस्तु स्वरूपबाह्यताभेदेन द्विरूपताऽभ्युपगता ।

---

१. प्रमाणपद्धतिः – पृ. ९१.

२. श्रीमन्न्यायसुधा– पृ. २५१६.

३. श्रीमन्न्यायसुधा – पृ.२५१८

तत्र पूर्वोक्तं चैतन्यज्ञानं त्रिविधम् । उत्तममध्यमाधमभेदात् । तत्रोत्तमं यथार्थमेव । मध्यमं मिश्रम् । अधममयथार्थमेव । द्वितीयं मनोवृत्तिरूपं केवलप्रमाणमपि प्रत्यक्षज्ञानम्, अनुमितिः, शाब्दमिति त्रिविधम् । तत्साधनमनुप्रमाणमपि प्रत्यक्षानुमानागमभेदात् त्रिविधम्[१] ।

तत्र निर्दोषार्थेन्द्रियसन्निकर्षः, निर्दुष्टार्थसन्निकृष्टनिर्दुष्टेन्द्रियं वा प्रत्यक्षम्[२] । निर्दोषोपपत्तिरनुमानम् । निर्दोषः शब्दोऽदुष्टवाक्यं वाऽऽगमः[३] ।

प्रत्यक्षलक्षणे इन्द्रियशब्देन ज्ञानेन्द्रियं गृह्यते । तद् द्विविधम् । प्रमातृस्वरूपं प्राकृतं चेति । तत्र स्वरूपेन्द्रियं साक्षीत्युच्यते । तस्य विषयाः – आत्मस्वरूपं तद्धर्मा अविद्या मनस्तद्वृत्तयो बाह्येन्द्रिय-ज्ञानसुखाद्याः कालोऽव्याकृताकाशश्चेत्याद्याः । स च स्वरूपज्ञान-मभिव्यनक्ति[४] ।

प्राकृतं घ्राणरसनचक्षुस्त्वक्श्रोत्रमनोभेदात् षड्विधम् ।

आगमोऽपि द्विविधः । अपौरुषेयः पौरुषेयश्चेति । तत्रापौरुषेयो वेदः । पौरुषेयोऽन्यः[५] । इत्येवं प्रमाणविभागविषये द्वैतसम्प्रदायः ।

---

१. **'अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यतः'** अनुव्या. पृ. ८२, श्लोक - ४५६.

२. प्रमाणपद्धतिः – पृ.१२६. **'निर्दोषेन्द्रियसंयोगः प्रत्यक्षमिति गीयते'**

(बृहद्भाष्योक्तब्रह्मतर्कस्मृतिः – ५-८-।)

३. **'अदुष्टमिन्द्रियं त्वक्षं तर्कोऽदुष्टस्तथाऽनुमा । आगमोऽदुष्टवाक्यं च ...॥'**

(वि.त.वि.उदा.ब्र.त. स्मृतिः – परिच्छेदः – १)

४. प्र.पद्धतिः – पृ. १२६.

५. प्रमाणपद्धतिः – पृ. ४२८.

### ४.१.१. द्वैतसिद्धान्ते प्रत्यक्षलक्षणम्

[१]निर्दोषार्थेन्द्रियसन्निकर्षः [२]प्रत्यक्षमित्युक्तम् । तत्र अर्थशब्देनेन्द्रिय-विषया गृह्यन्ते । निर्दोषाणामर्थानां निर्दोषाणामिन्द्रियाणां च सन्निकर्षः प्रत्यक्षमित्युच्यते । इन्द्रियार्थदोषाश्च अतिदूरस्थत्वम्, अतिसामीप्यम्, सौक्ष्म्यम्, व्यवधानम्, समानद्रव्याभिघातः, अनभिव्यक्तत्वं, सादृश्यम्– इत्यादयः । एतेषां प्रमाप्रतिबन्धकत्वमेव दोषत्वम् । प्रमाप्रतिबन्धकत्वं च प्रमाऽजनकत्वेन, तद्विपरीतकार्यजनकत्वेनेति द्वेधा सम्भवति ।

तत्र पूर्वोक्तदोषेषु– अतिदूरस्थत्वं मेर्वादौ । अतिसामीप्यं चक्षुःपक्ष्मादौ । सौक्ष्म्यं किञ्चिद्दूरस्थकेशादौ । व्यवहितत्वं कुड्यादि-व्यवहितघटे । समानाभिघातो नाम बलवत्सजातीयसम्बन्धः, स च क्षीरनीरादौ । अनभिव्यक्तत्वं स्वाभिव्यञ्जकराहित्यम्, तच्चान्धकारस्थ-घटादौ । रजतादिना चाकचक्यादिसादृश्यं शुक्त्यादौ दोषत्वेन प्रसिद्ध-मिति ज्ञातव्यम् ।

### ४.१.२. द्वैतमतेऽनुमानप्रमाणलक्षणम्

[३]निर्दोषोपपत्तिरनुमानम्[४] । तत्र यत्सद्भावे लिङ्गाभिमतम् अनुमिति-रूपप्रमां न जनयति स उपपत्तिदोषः । प्रमाजनकत्वाभावश्च संशय-विपर्ययजनके ज्ञानाजनके च लिङ्गाभिमतेऽनुगत इति नाननुगमशङ्केति भावः ।

---

१. प्रमाणपद्धतिः – पृ. १२४.

२. '**विषयान् प्रतिस्थितं ह्यक्षं प्रत्यक्षमिति गीयते**' ॥ अनुव्या. पृ.२४७, श्लो - १३३२.
प्रायेणासन्नाव्यवहितवर्तमानकतिपयपदार्थग्राहकं प्रत्यक्षमिति यावत् ।

३. प्रमाणलक्षणम् – पृ. ३४.

४. '**प्रत्यक्षशब्दानुसारादनुमेति प्रकीर्तिता**' अनुव्या. पृ. २४७, श्लो. १३३३.
प्रायेणानासन्नातीतानागतव्यवहितार्थगोचरमनुमानम् ।

उपपत्तिदोषो द्विविधः[१] । अर्थवचनदोषभेदात् ।

तत्र साक्षादुपपत्तेरेव दोषौ विरोधासङ्गती । तद्द्वारा वचनस्यापि । वचनदोषौ न्यूनाधिक्ये । वचनद्वारेणार्थस्यापि । तत्र योग्यताभावो विरोधः । आकाङ्क्षाविरहोऽसङ्गतिः । अवश्यवक्तव्यस्यैकदेशमात्रवचनं न्यूनं सन्निध्यभावविशेषः । आकाङ्क्षितस्यैवान्येन कृतकार्यस्य वचनमाधिक्यम् इत्यादय उपपत्तिदोषा अनवसरग्रस्तत्वान्नात्रोपक्षिप्यन्ते ।

### *४.१.३. आगमलक्षणम्*

शब्दो निर्दुष्ट एव प्रमाणम् । श्रीजयतीर्थाः **'निर्दोषः शब्द आगमः'**[२] इति [३]आगमलक्षणमूचिरे । शब्ददोषाश्च अबोधकत्वं, विपरीतबोधकत्वं, ज्ञातज्ञापकत्वम्, अप्रयोजनत्वम्, अनभिमतप्रयोजनत्वम्, अशक्यसाधनप्रतिपादनं, लघूपाये सति गुरूपायोपदेशनमित्यादयो भवन्ति ।

तत्राऽद्यमबोधकत्वं निरभिधेयत्वेन, अन्वयाभावेन, आकाङ्क्षाऽऽसत्त्यभावाभ्यां वा भवति ।

जबगडदेत्यादौ निरभिधेयत्वेन, 'कुण्डमजाजिनं दशदाडिमानि षडपूपाः' इत्यादावन्वयाभावेन, 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यादावाकाङ्क्षाभावेन, विलम्बेनोच्चारिते 'गामानय' इत्यादावासत्त्यभावेनाबोधकत्वं दोषः ।

'सर्वं क्षणिकम्' इत्यादिप्रतिवाद्युक्तवाक्ये वक्तुरनाप्तत्वादिना विपरीतबोधकत्वं द्रष्टव्यम् ।

१. प्रमाणपद्धतिः – पृ. २४०.        २. प्रमाणपद्धतिः – पृ. ३७४.

३. स्वातन्त्र्येणाशेषार्थविषयकः आगमः ।

स्फीतालोकमध्यवर्तिघटप्रतिपादकवाक्यस्य पुनरुक्तस्य वा ज्ञातज्ञापकत्वं दोषः ।

काकदन्तपरीक्षादि[१]वाक्यस्याप्रयोजनत्वं दोषः । विरक्तं प्रति वाणिज्योपदेशवाक्यस्यानभिमतप्रयोजनत्वं दोषः । रोगार्तं प्रति हिममहीधरोत्तरसानुवर्तिसिद्धसञ्जीविनीकथनपरवाक्यस्याशक्यसाधनप्रतिपादकत्वं दोषः ।

सुरसरित्तटे निविष्टं तृषितं प्रति कूपखननोपदेशे, लघूपाये सति गुरूपायोपदेशनं दोषः । भ्रान्तवाक्ये भ्रान्तत्वं, प्रतारकवाक्ये प्रतारकत्वमेव दोषः ।

[२]प्रमाणभूतः शब्दः पदवाक्यात्मकः । न तु वाक्यात्मक एव । सिद्धान्ते वैदिकानामपि पदानां महायोगवृत्त्या परमात्मनि प्रामाण्यस्योक्तेः । विभक्त्यन्ता वर्णाः पदम् । आकाङ्क्षायोग्यतासन्निधिमन्ति पदानि वाक्यम् ।

[३]आगमश्च सम्यग्ज्ञात एव बोधकः । [४]स च द्विविधः । नित्योऽनित्यश्चेति । नित्यो वेदः । अनित्यः पुराणादिः । वर्णानां च सर्वत्र नित्यत्वेऽपि प्रबन्धविशेषस्य नित्यत्वानित्यत्वाभ्यामयं विभागः । इति शब्दनिरूपणम् ।

---

१. आदिपदेन '**काकस्य कति वा दन्ता मेषस्याण्डं कियत्पलम् । कम्बले कति रोमाणि का वार्ता चोरमण्डले ॥**' इत्यादीनां परिग्रहः ।

२. प्र. ल.टी.पृ. ३८.

३. '**आ समन्ताद् गमयति धर्माधर्मौ परं पदम् । यच्चाप्यतीन्द्रियं त्वन्यत् तेनासावागमः स्मृतः ।**' अनुव्या. पृ – २४७. श्लोक – १३३४.

४. '**आगमो द्विविधो ज्ञेयो नित्योऽनित्यस्तथैव च**' – वि.त. वि.उदा.ब्रह्मतर्कवचनम् – पृ. ४४३. परि – १.

### ४.२ . प्रमाणविषये चार्वाकमतविमर्शः

आगमानुमानयोरप्रामाण्यमिति वदन्तश्चार्वाकाः प्रत्यक्षमेकमेव प्रमाणमित्याहुः । परन्तु एवं वदतां तेषामिष्टानिष्टसाधनताज्ञाना-भावाज्जीवनमेवानुपपन्नं स्यात्[१] । लोकस्तावत् कस्मिंश्चिदिष्टसाधनतां ज्ञात्वा प्रवर्तते, अनिष्टसाधनतां विज्ञाय ततो निवर्तते च । इष्टानिष्ट-साधनताज्ञानं तावदनुमानेन भवति । अनुमानप्रामाण्यानङ्गीकारे च चार्वाकाणामिष्टानिष्टसाधनताज्ञानोपायाभावेन जातमात्रस्य शिशोः स्तन्यपानादौ प्रवृत्तिः न सिद्ध्येत् । तथा च तन्मते जीवनमेवानुपपन्नं स्यात् । न च प्रत्यक्षमिष्टानिष्टसाधनताज्ञानोपायः । [२]साधनत्वस्या-तीन्द्रियकालादिगर्भतयाऽतीन्द्रियत्वात् ।

### ४.३ . प्रमाणविभागविषये बौद्धवैशेषिकमतसमीक्षा

प्रत्यक्षानुमाने द्वे एव प्रमाणे इति बौद्धाः । तथा च धर्मकीर्ति-वचनम्[३]-

**'मानं द्विविधं विषयद्वैविध्यात् ; शक्त्यशक्तितः । अर्थक्रियायाम्...।'**

यत् प्रमाणं तद् द्विविधं, प्रत्यक्षानुमानभेदात् । विषयस्य स्वलक्षणसामान्यलक्षणरूपतया द्वैविध्यात् । तत्र शब्दादिकमपि हि प्रमाणं भवत् सविषयं वक्तव्यम् । विषयश्च स्वसामान्यलक्षणादतिरिक्तो नास्ति । ततस्तद्विषयत्वे प्रत्यक्षानुमानतैव[४] इति ।

१. प्र.ल. टी. पृ – ३१.

२. यज्जातीयाधिकरणक्षणाव्यवहितक्षणोत्तरव्यापककार्योत्पत्तिकत्वं तत् साधनत्वम् ।

३. प्रमाणवार्तिकम् – पृ. ८३. २-१ प्रत्यक्षप्रकरणे । **'द्विविधं सम्यग् ज्ञानम्'**, 'प्रत्यक्षमनुमानं चेति' । (न्या.बि.प्रकरणम् - सू - २,३.)

४. प्रमाणवार्तिकवृत्तिः – पृ.८३.

वैशेषिका शब्दस्य प्रामाण्यमङ्गीकृत्यापि [1]तमनुमानेऽन्तर्भावयन्ति । एतेषामनुभवविरोधः बौद्धैः सह समानः दोषः[2] । आगमो न बोधकः, बोधकोऽपि न यथार्थ इति हि सौगतवादः । तत्र 'शब्दादर्थं प्रत्येमि' इति गृहीतसङ्गतिकस्य पुरुषस्य शब्दादर्थप्रतीतेः साक्ष्यनुभवसिद्धत्वाद् आगमो न बोधक इत्यङ्गीकारेऽनुभवविरोधः । अर्थसंवादादिना शब्दस्य यथार्थबोधकत्वस्याप्यनुभवसिद्धत्वेन बोधकोऽपि न यथार्थ इत्यभ्युपगमेऽप्यनुभवविरोधः । व्यास्याद्यननुसन्धान एव वाक्यार्थ-प्रतीतेरनुभवसिद्धत्वाद् वैशेषिकपक्षेऽप्यनुभवविरोधः ।

पूर्वोक्तेषु त्रिषु पक्षेष्वपि शाब्दयामीत्यनुव्यवसायानुपपत्तिः साधारणो दोषः ।

### *४.४. प्रमाणविभागविषये न्यायसिद्धान्तः*

नैयायिकैः प्रत्यक्ष-अनुमान-उपमानशब्दाश्चेति चतुर्धा[3] प्रमा-करणानि (प्रमाणानि) विभक्तानि । अत्र साक्षात्करोमि, अनुमिनोमि, उपमिनोमि, शाब्दयामि- इति अनुव्यवसायाः प्रमाणानि ।

ननु अर्थापत्ति-अनुपलब्धि-ऐतिह्यानां प्रमाणान्तराणां विद्यमान-त्वात् कथं प्रमाणानां चातुर्विध्यमिति चेत्, न । अनुमानेऽर्थापत्त्य-नुपलब्ध्योः, शब्दे चैतिह्यस्यान्तर्भावान्न पृथक् प्रमाणत्वं तेषामित्याशयः ।

तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् । प्रमाभूतप्रत्यक्षलक्षणं तु-

---

१. 'शब्दादीनामनुमानेऽन्तर्भावः, समानविधित्वात्' प्रशस्तपादभाष्यम् – पृ – ५१२.
'शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्' – वै. सू.५०. आह्निकम् – १.

२. प्र.ल.टी – ३१.

३. 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' (न्यायसूत्रम् - १-१-३)

**'इन्दियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यम् अव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्**[१]' इति गौतमेनाभिहितम्। इन्द्रियस्यार्थेन सह यद् ज्ञानमुत्पद्यते तत् प्रत्यक्षमिति तस्य समुदितार्थः । मरुमरीचिकादौ जयमानजलभ्रमेऽतिव्याप्तिवारणायाव्यभिचारीति पदमुपात्तम् । अव्यपदेशपदेन व्यवसायात्मकपदेन च क्रमेण निर्विकल्पकसविकल्पक-प्रत्यक्षयोः परिग्रहः ।

अनुमितिकरणमनुमानम् । परामर्शजन्यं ज्ञानमनुमितिः । व्याप्यस्य पक्षवृत्तिताज्ञानं परामर्शः[२] । इत्यनुमानप्रमाणसङ्क्षेपः ।

उपमितिकरणमुपमानम् । सञ्ज्ञासञ्ज्ञिसम्बन्धज्ञानमुपमितिः[३] ।

[४]शाब्दप्रमां प्रति पदज्ञानं करणम् । वृत्तिज्ञानसहकृतपदजन्य-।पदार्थस्मरणं व्यापारः । शाब्दबोधः फलम् ।

अत्र न्यायसिद्धान्ते वाक्यं द्विविधम् । वैदिकं लौकिकं च । वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम् । लौकिकं तु आप्तोक्तं प्रमाणम् । अन्यदप्रमाणम् । [५]आकाङ्क्षादिरहितं वाक्यमप्रमाणम् । यथा गौरश्वः पुरुषो हस्तीति वाक्यमप्रमाणम् । आकाङ्क्षाविरहात् ।

१. गौतमसूत्रम् – १-१-४.

२. **'व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत्। अनुमायां ज्ञायमानं लिङ्गं तु करणं न हि। अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥'** (कारिकावली - २ - १)

३. **'ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम्। सादृश्यधीः गवादीनां या स्यात् सा करणं मतम् ॥ वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते। गवयादिपदानान्तु शक्तिधीरुपमाफलम् ॥'** (कारिका.... ३-१,२,) ।

४. **'पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः। शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी** ॥'(कारिकावली - ४- १)

५. तर्कसङ्ग्रहः – शब्दखण्डः – पृ. १८९.

वह्निना सिञ्चतीति वाक्यमप्रमाणम् । योग्यताविरहात् । प्रहरे प्रहरेऽसहोच्चरितानि गामानयेत्यादिपदान्यप्रमाणम् । सन्निध्यभावात् । तस्मादाकाङ्क्षादिमद् वाक्यं प्रमाणम् । वाक्यार्थबोधे आकाङ्क्षादिज्ञानं कारणमिति प्रमाणचातुर्विध्यविषये न्यायसिद्धान्तः । मीमांसका अपि उपमानस्य पृथक् प्रामाण्यमाचक्षत । परन्तु द्वैतसिद्धान्ते उपमानं तावद् उक्तेषु त्रिषु प्रमाणेष्वन्तर्भाव्यते ।

### *४.४.१. उपमानस्य पृथक्प्रामाण्यनिरासः*

#### *४.४.१.१.मीमांसकोक्तोपमानस्यान्तर्भावः*

[१]सादृश्यज्ञानसाधनमुपमानम्[२] । सादृश्यज्ञानं च त्रेधा भवति ।

**क.** चक्षुरुन्मीलनानन्तरं जायमानं 'तेनायं सदृशः' इति,'एतौ सदृशौ' इति वा ज्ञानम् ।

**ख.** 'इमौ सदृशौ' इत्युपदेशानन्तरं जायमानज्ञानसाधनम् ।

**ग.** स्मर्यमाणगतसादृश्यज्ञानसाधनभूतं गृह्यमाणपिण्डगतसादृश्य-ज्ञानम् इति ।

तत्र 'तेनायं सदृशः, सदृशाविमौ' इत्यादिज्ञानं प्रत्यक्षजमेव । एवं च तत्साधनीभूतमुपमानं प्रत्यक्षेऽन्तर्भवति । द्वितीयमिमौ सदृशौ इति वाक्येन जायमानं त्वागमेऽन्तर्भवति । गृह्यमाणे वस्तुनि स्मर्यमाण-प्रतियोगिकसादृश्यदर्शनात् स्मर्यमाणे यद् गृह्यमाणप्रतियोगिक-सादृश्यं प्रत्येति तदनुमानमेव ।

---

१. प्रमाणपद्धतिः – पृ. ४३७.

२.'**दृष्ट्वा सदृशमेवान्यं पूर्वदृष्टे तु वस्तुनि । एतत्सदृशताज्ञानमुपमानं प्रकीर्तितम् ॥**'
वि.त.वि.उदा. ब्रह्मतर्कस्मृतिः - परि-१. पृ.४२६.

तथाहि पत्तने गामनुभूय वनं गतस्य पुरुषस्य गवयदर्शने सति स पुरुषो गृह्यमाणगवये स्मर्यमाणपत्तनस्थगोसादृश्यं ज्ञात्वा स्मर्यमाणगोपिण्डे यद् गृह्यमाणगवयसादृश्यं 'गृहे स्थिता गौः गृह्यमाणगवयसदृशी, अस्य तत्सदृशत्वात्' इत्येवं प्रकारेण विजानाति । तथा चात्रोपमानत्वेन यन्मीमांसकाभिमतं गवयनिष्ठसादृश्यज्ञानं तदनुमानेऽन्तर्भवति ।

यद्यपि स गौरेतद्गवयसदृशः, अस्य गवयस्य तद्गोसदृशत्वात् । यो यत्सदृशः स तत्सदृशः, यथा यमो यमान्तरेणेत्यनुमाने लिङ्ग-लिङ्गिनोर्वैय्यधिकरण्यम् । तथाऽपि हेतुसाध्ययोर्व्यधिकरणत्वस्या-षत्वात् तथा प्रयोगः साधुरेव ।

अथवा 'विमता गौर्गवयसदृशी गवयगतसादृश्यप्रतियोगित्वात् । यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः । यथा यमो यमान्तरेणेति [१]समानाधिकरणयोर्लिङ्गलिङ्गिभावसम्भवेन सादृश्यदर्शनस्य पृथक्-प्रामाण्यं नास्ति ।

### ४.४.१.२. *नैयायिकोक्तोपमानस्यानुमानान्तर्भावः*

[२]नव्यनैयायिकमते उपमितिकरणमुपमानम् । सञ्ज्ञासञ्ज्ञिसम्बन्ध-ज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानम् । अतिदेशवाक्यार्थस्मरण-मवान्तरव्यापारः । अतिदेशवाक्यार्थश्च क्वचित्साधर्म्यं क्वचिद् वैधर्म्यं क्वचिद्धर्ममात्रमिति त्रिविधो भवति । यथा कश्चिद् गवयपदार्थमजानन् 'गोसदृशो गवयः' इत्यतिदेशवाक्यानुभूतमर्थं प्रत्यक्षे गवये प्रत्यभि-जानन् गवयपदं स्मरन् गवयपदस्य 'अयं गवयवाच्यः' इति गवये शक्तिं प्रत्येति । तदिदं साधर्म्योपमानम् ।

---

१. श्रीमन्न्यायसुधा - पृ. ४४१२.　　२. तर्कसङ्ग्रहः – पृ. १७९.

वैधर्म्योपमानं तु 'गवादिवद् द्विशफो न भवत्यश्वः' इत्यतिदेशवाक्यार्थस्मरणाद् अश्वपदस्याश्वे सङ्गतिग्रहणरूपम् । धर्ममात्रोपमानं च 'दीर्घग्रीवादिधर्मवान् पशुरुष्ट्रः' इति वाक्यार्थस्मरणादुष्ट्रे उष्ट्रपदवाच्यत्वज्ञानम् ।

[1]एतत् त्रिविधमप्युपमानमनुमानेऽन्तर्भवति । तत्र वाच्यवाचकसम्बन्धग्रहः गवयादिदर्शनोत्तरमनुमानेन भवति । अनुमानप्रयोगप्रकारस्त्वित्थम्–

गवयशब्दः गवयस्य वाचकः, असति वृत्त्यन्तरे वृद्धैः प्रयुज्यमानत्वात् । यो यत्रासति वृत्त्यन्तरे वृद्धैः प्रयुज्यते, स तस्य वाचको भवति । यथा गोशब्दो गोत्वस्य, प्रयुज्यते चायमसति वृत्त्यन्तरे गवयशब्दः पुरोवर्तिनि, तस्मात् तस्य वाचक इति ।

अथवा अयं गवयशब्दवाच्यः, अगोत्वे सति गोसदृशत्वादिति । तत्रातिदेशवाक्यं पूर्वोक्तानुमाने व्याप्तिग्राहकत्वेनोपयुज्यते । तस्मादुपमानस्य न पृथक् प्रामाण्यमिति भावः । तथा च भासर्वज्ञोऽपि त्रिविधान्येव प्रमाणान्यङ्गीचकार । तथा च तद्वचनम्– '**त्रिविधं प्रमाणं, प्रत्यक्षमनुमानमागम इति**[2]' इति ।

### *४.५. प्रमाणविभागविषये मीमांसकसिद्धान्तः*

#### *४.५.१. भाट्टाभिमतप्रमाणवैविध्यम्*

मीमांसकेषु भाट्टास्तावत्, प्रत्यक्ष – अनुमान – शास्त्र – उपमान– अर्थापत्ति – अनुपलब्ध्याख्यानि षट्प्रमाणान्यूरीकुर्वन्ति । तत्र

१. श्रीमन्न्यायसुधा – पृ. ४४१४.

२. न्यायसारः – पृ. १०५.

नैयायिकैरभ्युपगतानि प्रत्यक्ष-अनुमान-उपमानशब्दाख्यानि चत्वारि प्रमाणानि प्रसिद्धतया भाट्टैः स्वीकृतानि । परन्तु जीवतो चैत्रस्य गृहेऽसत्त्वं बहिःसत्त्वं प्रत्याययतीति रीत्या प्रत्यक्ष-अनुमिति-उपमिति-शाब्दाख्यासु चतसृषु प्रमितिष्वनन्तर्भूतायाः प्रमायाः साधकत्वेन सिद्धाऽर्थापत्तिः नोक्तप्रमाणचतुष्केऽन्तर्भावमर्हतीति प्रमाणान्तरतयाऽभ्युपगता ।

इमानि पञ्च प्रमाणानि भावपदार्थमात्रगोचराणि । नैतानि समर्थान्यभावं प्रत्याययितुम् । अतोऽभावसङ्ग्रहार्थमनुपलब्ध्यपरपर्याय-मभावाख्यं प्रमाणान्तरमङ्गीकरणीयमिति वदन्तो भाट्टाः षट्प्रमाण-वादमुपस्थापितवन्तः[१] ।

उपलब्धियोग्यत्वे सत्यनुपलब्धिरेवाभावप्रमाणम् । तेनाभावप्रमिति-र्जायते ।

### ४.९.२. *अत्र प्राभाकरसिद्धान्तः*

तत्र प्राभाकरसिद्धान्ते, प्रत्यक्ष-अनुमान-शास्त्र-उपमान-अर्था-पत्त्याख्यानि पञ्चैव प्रमाणानि[२] । अभावस्याधिकरणस्वरूपत्वेन प्रत्येकप्रमाणत्वानङ्गीकारात्[३] ।

इदमत्राऽकलनीयम् । यत् **'शब्दः'** इति नैयायिकैश्चतुर्थं प्रमाण-

---

१. **'प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते । वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥'** (श्लो.वा.पृ.३३९, श्लो-१. – अभावप्रामाण्यवादे)

२. **'तत्र पञ्चविधं मानं प्रत्यक्षमनुमा तथा । शास्त्रं तथोपमानार्थापत्ती इति गुरोर्मतम् ॥'** (प्रकरण. प. ५.३)

३. **'अभावाख्यो न मेयोऽस्ति यदर्थं प्रार्थ्यते पुनः । प्रमाणानामनुत्पादः साधु तल्लक्षणं कृतम् ॥** (प्रकरण. प. ५-७०)

मङ्गीकृतं तदेव मीमांसकैः **'शास्त्रम्'** इति नाम्ना तृतीयप्रमाणतया न्यरूपि । शाबरभाष्यानन्तरमेषः सम्प्रदायस्तैः प्रवर्तितो दृश्यते ।

इदं शास्त्रप्रमाणं भाट्टमते पौरुषेयापौरुषेयभेदेन द्विधा विभज्यते । तत्राऽऽप्तवाक्यमेव पौरुषेयप्रमाणम् । वेदवाक्यमेवापौरुषेयम् । अनाप्तप्रणीतत्वरूपदोषराहित्यादुभयमपि प्रमाणमेव ।

प्राभाकरसिद्धान्ते तावत् लौकिकवैदिकद्विविधशब्दमध्ये वैदिकशब्द एव शास्त्रमिति सञ्ज्ञां लभते ।

स एव प्रमाणम् । लौकिकस्तु शब्दस्तन्मते न प्रमाणपद-वीमध्यारोहति । स्वयं लौकिकवचसामसत्यभूयिष्ठत्वात् शङ्क्यमानार्थ-व्यभिचारत्वाच्च[१] ।

लोके पुरुषाः प्रायेणानन्वितार्थाभिधायकान्येव पदानि भ्रमेण प्रमादेनाशक्त्या वा प्रयुञ्जानाः दृश्यन्ते । ततश्च क्वचित् तदुक्तीना-मन्विताभिधानसामर्थ्ये सत्यपि अनन्वितार्थत्वशङ्कया नान्वयनिश्चयो भवति । अतो लौकिकवचनानामप्रामाण्यमेव । कथं तर्हि लौकिकवाक्येभ्यः प्रवृत्तिर्दृश्यते ? इति चेदुच्यते । अर्थसंशयेनैव लोकप्रवृत्तिः । अर्थसंशयेऽपि लोके व्यवहारः दृष्टचरः । प्रवर्तन्ते हि जनाः सन्दिग्धायामपि वृष्टौ वृष्ट्यायत्तफलेषु कृष्यादिषु[२] ।

ननु वेदेऽपि एवमेवार्थसंशयेन प्रवृत्तिः शक्यनिर्वाहा । अतस्तत्रापि अनन्वितार्थत्वशङ्कयाऽन्वयानिश्चायकत्वं स्यात् । तथा च

१. **न शास्त्रव्यतिरिक्तं शाब्दमस्ति । यद् विज्ञानमसन्निकृष्टेऽर्थे तत् शास्त्रं स्यात् । न च वेदव्यतिरेकेण तत् सम्भवति । लौकिकं वाक्यं नार्थे स्वयं निश्चयमुत्पादयति लौकिकवचसामनृतभूयिष्ठत्वादर्थव्यभिचारस्य शङ्कितत्वात् ।** (प्रकरणपञ्चिका - पृ. २११, - सं - २४३)

२. प्रकरण.प. – पृ. २१२- सं-२४३.

वैदिकशब्दोऽप्यप्रमाणं भवेत् । इति चेत्, न तद् युक्तम् । वेदस्यापौरुषयत्वेनाशक्त्यादिवक्तृपुरुषदोषाधीनानन्वितार्थत्वशङ्काया तत्र असम्भवात्[१] ।

तस्माद् वैदिके निश्चये व्यभिचारशङ्काभावात् सर्वोऽपि वैदिकः शब्दः प्रमाणम् । स एव शास्त्रशब्दव्यपदेश्यः ।

[२]स च शब्दः प्राभाकरमते द्विविधः । प्रत्यक्षोऽनुमेयश्चेति । प्रत्यक्षः शब्दश्चाध्ययनविधिपरिगृहीतः स्वाध्यायात्मको वेदः । यश्च प्रत्यक्षतः सर्वैरुपलभ्यते ।

काश्चन श्रुतयो मूलरूपेण नोपलभ्यन्ते । उपलब्धस्मृतिशिष्टाचारादिभिरनुमेया भवन्ति । ता अनुमेयशब्देष्वन्तर्भवन्ति । यथा 'अष्टकाः कर्तव्याः' इति विधायकं स्मृतिवचनमस्ति । इयं स्मृतिः त्रैवर्णिकैरविरोधेन परिगृहीता । नात्र काचन श्रुतिरुपलभ्यते । अत एतत्स्मृत्या मूलशास्त्रमनुमीयते[३] । एवमुभयविधं शास्त्रमसन्निकृष्टार्थविषयं प्रमाणमिति प्राभाकरसिद्धान्तः ।

### ४.६. *मीमांसकमतसमीक्षा*

#### ४.६.१. *लौकिकशब्दाप्रामाण्यवादिप्राभाकरमतसमीक्षा*

प्राभाकरमतेऽपौरुषेयस्य पृथक्प्रामाण्येऽपि पौरुषेयस्य प्रामाण्यं नास्ति । पुरुषवचसां प्रायेणानृतभूयिष्ठत्वेनानन्वितार्थत्वशङ्कयाऽन्वयानिश्चयादिति । अत्रैवं वक्तव्यम्[४] । वेदेऽपि शब्दोत्थापित-

---

१. प्रकरण. प. पृ. २१२- सं-२४५-२४६.

२. प्रकरण. प. – पृ.२२० - सं - २४९.

३. प्रकरण. प. पृ. २२० – २४९.

४. वि.त.वि. टीका. पृ.४४३.

स्याप्यर्थस्य व्यभिचारेण अनन्वितार्थत्वशङ्कायाः सम्भवेनान्वया- निश्चायकत्वमस्त्येव । तत्रापौरुषेयत्वेन शङ्का-निवृत्तिवदत्रापि आप्तोक्तत्वादिना शङ्कानिवृत्तिर्भविष्यति । तथा च उभयत्र आकाङ्क्षादिमत्पदकदम्बकत्वसाम्येन शब्दात् समानोऽन्वयनिश्चयः, उभयत्र सम्भाविताप्रामाण्यशङ्कानिवृत्तिमात्रं तु अपौरुषेयत्व- आप्तोत्वादिरूपविभिन्नोपायेनेति लोकवेदयोः शब्दप्रामाण्यं समानमिति सिद्धान्त एव गरीयान् ।

### ४.६.२. *अर्थापत्त्यादीनामनुमानेऽन्तर्भावः*

मीमांसकेषु भाट्टास्तावत् षट्प्रमाणवादिनः । तैः प्रतिपादितेषु षट्सु प्रमाणेषु- उपमानं तावद् यथासम्भवं प्रत्यक्षादिष्वन्तर्भवति (४.४. १.१.) इति प्रतिपादितम् । अर्थापत्तिरपि अनुमानेऽन्त-र्भवतीति श्रीमदानन्दतीर्थाः जगदुः[१] । अनुपपद्यमानप्रमितिर्हि अर्थापत्तिः । सा द्विविधा । श्रुतार्थापत्तिर्दृष्टार्थापत्तिश्चेति । तत्राऽद्या यथा, 'जीवन् चैत्रो गृहे नास्ति' इति श्रुतवतो जीवतो गृहाभावप्रमितिः । द्वितीया यथा– जीवतो गृहाभावं दृष्टवतस्तत्प्रमितिः । तया बहिःसत्त्वप्रमा भवतीति साऽनुमानेऽन्तर्भवति[२] । विमतो बहिरस्ति जीवनवत्त्वे सति गृहेऽ- सत्त्वात् । यथाऽहम् इति, अत्र अनुमानप्रयोगः । तस्मादर्थापत्तिर्न पृथक्प्रामाण्यमर्हति ।

भाट्टोक्ताभावप्रमाणमपि प्रत्यक्षादित्रिविधप्रमाणान्नातिरिच्यत इति प्रमाणपद्धतौ श्रीजयतीर्थाः[३] ।

अभावज्ञानकरणं हि अभावप्रमाणम् । तत्राभावज्ञानलक्षण-

१. 'अर्थापत्त्युपमेऽनुमाविशेषः' - प्र.लक्षणम् - पृ. ४४.

२. प्र.ल. टी. पृ. ४४.

३. प्रमाणपद्धतिः – पृ.४३९.

प्रमितेर्यथासम्भवमागमादिसाध्यत्वान्न तदर्थं प्रमाणान्तरं कल्पनीयम् । तथा हीदानीं कौरवाद्यभावो भारताद्यागमादवगम्यते । देवदत्तस्य रूपाद्यदर्शनलिङ्गेन चक्षुराद्यभावोऽनुमीयते । आन्तरस्य साक्षिवेद्यस्य सुखादेरभावस्तु साक्षिप्रत्यक्षेणैव वेद्यः[१] । झटिति जायमाना पुरोवृत्तिघटाद्यभावप्रमितिस्तु प्रत्यक्षफलमेव । न त्वनुपलब्धिमात्रजन्या प्रत्यक्षज्ञानत्वात् । योग्यानुपलब्धिस्तु कारणमात्रम्[२] ।

यत्र त्वन्धकारे हस्तप्रसारणादिरूपपरामर्शेन घटाभावं प्रत्येति तदाऽनुपलब्धिः लिङ्गत्वेन रूपेण करणम् । तदा तत्रानुपलब्धिस्त्वनुमायामन्तर्भवति । अत्र घटो नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वादिति ।

ननु कथमेकस्मिन् वस्तुनि प्रत्यक्षानुमानयोः प्रवृत्तिः । कथन्तरां तज्जन्यप्रमायां प्रत्यक्षत्वपरोक्षत्वनिश्चयः ? इति चेन्मैवम् । भाट्टमीमांसकमते घटाद्यभावग्राहकयोग्यानुपलब्धिः षष्ठं पृथक् प्रमाणमिति स्वीकृतम् । सौगतैरनुपलब्धिलिङ्गकमनुमानमेव तदित्यूरीकृतम्[३] ।

वस्तुतः सम्यग् विचार्यमाणे तदुभयमप्यनुपपन्नम् । प्रतियोगिस्मरणवतः पुरुषस्य पुरोवर्तिभूतले चक्षुरादीन्द्रियेणैव घटाभावप्रत्यक्षस्य जायमानत्वात् । इन्द्रियान्वयव्यतिरेकानुसारिणोऽभावज्ञानस्य प्रत्यक्षातिरिक्तप्रमाणजन्यत्वानुपपत्तेः[४] ।

तस्मात् प्रत्यक्षानुमानागमभेदेन त्रीण्येवानुप्रमाणनीति जिज्ञासितं सुसम्पन्नम् ।

---

१. 'प्रत्यक्षान्तर्गतोऽभावः सुखादेर्नियमेन च ' – अनुव्या. पृ. ४४१६. सुधापुस्तके।

२. सिद्धान्तमुक्तावली - पृ. २६२. प्रत्यक्षखण्डे - अनुपलब्धिपरीक्षायाम्।

३. 'प्रतिषेधस्तु सर्वत्र साध्यतेऽनुपलम्भतः' प्रमाणवार्तिकम् – पृ. १०७. का.८५.

४. श्रीमन्न्यासुधा – पृ. ४४१८.

### *४.६.३. सम्भवादीनां त्रिविधप्रमाणेष्वेवान्तर्भावः*

बहुलज्ञानेऽल्पज्ञानं सम्भवः । यथा 'शतमस्यास्ति' इति ज्ञाने पञ्चाशज्ज्ञानम् । तदप्यनुमानेऽन्तर्भवति । देवदत्तः पञ्चाशद्वान् शतवत्त्वात् । यथाऽहमिति प्रयोगसम्भवात् ।

प्रसक्तप्रतिषेधे परिशिष्यमाणे बुद्धिः परिशेषः । यथा देवदत्तयज्ञदत्ता-वेताविति ज्ञाने सति एकस्मिन् 'नायं यज्ञदत्तः' इति प्रतिषेधे देवदत्त-बुद्धिः । इयमनुमानजन्या । 'अयं देवदत्तः देवदत्तयज्ञदत्तयोरन्यतरत्वे सत्ययज्ञदत्तत्वात् । व्यतिरेकेण यज्ञदत्तवत्' इति प्रयोगोपपत्तेः[१] ।

उपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादाः, श्रुतिलिङ्गवाक्यप्रकरण-स्थानानि चानुमानान्येव । 'इदम् एतत्परं तदुपक्रमवत्त्वाद् यद् यदुपक्रमवद् वाक्यं तत् तत्परं, यथा सम्मतम् , इत्यादिरूपेण अनुमानप्रयोगसम्भवात्[२] ।

अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यम् । यथाऽत्र वटे कुबेरोऽस्तीति वाक्यम् । एतत्,

**'वटेवटे वैश्रवणश्चत्वरेचत्वरे शिवः ।**
**पर्वते पर्वते रामः सर्वत्र मधुसूदनः ॥'** इत्याद्यागम एव ।

[३]एवं शाकुनलिप्यक्षरचेष्टानामुक्तेषु प्रत्यक्षानुमानाशब्दाख्येषु त्रिषु प्रमाणेष्वन्तभावो वाच्यः । तथा हि शाकुनविशिष्टस्येष्टार्थानुमापकत्वेन

---

१. 'सम्भवपरिशेषावनुमा' – प्र.ल.पृ. ४३.

२. **'प्रारम्भाद्याश्च युक्तयः । आगमार्थावसित्यर्था नियतव्याप्तयोऽखिलाः ॥ वाक्यं प्रकरणं स्थानं समाख्या च तथाविधाः । कुरुपाण्डववत् तेषामुपपत्तेः पृथग्वचः ॥'** अनुव्या. – पृ. १८६. श्लोक - १००८,१००९.

३. प्रमाणपद्धतिः – पृ. ४३९

शाकुनमनुमानान्तर्गतम् । एवमपशाकुनेऽपीष्टार्थविघातित्वमनुमानं मन्तव्यम् । लिप्यक्षरचेष्टायाश्च वर्णस्मरणहेतुतया प्रत्यक्षेऽन्तर्भावो द्रष्टव्यः ।

ननु मनस एव स्मृतिकारणत्वेन लिप्यक्षरचेष्टादिदर्शनस्य संस्कारोद्बोधे एव चारितार्थ्यात् कथं प्रत्यक्षेऽन्तर्भावः ? इति चेन्मैवम् । यथाऽवान्तरव्यापारसहितम् अर्थोपसर्पणतत्संयोगसहितं चक्षुरादिकं प्रत्यक्षं, तथैव लिप्यादिदर्शनजन्यसंस्कारोद्बोधरूपावान्तरव्यापारसहितस्य मनसः स्मरणकरणत्वे तच्छारीरान्तःप्रविष्टलिप्यादेरपि प्रत्यक्षत्वव्यवहारात् ।

अत्र चेष्टापदेनाक्षरचेष्टैवाभिप्रेता । अर्थविशेषबोधकभ्रूविक्षेपरूपचेष्टायास्तु चेष्टकबुद्धिस्थशब्दानुमापकत्वेनानुमानेऽन्तर्भावो वाच्यः ।

एवं च द्वैतसिद्धान्ते प्रत्यक्षमनुमानमागम इति [१]त्रीण्यनुप्रमाणानीति पूर्वोक्तं युक्तम् ।

### ५.०. *जयतीर्थाः (१३६५-१३८८)*

द्वैतसिद्धान्तप्रतिष्ठापकानां श्रीमध्वाचार्याणां (क्रिस्ताब्द- १२३८-१३१७) बहोः कालादनन्तरं श्रीजयतीर्थश्रीमच्चरणाः महाराष्ट्रदेशे सोलापुरमण्डलान्तर्गते मङ्गलवेडग्रामे जज्ञिरे । एतेषां समयः क्रिस्तीय-१३६५ वर्षादारभ्य १३८८ वर्षावधिकः[२] । ते च श्रीमदानन्दतीर्थेभ्यः चतुर्थेभ्यः अक्षोभ्यतीर्थेभ्यः पारिव्राज्यं विद्यां चाध्यगच्छन् । एते

१. 'अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यतः' अनुव्या. पृ. ८२.श्लो. ४५६.

२. समग्रं विवरणं. बि.एन्.के.शर्ममहाभागानां 'A History of the Dvaita School of Vedanta and its literature' पुस्तकात् स्वीकृतम् ।

महाभागाः श्रीमध्वाचार्यकृतानामष्टादशानां ग्रन्थानां टीकामारचय्य टीकाचार्याः टीकाकृत्पादाः इत्यन्वर्थनामधेयं भेजिरे ।

### ५.१ .*श्रीजयतीर्थविरचिताः ग्रन्थाः*

#### ५.१.१. *टीकाग्रन्थाः*

दशप्रकरणानां, सूत्रभाष्य–अनुव्याख्यान– न्यायविवरणानां गीताभाष्य – गीतातात्पर्य- निर्णययोः, ईशावास्य–षट्प्रश्नभाष्ययोः, ऋग्भाष्यस्य च टीकाः इत्यष्टादश टीकाग्रन्था एतैर्विरचिताः । आसु च टीकासु ब्रह्मसूत्रभाष्यटीका तत्त्वप्रकाशिका, अनुव्याख्यानटीका श्रीमन्न्यायसुधा चात्यन्तविस्तृते गहनगम्भीरे । तयोरपि श्रीमन्न्यायसुधा तावत्पर्यन्तं प्रादुर्भूतानां चार्वाक – जैन – बौद्ध – साङ्ख्ययोग – न्याय – वैशेषिक – भाट्ट – प्राभाकर – शाङ्कर – रामानुज- भास्करादिदर्शनानां विमर्शपूर्वकं श्रीमध्वाचार्यप्रतिष्ठापित- द्वैतसिद्धान्तहृदयं सम्यगाविष्करोति ।

#### ५.१.२. *स्वतन्त्रग्रन्थाः*

श्रीमज्जयतीर्थमुनीनां स्वतन्त्रग्रन्थास्तु –

१९. वादावली. २०. प्रमाणपद्धतिः २१. पद्यमाला. २२. शतापराधस्तोत्राणि २३. अध्यात्मतरङ्गिणी – इति प्रसिद्धाः ।

### ५.२. *द्वैतसिद्धान्ते प्रमाणपद्धतिस्थानम्*

श्रीजयतीर्थकृतस्वतन्त्रकृतिषु मध्ये प्रमाणपद्धतिरेव विषयादि- दृष्ट्याऽतीव महत्त्वं भजते । अस्यां द्वैतमतसम्बन्धिन्यायप्रक्रियाः, प्रमाणमीमांसाप्रक्रियाश्च सम्यङ् निरूपिताः । श्रीमध्वाचार्यकृतप्रमाण- लक्षणमाश्रित्यैवात्र प्रमाणलक्षणं विस्तृततया न्यरूपि श्रीजयतीर्थचरणैः । तथा ह्युक्तं प्रमाणपद्धतौ –

**'यद्यपि भगवत्पादैरेव प्रमाणलक्षणादिकमभिहितम् । तथाऽपि गम्भीरया वाचा विक्षिप्य वर्णितं न मन्दैः शक्यते सुखेन बोद्धुमिति तदर्थमिदं प्रकरणमारभ्यते ॥'**[१] इति ।

प्रमाणपद्धतिविषये प्रख्यातसंशोधकाः, लेखकाः डा. बि.एन्.के. शर्ममहाभागा एवमभिमन्यन्ते[२]

'It is Standard work on Dvaita Logic and Epistemology and all questions, connected with those branches of metaphysics. It deals with the nature, scope and definition of Pramanas, their ways of functioning theories of truth and error, the question whether the validity of Knowledge is to be viewed as intrinsic to it (Svatah) on extrinsic (Paratah) etc.'

अत्र ग्रन्थे प्रत्यक्ष-अनुमान-आगमपरिच्छेदाः विद्यन्ते ।

### ५.३. *प्रमाणपद्धतिटिप्पण्यः*

अस्याः प्रमाणपद्धतेरद्ययावदुपलब्धमुद्रिता अष्टौ दिप्पण्यः सन्ति यासु अधुना संशोधिता वानिवालनृसिंहाचार्यविरचिता भावचन्द्रिकाख्या टिप्पणी नान्तर्भवति । ताश्च–

१. श्रीविजयीन्द्रतीर्थविरचिता प्रमाणपद्धतिदिप्पणी अन्याभ्यः प्राचीनतमा (१५१४-१४९५ A.D )
२. वेदेशतीर्थविरचिता टिप्पणी (१५७०-१६२० A.D)
३. वंशपल्लीश्रीनिवासतीर्थविरचिता टिप्पणी (१५९०-१६४० A.D)
४. श्रीराघवेन्द्रतीर्थकृता टिप्पणी (१६२३-१६७१ A.D)

१. प्रमाणपद्धतिः - पृ.५.

२. History of the Dvaita School of Vedanta and its Literature - page.258.–

५. श्रीसत्यनाथतीर्थविरचिता टिप्पणी (१६४८-१६७४ A.D)
६. श्रीजनार्दनभट्टरचिता टिप्पणी (17th Century A.D)
७. श्रीविठ्ठलभट्टविरचिता टिप्पणी (18th Century A.D)
८. श्रीनरसिंहभट्टरचिता टिप्पणी (19th Century A.D)

एतदष्टटिप्पणीसहिता प्रमाणपद्धतिः सवणूर् गोविन्दमहाभागैः १८५३ तमे शा.शके वर्षे मुद्रापिताऽपि ग्रन्थानुपलब्ध्या प्रो.के.टि. पाण्डुरङ्गिमहाभागैः द्वैतवेदान्ताध्ययन- संशोधनप्रतिष्ठानम् , बेङ्गळूरु.- एतत्संस्थाद्वारा १९९१ क्रिस्तवर्षे पुनर्मुद्रापिता सतीदानीमुपलभ्यत इत्येतत् महत् प्रमोदस्थानं विदुषाम् ।

**६.०. अथेदानीं प्रमाणपद्धतौ प्रतिपादिता विशेषविचाराः केचन प्रस्तूयन्ते** । ते एव द्वैतसिद्धान्तस्यान्यदर्शनेभ्यः वैशिष्ट्यं वैलक्षण्यं चाऽवहन्ति ।

### *६.१. अभिनवान्यथाख्यातिः*

दार्शनिकसमाजे विभ्रमस्वरूपं विविधदर्शनकारैर्नैकधा विवृतमस्ति । स्वस्वदर्शनपद्धत्या च तत्स्वरूपं विमृष्टम् । तत्प्रयुक्ताः पञ्चाधिकाः ख्यातिवादा समयिसमाजे न्यरूपिषत । तेषु प्राधान्येन पञ्च ख्यातिवादाः प्रसिद्धाः । ते च–

**आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।**
**तथाऽनिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम् ॥** इत्युक्ताः ।

तत्र प्राभाकराः सर्वमेव विज्ञानं यथार्थमित्यास्थीयमानाः भ्रमात्मक-ज्ञानमेव नाङ्गीकुर्वन्ति[१] । ते च 'अख्यातिवादिनः' इति प्रसिद्धाः ।

१. प्रमाणपद्धतिः – पृ.६८.

भास्करमतानुयायिनः परिणामवादिन इति प्रथिताः । तेषां तु **'इदं रजतम्'** इति विभ्रमे शुक्तिरेव रजतात्मना परिणमतीत्यभिमतम् ।

नैयायिकाः अन्यथाख्यातिं समर्थयन्ते । ते च पुरोवर्तिन्यां शुक्तिकायाम् अन्यत्र विद्यमानस्य रजतस्य असद्भूतं तादात्म्यं भासत इति वदन्ति ।

सर्वस्य सर्वात्मकत्वात् सर्वपदार्थेषु सर्वधर्मसद्भावाद् एकपदार्थेऽपरपदार्थधर्मावभासः प्रमैव न भ्रमः इति सत्ख्यातिवादिनो रामानुजमतानुयायिनः ।

आत्मख्यातिवादिन इति ख्याताः बौद्धैकदेशिनो योगाचाराः आन्तरमेव रजतं बाह्यात्मनाऽवभासत इत्याचक्षते ।

अद्वैतवेदान्तिनामनिर्वचनीयख्यातिरभिमता । बौद्धैरसत्ख्यातिः प्रतिपादिता ।

द्वैतवेदान्तिभिस्तु 'इदं रजतम्' इति विभ्रमे प्रतीयमानस्य अधिष्ठानभूतस्य शुक्तिकाशकलस्य सत्त्वं स्वीकृत्य, तत्र प्रतीतिविषयस्य च रजतस्यासत्त्वमभ्युपगम्य, अन्यत्र तस्य सत्त्वं निराकृत्य, असतः सत्त्वेन प्रतीतिरूपा, सतोऽसत्त्वेन प्रतीतिरूपा चान्यथाख्यातिः स्वीकृता ।

तत्र न्यायविदां मते **'इदं रजतम्'** इति विभ्रमे इदमर्थः शुक्तिः, रजतं, तत्तादात्म्यमिति त्रयमवभासते । तत्र अन्यत्र विद्यमानस्य रजतस्य पुरःस्थिताया इदमर्थशुक्तिकायाः बाधकाभावान्नासत्त्व-मुपपद्यते । परं तादात्म्यस्य बाधसत्त्वादसत्त्वमस्तु । **'नेदं रजतमपि तु शुक्तिरेव'** इति बाधकप्रत्ययेन रजतस्यासत्त्वं नाऽवेद्यते । तस्य तादात्म्यमात्रविषयकत्वोपपत्तेः । रजतासत्त्वस्याधिकस्य कल्पनायां कल्पनागौरवम् इति न्यायविदां स्थितिः ।

परन्तु अस्मिन् सिद्धान्ते, विभ्रमे प्रतीयमानस्य रजतस्य अन्यत्र

सत्त्वाङ्गीकारात् **'असदेव रजतं प्रत्यभात्'** इत्यनुभवविरोधः । एकत्र प्रतीतस्यान्यत्र सत्त्वे प्रमाणमपि नास्ति – इति दोषद्वयमापतति ।

द्वैतिनोऽन्यथाख्यातिमङ्गीकृत्य तत्र सम्भावितदोषान् परिहृत्य, अत्र प्रतीतस्य रजतस्यान्यत्र सत्त्वं निराकृत्य असत्त्वमेवाभ्युपगच्छन् । बौद्धा अप्यसत्ख्यातिवादिनः । तथाऽपि ते भ्रान्तौ प्रतीयमानस्य सर्वस्यासत्त्वं मन्वते । द्वैतिनस्त्वारोप्यमात्रस्येति महान् भेदो विज्ञेयः । अतो द्वैतदर्शने एतादृशख्यातिस्वरूपवर्णनाद् अयं वादः अभिनवान्यथा-ख्यातिवाद इति समयिसमाजे प्रथितः । आरोपे भासमानं रजतमत्यन्तासद् इति तेषामाशयः । अत एव प्रमाणपद्धतौ[१]—

**'असदेव रजतं प्रत्यभात्' इत्युत्तरकालीनानुभवात् शुक्तिरेवा-त्यन्तासद्रजतात्मना प्रतिभातीत्याचार्याः'** इत्युक्तम् । एवं विभ्रमे प्रतीयमानं वस्त्वत्यन्तासदिति नूत्नोऽयं वादो द्वैतिभिराविष्कृतः । अत एवायं वादोऽभिनवान्यथाख्यातिरिति प्रसिद्धः ।

कथं भ्रान्तौ प्रतीयमानं वस्त्वत्यन्तासत् स्यात् ? असतः प्रतीत्य-भावादिति चेन्मैवम् । यतः असतोऽपि प्रतीतिः द्वैतिभिरङ्गीकृता । तदुक्तमनुव्याख्याने – श्रीमदानन्दतीर्थभगवत्पादाचार्यैः –

**'असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हि ।**
**तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते ॥**
**अन्यथात्वमसत् तस्माद् भ्रान्तावेव प्रतीयते ।**
**सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता ॥**[२]' इति ।

एवं च असतः सत्त्वेन प्रतीतिः, सतोऽसत्त्वेन प्रतीतिरन्यथा-ख्यातिरिति लक्षणं द्वैतिनामभिमतम् । तदुक्तं श्रीमन्न्यायसुधायाम्–

१. प्रमाणपद्धतिः – पृ. ६८.          २. अनुव्या.पृ.५.श्लो.२७,२८.

**'अन्यदन्यात्मना विषयीकुर्वद् ज्ञानम् अन्यथाख्यातिरित्यङ्गीकारात्**[1]' इति ।

अद्वैतवेदान्तिभिरप्यसतोऽपरोक्षतया प्रतीतिः स्वीकृता । तथा चाध्यासभाष्यम् – **'अध्यासो नामातस्मिन् तदिति प्रत्ययः ।' 'अपि च सत्यानृते मिथुनीकृत्य लोकव्यवहारः'** इति च । न चैवम् अङ्गीकारे द्वैतसम्प्रदायेऽपि असत्ख्यातिवाद एव एष स्यादिति वाच्यम् । यावत्खलु विगीते प्रत्यये भासते तस्य सर्वस्याप्यसत्त्वेऽसत्ख्यातिः स्यात् । न चैवम् । किं नाम ? अधिष्ठानस्य शुक्तिकाशकलस्य सत्त्वाङ्गीकारात् । नाप्यख्यातिपक्षपातः । रजतस्यासत्त्वाङ्गीकारात् । तादात्म्यावभासाभ्युपगमात् । नापि नैयायिकाभिमतान्यथाख्यातिपक्षपातः । रजतस्यासत्त्वाभ्युपगमात् । नैयायिकैरारोप्यमाणस्य रजतस्यान्यत्र सत्त्वमङ्गीकृतमिति नैयायिकाभिमतख्यातिवादाद् विभिन्नोऽयं वादो द्वैतिभिराविश्चक्रे ।

### ६.२. *प्रत्यक्षप्रमाणेषु साक्षीन्द्रियाभ्युपगमः*

द्वैतसिद्धान्ते तावत् निर्दुष्टार्थेन्द्रियसन्निकर्षः, निर्दुष्टार्थसन्निकृष्टनिर्दुष्टेन्द्रियं वा प्रत्यक्षप्रमाणम् । तथा चेन्द्रियाणामपि प्रत्यक्षत्वमभिमतम् ।

तत्र बाह्यानि चक्षुरादिपञ्चेन्द्रियाणि मनश्चाऽन्तरमिन्द्रियमिति षडिन्द्रियाणि प्रायेण बहुभिर्दार्शनिकैः स्वीकृतानि । द्वैतदर्शने तु सप्तममान्तरं ज्ञानेन्द्रियं लक्षितम् । तदेव साक्षीत्युच्यते । तथा च भगवत्पादवचनम्– **'प्रत्यक्षं सप्तविधं साक्षिषडिन्द्रियभेदेन**[2]' इति ।

---

१. श्रीमन्न्यायसुधा १-१-१.
'असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरिति । अन्यथाप्रतीतेरेव भ्रान्तित्वात्' – वि.त. विनिर्णयः – पृ. १७. सम्पुटम् – २.

२. प्र.लक्षणम् – पृ. १२३.

तत्रेतरेन्द्रियाणां साक्षिणश्च महदन्तरं विद्यते । षडिन्द्रियाणि प्राकृतानि[1] भवन्ति । अनादिकालतस्तेषां जीवात्मना सम्बन्धोऽस्ति । सृष्टिकालेऽहङ्कारतत्वेन पञ्चभूतैश्चोपचितानि तानि भवन्ति । नैवं साक्षी।

साक्षी तु प्रमाताऽऽत्मैव । आत्मस्वरूपं, अविद्या, मनः, अन्तःकरणधर्माः ज्ञानसुखाद्याः, आत्मधर्माः, कालोऽव्याकृताकाशश्च साक्षिणो विषयाः ।

षण्णामिन्द्रियाणां तु ज्ञानसाधनत्वमेव । साक्षी तु प्रमारूपं, प्रमासाधनं च भवति । षडिन्द्रियेभ्यो जायमानं यदन्तःकरण-परिणामरूपं वृत्तिज्ञानापरपर्यायं ज्ञानं तत्सर्वं आत्मा साक्षादीक्षते । एतदेव साक्षिज्ञानमित्युच्यते ।

एवं द्वैतदर्शने[2] वृत्तिज्ञानं साक्षिज्ञानमिति प्रत्यक्षज्ञानं द्विविधं भवति । साक्षी अपि आत्मस्वभावानुसारेण ईशलक्ष्मीयोग्यादिव्यक्ति-भेदेन विभिन्नो भवति । एवम् अत्र मनसः स्वातन्त्र्येण स्मृतिसाधनत्वेन प्रामाण्यमुपापादि ।

## ६.३. *तर्कः*

### ६.३.१. *तर्कविषये न्यायसिद्धान्तः*

अनुमानेऽपि तर्कशब्दप्रयोगोऽस्ति[3] । अस्मिन् अर्थे तर्कः प्रमाणमित्यत्र दार्शनिकेषु न विप्रतिपत्तिः । अनिष्टव्यापक-

१. प्राकृतं षड्विधम् । घ्राणरसनचक्षुस्त्वक्श्रोत्रभेदात् । – प्र.प. १२८.

२. प्रमाणपद्धतिः – पृ. १२६.

३.'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥' (न्या.म.पृ.५८८)

प्रसञ्जनात्मकोऽन्योऽपि तर्कोऽस्ति । अयं तु न प्रमाणमिति न्याय-सिद्धान्तः । तथैव प्रतिपादितं श्रीमता वाचस्पतिमिश्रेण[१]–

**'प्रमाणपदेन हि चत्वारि प्रमाणानि सङ्गृहीतानि न चैतेष्वन्यतमस्तर्कः ।'** इति ।

सोऽयं तर्को न्यायमते प्रमाणानामनुग्राहकः । प्रत्यक्षादिप्रमाणं तावद् वस्तुतत्त्वनिश्चयाय प्रवर्तमानं करणतयेतिकर्तव्यतामपेक्षते । तदा प्रमाणविषययुक्तायुक्तविचाररूपस्तर्कः युक्ते तत्त्वे प्रमाणं प्रवर्त्य तदनुगृह्णाति ।

अयं तर्कः प्रत्यक्षस्यानुग्राहकः । तथा हि[२] । क्वचिद् भूतलादौ घटाभावग्रहणे प्रवृत्तं प्रत्यक्षं **'भूतले घटः किं न स्यात्'** इति विपरीतशङ्कया प्रतिबद्धं न घटाभावनिश्चयमुत्पादयेत् । तदा **'यद्यत्र घटोऽभविष्यद् भूतलमिवाद्रक्ष्यत तत्समानदर्शनसामग्रीकत्वात्'** इति तर्केण विपरीत-शङ्कापनोदे सति प्रत्यक्षं भूतले घटाभावं निश्चिनोति ।

तथाऽनुमानस्थले व्यभिचारशङ्कयोपाधिशङ्कया वा **'धूमवानपि पर्वतो वह्निमान् न स्यात्'** इति पक्षे साध्याभावसन्देहे-नानुमानप्रवृत्तिप्रतिबन्धे सति **'यदि पर्वतो निर्वह्निः स्यात् तर्हि निर्धूमः स्यात्'** इति[३] विषयपरिशोधकस्तर्कः प्रवर्तते । एवं **'धूमो यदि वह्नि-व्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यात्'** इति धूमाग्न्योर्व्याप्ति-ग्राहकस्तर्कः उदेति । स तूपाधिकोटौ तदधीनव्यभिचारविषये

---

१. न्यायवार्तिकतात्पर्यटीका – पृ. ६०.

२. न्यायवार्तिकतात्पर्यटीका – पृ. ६१.

३. दिनकरी – पृ. ७७२.

पूर्वोक्तरीत्याऽनिष्टापादनं कृत्वा विपरीतशङ्कां निवारयति । ततश्च निश्चितव्याप्तिकमनुमानं निष्कम्पेन पर्वते वह्निं निश्चाययति ।

प्रमाणव्यतिरिक्तः ऊहात्मकस्तर्कः न प्रमाणपदवीमध्यारोढुं प्रभवतीति न्यायसिद्धान्तः । अत एवान्नम्भट्टेन तर्कोऽयथार्थानुभवेऽन्तर्भावितः[१] । तदनुसारं **'व्याप्यारोपेण व्यापकारोपस्तर्कः'** इति तस्य लक्षणमपि तेनोक्तम्[२] । यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यादिति तर्के वह्न्यभावादिकमारोप्य हेतुभूतेन तेन धूमाभावाद्यनिष्ट-प्रसञ्जनं क्रियते । न हि पक्षे व्याप्यो वह्न्यभावः, व्यापको धूमाभावोऽस्ति । येन तर्कस्य याथार्थ्यरूपं प्रामाण्यं सिद्ध्येद् इति ।

### ६.३.२. *तर्कोऽपि प्रमाणमिति द्वैतसिद्धान्तः*

द्वैतसम्प्रदाये त्वनुमानं द्विविधम् । [३]साधनानुमानं दूषणानुमानं चेति । तत्र साधनानुमानं यथा– पर्वतो वह्निमान् धूमवत्त्वादिति । दूषणानुमानमपि द्विविधम् । दुष्टिप्रमितिसाधनं तर्कश्च । तत्र **'नेदं स्वसाध्यसाधनसमर्थम् असिद्धत्वात्'** इत्यादिं परपक्षासाधुत्व-प्रमितिसाधकमनुमानं दूषणानुमानम् । अप्रामाणिकस्य कस्यचिद्धर्म-स्याङ्गीकारे तद्व्यापकस्य अनिष्टार्थान्तरस्याङ्गीकारापादनं तर्कः ।

स चाङ्गपञ्चकयुक्त एव प्रमाणम् । प्रसञ्जकस्य आहार्यलिङ्गस्य प्रसञ्जनीयेन व्याप्तिरित्येतत् प्रथमाङ्गम् । प्रतितर्कैरप्रतिघातः– इति द्वितीयम् अङ्गम् । आपाद्यस्यानिष्टत्वम् इति तृतीयम् । तद् द्विविधम् । प्रामाणिकहानम् अप्रामाणिककल्पनं चेति । तत्राऽद्यं <u>प्रामाणिकहानं</u> दृष्टानुमितश्रुतहानभेदेन त्रिविधम् । द्वितीयमपि

१. 'अयथार्थानुभवस्त्रिविधः संशयविपर्ययतर्कभेदात्' तर्कसङ्ग्रहः – पृ.२०१.
२. त.स. – पृ.२०३.
३. प्रमाणपद्धतिः – पृ.२०३.

आद्यः व्यभिचारशङ्कानिरसनद्वारा व्याप्तिप्रमाजनकतया लिङ्गपरामर्शसिद्धिरूपः । द्वितीयस्तु सिद्धे लिङ्गपरामर्शे प्रतिप्रमाणशङ्कारूपविपरीतशङ्काविधूननेन वह्न्यनुमितिरूपकेवलप्रमाणमेव जनयति । ततश्चानुमानेऽयमुभयविधोऽपि तर्कसाध्योऽनुग्रहो विवक्षितः ।

एवं च परोक्तनिरग्निकत्वादिप्रतिक्षेपरूपत्वात् तर्कस्य दूषणानुमानत्वरूपं लक्षणं सूपपन्नम् ।

**'व्याप्यारोपेण व्यापकारोपस्तर्कः'**[1] इत्यन्नम्भट्टोक्ततर्कलक्षणं बाष्पारोपितधूमभ्रमजन्यभ्रमानुमितावतिव्याप्तेरयुक्तम् इति व्यासतीर्थाः[2] ।

व्याप्यारोपनिमित्तकव्यापकप्रसञ्जनमिति लक्षणपरिष्कारे प्रसञ्जनशब्दार्थः क इति प्रष्टव्यम् । प्रसञ्जनं नाम तर्क इति चेदात्माश्रयत्वरूपदोषः । यदि आरोप इति तदर्थस्तदा पूर्वोक्तातिव्याप्तिरूपदोषः सुस्थ एव ।

तस्मात् तर्कोऽनुमानविशेष एव । आपाद्यापादकयोः व्याप्तिबलेन साध्यसाधनयोरविनाभावरूपव्याप्तिप्रमाजनकत्वात् । [3]तर्क्यतेऽनेनेति करणव्युत्पत्त्या, साध्याभावेन सह साधनाभावस्य व्यापकत्वप्रमितिरेव तर्कः । अथवा साध्याभावाङ्गीकारनिमित्तका साधनाभावस्याङ्गीकर्तव्यताप्रमा वा तर्कः । तर्कणमिति भावव्युत्पत्त्या पूर्वोक्ततर्कजन्या हेतुसाध्ययोर्व्याप्त्यनुमितिरपि तर्क एव भवतीति तर्कविषये द्वैतसिद्धान्तः ।

---

१. तर्कसङ्ग्रहः – पृ. २०३.

२. तर्कताण्डवम् - सम्पुटम् –४.पृ.१४०.

३. तर्कताण्डवम् - सम्पुटम् –४.पृ.१४३.

### ६.४. *वाक्यार्थविमर्शः*

विभक्त्यन्ता वर्णाः पदम्[१] । आकाङ्क्षासन्निधियोग्यतावतां पदानां समूहो वाक्यम् । विषयोऽयं सकलमानसमन्दिरगोचरीभूतो यद् वाक्याद् वाक्यर्थबोधो जायत इति । स च वाक्यार्थः कथं शाब्दबोधे भासते? स च कीदृशः ? किं पदार्थानामन्वयो वाक्यार्थः ? उत, पदार्था एवेति जिज्ञास्यमाने नैके वादा अत्र प्रादुरासन् । त एवाभिहितान्वयवादा-न्विताभिधानवादादिरूपेण दर्शनेषु प्रथिताः ।

### ६.४.१. *मीमांसकसिद्धान्तः*

तत्र अभिहितान्वयवादिन इति प्रसिद्धा भाट्टमीमांसकास्तावद् एवं स्वकीयं पक्षं मण्डयामासुः । पदैरनन्विता एव स्वार्था अभिधीयन्ते[२] । पदैः स्मारितानां पदार्थानामन्वयबोधस्तु आकाङ्क्षायोग्यतादिसहकारि-कारणवशाद् भवति । न तु पदैरेवान्वयबोधो जायते । यतः पदानि पदार्थान् स्मारयित्वोपक्षीणसामर्थ्यान्यतस्तैर्वाक्यार्थबोधो न जायते । पदाभिहितपदार्थसंसर्गबोधस्तु पदार्थैरेव भवति[३] ।

तथा चेदमुक्तं भवति । अन्वयबोधे पदार्थः करणम् । पदार्थ-स्मृतिरवान्तरव्यापारः । शाब्दबोधः फलम् । एवं चैतेषां मते पदैरन्वयबोधोपपादनायान्वितेषु स्वार्थेषु शक्तिः न कल्प्यते ।

---

१. प्रमाणपद्धतिः – पृ. ३३८.

२. **'पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते'** श्लो.वा.शब्दपरिच्छेदः, श्लो.सं.१०७. पृ.३०६.

३. **'वाक्यार्थे तु पदार्थेभ्यः सम्बन्धानुभवाद् ऋते । बुद्धिरुत्पद्यते तेन भिन्नाऽसावक्षबुद्धिवत् ।।'** श्लो.वा.श.परि.श्लो.स.१०९ – पृ.३०७.

विशेषान्विताभिधानवादिनः प्राभाकरास्त्वेवमाशेरते । पदैस्तावदन्विताः स्वार्था अभिधीयन्ते । न त्वन्वयविधुराणि स्वार्थमात्राणि । अतः पदार्थ एव वाक्यार्थो न तु पदार्थातिरिक्तो वाक्यार्थो नाम कश्चिदस्ति । तस्मात् पदेभ्य एव वाक्यार्थप्रत्ययो जायते[१] । तदर्थं पदेषु स्मारिका, आनुभाविकीति शक्तिद्वयं कल्प्यते । तत्र जातौ स्मारिका शक्तिः, शाब्दबोधोपयोगिनी आनुभाविकी शक्तिरन्वितस्वार्थेषु[२] ।

न च द्विविधशक्तिकल्पनं व्यर्थमिति शङ्क्यम् । आनुभाविकशक्तिग्रहं प्रति स्मारकशक्तिग्रहस्य कारणत्वात् । तस्माद् विशेषतो योग्यो य इतरपदार्थस्तदन्वितेषु स्वार्थेषु पदानामभिधानकल्पनात् प्राभाकरमीमांसका विशेषान्वयवादिन इति प्रसिद्धाः ।

### ६.४.२. *द्वैतसिद्धान्तः*

द्वैतदर्शने तावत् सामान्यतो योग्यो य इतरपदार्थस्तदन्विते स्वार्थे पदानां शक्तिरङ्गीक्रियते । एवं च तन्मते वाक्यार्थापरपर्यायोऽन्योन्यपदार्थसंसर्गः पदाभिधेय एव । तथा च पदार्थातिरिक्तो वाक्यार्थ एव नास्ति । [३]एकैकं पदमपि सामान्यतो योग्येतरान्वितस्वार्थाभिधानसमर्थं पदान्तरसन्निधानरूपसहकारिवशाद् विशेषतोऽन्वितस्वार्थमभिधत्ते ।

द्वैतिनस्तु एवं स्वसमयं प्रतिपादयन्ति । शब्दः सम्बद्ध एवार्थबोधको

१. 'पदेभ्य एव वाक्यार्थप्रत्ययो जायते यथा । तथा वयं निबध्नीमः प्रभाकरगुरोर्मतम्॥'
प्रकरणपञ्चिका - पृ. ३४९. ग. ३७७.

२. प्रकरणपञ्चिका - पृ. ३७९. ग.४००/४०१.

३. प्रमाणपद्धतिः – पृ.४०८.

न त्वसम्बद्धः । अन्यथा सर्वोऽपि शब्दः सर्वं बोधयेत् । तस्माच्छब्देन नियतार्थप्रतीत्युत्पादनाय शब्दस्यार्थेन सह कश्चन सम्बन्धः स्वीकृतः । स च स्वाभाविकः शब्दगतोऽर्थप्रकाशनसामर्थ्यरूप एव ।

विदितमेव समेषां यत् परप्रतीत्युत्पादनाय सकलो लोकः पदं वाक्यं वा प्रयुङ्क्ते इति । शृणोति च श्रोता तत्पदं वाक्यं वा । यतः प्रवर्तते श्रोता श्रुतेन तेन वाक्येनातस्तस्माद् वाक्यादर्थज्ञानं तस्य जातमित्यवगम्यते । पदाच्चार्थज्ञानं तस्यैव भवति यस्य पदपदार्थ-सम्बन्धज्ञानं वर्तते । तस्मादिदं तावत् सिद्धम् । यत् पदपदार्थसम्बन्ध-ग्राहरूपव्युत्पत्तिः शब्दादर्थप्रतीत्युत्पत्त्यर्थमावश्यकीति ।

### ६.४.२.१. *प्राथमिकव्युत्पत्तेः सामान्यतो योग्येतरान्वितस्वार्थविषयकत्वप्रतिपादनम्*

प्राथमिकव्युत्पत्तिस्तु वृद्धव्यवहारादिना भवति । तथा चोक्तम्–

**'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥**[१]' इति

तत्र व्यवहारादिना शक्तिग्रहो न पदार्थमात्रगोचरः, किन्तु सामान्यतो योग्येतरान्वितस्वार्थविषयकः । न हि लोकः पदार्थमात्रप्रत्यायनाय शब्दान् प्रयुङ्क्ते । किन्तु संसृष्टार्थप्रतिपित्सया । अतो व्यवहारादिना शब्दशक्तिं जानता योग्येतरान्वितार्थे साऽनुभूयते[२] ।

[३]यद्यपि 'गामानय' इति वाक्ये आनयनान्विता गौः प्रतीयते । **'गां**

---

१. सिद्धान्तमुक्तावल्यामुदाहृतः श्लोकः - पृ. ३५९.

२. तर्कताण्डवम् - पृ. १. द्वि.परिच्छेदे.

३. श्रीमन्न्यायसुधा . पृ. ९६१.

**बधान'** इति वाक्ये सैव गौर्बन्धनान्विततयोपलभ्यते । 'गां पश्य' इति प्रयोगे सैव दर्शनान्विता दृश्यते । इत्थं पदार्थान्तराणां तदन्वयानां च व्यभिचारो गोचरीक्रियते । तथाऽपि पदानां स्वरूपमात्रे शक्तिस्वीकारो नोचितः । यद्यप्यस्ति व्यभिचारः पदार्थान्तराणां तदन्वयानां च । तथाऽप्यव्यभिचारिणि सामान्यतो योग्येतरान्वितस्वार्थे शक्तिस्वीकारे न काचिदनुपपत्तिः । न हि विशेषाणां व्यभिचारेण परित्यागेऽप्य-व्यभिचारिणः सामान्यस्य निर्निमित्तकस्त्याग उचितः । अतः सामान्यतो योग्येतरान्वितस्वार्थे पदानां शक्तिग्रहो व्यवहारादिना सम्भवति । तथा चोक्तं श्रीमदानन्दतीर्थभगवत्पादैः–

'[१]**शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते ।**
**अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथा ॥**' इति ।

तत्र व्यवहारादिना सङ्गतिग्रहणवेलायां गवादिपदैरानयनादि-विशेषान्वयबोधो भवति । परन्तु पश्चादानयनबन्धनादिविशेषमपहाय क्रियान्वितं कारकं कारकान्विता क्रियेत्येवं प्रकारेण गवादिपदाना-मन्वयसामान्यबोधकत्वमेव बालोऽधिगच्छति । तस्मात् सामान्यतो योग्येतरान्वितस्वार्थे पदानामभिधात्री शक्तिः प्राथमिकव्युत्पत्तिसिद्धा ।

एवं च प्राथमिकव्युत्पत्तिजनकेन व्यवहारेण सामान्यतो योग्येतरा-न्वितस्वार्थे सङ्गतिग्रहादनन्तरभाविनां व्याकरणोपमानकोशाप्तवाक्य-वाक्यशेषविवरणप्रसिद्धपदसमभिव्याहाररूपव्युत्पत्तिजनकानां प्राथमिकव्युत्पत्त्यनुसारेण सामान्यतो योग्येतरान्वितस्वार्थे व्युत्पत्ति-ग्राहकत्वमुचितम्[२] ।

---

१. अनुव्या. पृ – १०. श्लो.७२,७३.

२. तर्कताण्डवम् – पृ. १६१. द्वितीयपरिच्छेदे ।

अपि च यदि पदानि अन्वितान् स्वार्थान् नाभिदधीयेरन्, किन्तु स्वार्थमात्राण्यभिदध्युः तर्हि शाब्दबोधे कथमन्वयभानम् ? तद्भासकाभावात् । न ह्यन्वयबोधात् पूर्वं विद्यमानानि वाक्यस्थानि पदानि, वक्ता वा, पदैरभिहिताः पदार्था वाऽन्वयबोधकारणानीति वक्तुं शक्यते । यतो हि तत्र वक्ता तावत् सकृदुच्चारणेनैव कृतकृत्यः । पदानां तु स्वार्थप्रकाशनादन्यो व्यापारो नास्ति । येनान्वयबोधकत्वं स्यात् । तदुक्तं श्रीमदानन्दतीर्थभगवत्पादैः –

''[१]**व्यापारो नहि शब्दस्य परः स्वार्थप्रकाशनात् ।**
**पुमानप्येकवारोक्त्या कृतकृत्यो यदा भवेत् ।**
**अन्वयस्य कथं ज्ञानं शब्दार्थत्वं यदाऽस्य न ॥**' इति ।

नापि पदानि पदार्थान् प्रतिपाद्य तदन्वयबोधाय पुनः व्यापारवन्ति भवन्ति । अचेतनानां तेषां विरम्य व्यापारासम्भवात् ।

### ६.४.२.२. *अभिहितान्वयवादनिरासः*

पदैरनन्विता एव पदार्था अभिधीयन्ते । पदानि पदार्थान् स्मारयित्वोपक्षीणानि नान्वयबोधायालम् । किन्तु पदैरभिहिताः पदार्था एवाऽकाङ्क्षादिसहकारिवशादन्वयबोधका भवन्तीति भाट्टाभिमताभिहितान्वयवादोऽपि न युक्तः । तथा सति शब्दप्रतिपाद्यार्थस्यानन्वितत्वाद् अन्वयस्य पदार्थायत्तत्वात् शाब्दत्वं न स्यात् । तथा च श्रीमदाचार्यवचनम्–

'**अनन्वितः स्याच्छब्दार्थो न तदर्थो हि सोऽन्वयः**[२]' इति ।

किञ्च शाब्दबोधकरणस्य पदार्थस्य प्रमाणान्तरत्वमापतेत् । [३]प्रसिद्धं

१. अनुव्या. पृ. २१४. श्लो.११७०, ११७१.
२. अनुव्या. पृ. २१५. श्लो. ११७१.
३. तर्कताण्डवम् – पृ.२०७.द्वि.परिच्छेदः ।

शब्दाख्यं प्रमाणं विहायाप्रसिद्धस्य पदार्थाख्यप्रमाणान्तरस्य कल्पने कल्पनागौरवं स्यात् । 'वृष्टिरासीद्, वृष्टिर्भविष्यति' इत्यादौ पदार्थस्यातीतानागतरूपस्य फलीभूतान्वयबोधं प्रति अवान्तर-व्यापाराभिमतपदार्थस्मृतिं प्रति च कार्यनियतपूर्ववृत्तित्वरूप-कारणत्वस्यैवासम्भवेन तद्घटितकरणत्वस्य दूरोपास्तत्वात् । न च,

**'पश्यतः श्वेतिमारूपं ह्रेषाशब्दं च शृण्वतः ।**
**खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः ॥[1]'**

इत्यत्र पदं विनाऽपि पदार्थज्ञानमात्रात् 'श्वेतोऽश्वो धावति' इति धीदर्शनात् पदार्थानामस्त्येवान्वयबोधकत्वमिति वाच्यम् । अत्रान्वय-प्रतीतेः 'अयं श्वेतः, अश्वो भवितुमर्हति, ह्रेषाखुरनिष्पेषवत्त्वात्' इत्यनुमानेन सम्भवात्[2] ।

तस्मादन्वयप्रतिपादकत्वं पदाभिहितपदार्थानामसम्भवात् पदानामेव तदङ्गीकार्यम् । तथा सत्यन्वयस्य शब्दार्थत्वमुपपद्यते । तदर्थं पदानां सामान्यतो योग्येतरान्वितस्वार्थवाचित्वमपि स्वीकरणीयम् ।

### ६.४.२.३. *अनुभवप्रमाणोदाहरणम्*

पदं सामान्यतो योग्येतरान्वितस्वार्थवाचकमित्यत्रानुभव एव प्रमाणम् । [3]यदा वक्ता देवदत्तादिकर्तृवाचकपदानि प्रयुङ्क्ते तदा श्रोता किमिति पृच्छतीति सर्वानुभवसिद्धम् । स च पचनादिधर्मविशेष-जिज्ञासया तथा पृच्छति । धर्मविशेषबोधकशब्दश्रवणेन तज्जिज्ञासाया

१. श्लो.वा. पृ. ६६७. श्लो.सं. ३५८.
२. तर्कताण्डवम् – पृ. २१०. द्वितीयप. ।
३. श्रीमन्न्यायसुधा – पृ. ४७२६.

निवृत्तिदर्शनात् । तथा च तथा प्रष्टुः धर्मविशेषजिज्ञासाऽस्तीत्य-विवादम् । धर्मविशेषजिज्ञासा च धर्मसामान्यज्ञानपूर्विकेति लोके दृष्टम् ।

न च तदा प्रष्टुः धर्मसामान्यज्ञानोपायः पदादन्योऽस्ति । अतस्तत्र पदेनैव धर्मसामान्यान्वितं वस्तु प्रतिपादितमिति वक्तव्यम् । तस्मात् पदानां सामान्यतो योग्येतरान्वितस्वार्थाभिधायकत्वानभ्युपगमे धर्म-विशेषजिज्ञासारूपाकाङ्क्षा न सङ्गच्छते ।

अत एव पदानां प्राभाकराभिमता विशेषतो योग्येतरान्वितस्वार्थे शक्तिर्नाङ्गीकृता । पदश्रवणेनैव विशेषतोऽन्वितस्वार्थज्ञानोत्पत्तेर्विशेष-जिज्ञासाऽनुदयेन तज्जिज्ञासया किमित्यादिप्रश्नस्याप्यनवकाशात् । तस्मात् पदानां सामान्यतो योग्येतरान्वितस्वार्थे शक्तिः स्वीकार्या ।

### ६.४.२.४. *अन्वयविशेषप्रतिपत्त्युपपादनम्*

ननु द्वैतवेदान्तिनामभिमतेऽन्विताभिधानवादेऽस्मिन् पदैरन्वय-विशेषबोधो निर्निमित्त एव स्यात् । सकलपदानामन्वयसामान्य-वाचकत्वात् । सामान्यतोऽन्विते स्वार्थ एव पदानां शक्तत्वात् ।

अथ प्रथमप्रयुक्तपदमात्रं सामान्यतोऽन्विताभिधायि, उत्तरं तु विशेषान्वयवाचकमिति मतम् । तदपि न सुष्ठूक्तम् । प्राथमिक-त्वादेरव्यवस्थितत्वात् । क्वचित् प्रथमप्रयुक्तं पदमेव ह्यन्यत्रानन्तरं प्रयुज्यते । अतोऽत्र सिद्धान्ते विशेषान्वयप्रतिपत्तिः कथं भवेदिति ।

अत्रैवं [१]समाधानमभिहितमानन्दतीर्थभगवत्पादैः । पदानि सामान्यतो योग्येतरान्वितस्वार्थवाचकान्यपि पदान्तरसन्निधानवशाद्

---

१. **'अतः सामान्यतो ज्ञातः पदान्तरबलात् पुनः । भवेद्विशेषतो ज्ञातस्तेन स्यादन्वितोक्तिता ॥'** अनुव्या. पृ.२१४. श्लो.११६७.

विशेषान्वयबोधकानि भवन्ति । पदान्तरसमभिव्याहारः पदानां सामान्यविषयकशक्तेर्विशेषपर्यवसाने हेतुः । यद्यपि पदान्तरासमभिव्याहृतं पदं सामान्यतोऽन्वितवस्तुवाचकम्, तथाऽपि तदेव पदं पदान्तरसमभिव्याहाररूपसहकारिवशाद् विशेषान्वयविशिष्टस्वार्थवाचकं भवति । अन्वयविशेषबोधार्थं न शक्त्यन्तरं तत्र कल्प्यते । शक्तिद्वयाङ्गीकारे गौरवात्[१] । किन्तु सामान्यान्वयविषयका या शक्तिः सैव पदान्तरसमभिव्याहाररूपसहकारिबलाद् विशेषान्वयविषयिका भवति ।

तथा च द्वैतसिद्धान्ते शाब्दबोधे पदज्ञानं करणम् । शक्तिस्मृतिरवान्तरव्यापारः । आकाङ्क्षादयः सहकारिकारणानि । शाब्दबोधः फलम् । अस्मिन् दर्शने एकैव शाब्दबोधजनिका सहजशक्तिः पदेषु वरीवर्ति ।

## ६.५. *प्रमाणपद्धतेः पाठान्तराणि*

| क्र.सं. | संशोधितपाठः | मुद्रितपाठः | पृ.सं. |
|---|---|---|---|
| १. | यथाऽस्मिन् ग्रामे (च) | अस्मिन् ग्रामे | ०८ |
| २. | सतीदमेव देवदत्तगृहं नान्यत्(च) | सतीदमेव नान्यत् | ०८ |
| ३. | लक्षणज्ञानेनेदमेव (त) | लक्षणज्ञाने सतीदमेव | ०८ |
| ४. | एवमन्यत्रापि (भा.च.) | एवमुत्तरत्रापि | १५ |
| ५. | अभिव्यक्तं सदुपलभ्यते किं वाऽसदेवोत्पन्नमिति (त) | अभिव्यक्तमुपलभ्यते उतासत् तेनोत्पन्नमिति | २५ |
| ६. | श्रुतवतः पुरुषस्य(त) | श्रुतवतः | २५ |
| ७. | सतामेवेश्वरादीनाम् (त) | सतामीश्वरादीनाम् | २६ |

१. तर्कताण्डवम्. द्वितीयपरिच्छेदे – पृ. १७८.

| | | |
|---|---|---|
| ८. संशयस्य (भा.च.) | संशयज्ञानस्य | ३१ |
| ९. उत्तरकालीनपरामर्शाच्च (त) | उत्तरकाले परामर्शाच्च | ३१ |
| १०. वैशेषिकाः (त) | वैशेषिकादयः | ३१ |
| ११. वैशेषिकादयः (त) | वैशेषिकाः | ३३ |
| १२. बाह्यालीप्रदेशे प्रायेण (भा.च.) | '**प्रायेण**' इति नास्ति | ३३ |
| १३. संशयविपर्ययोरतिव्यापकत्वात्(च,त) | संशयविपर्ययव्यापकत्वात् | ३५ |
| १४. विषयाश्रितस्य (भा.च.) | प्रमेयाश्रितस्य | ३५ |
| १५. प्रमाव्याप्तं प्रमाणमिति(त) | प्रमाव्याप्तत्वं विवक्षितमिति | ३७ |
| १६. स्पष्टत्वं....विषयोपाधिकम् (त) | स्पष्टत्वं....विषयोपाधिकः | ४१ |
| १७. तत्र ऋजवः (त) | ऋजवः | ४३ |
| १८. ईशादन्यत्र (भा.च.) | ईश्वरादन्यत्र | ४३ |
| १९. स्वरूपं मनोवृत्तिरूपं (त) | स्वरूपं बाह्यं | ४४ |
| २०. यथार्थज्ञानमेवेति (त) | यथार्थज्ञानमिति | ५२ |
| २१. आगमजस्य (त) | आगमजन्यस्य | ५२ |
| २२. नित्यमेव (त) | नियमेन | ५३ |
| २३. अतिदूरस्थत्वम् (त) | अतिदूरत्वम् | ५६ |
| २४. तेषु हि (त) | तेषु | ५६ |
| २५. तस्य वस्तुनः (त) | तस्य | ६० |
| २६. चानुभवे | चानुभवेन | ६० |
| २७. -सम्बन्धिनमपि (त) | -सम्बन्धितामपि | ६१ |
| २८. मनोवृत्तिरूपज्ञानं(त) | मनोवृत्तिज्ञानं | ६१ |
| २९. अर्थसन्निकर्षः प्रत्यक्षमित्युक्ते(त) | अर्थसन्निकर्ष इत्युक्ते | ६२ |
| ३०. छिदासाधनस्य(त) | छिदाकरणस्य | ६३ |
| ३१. द्विविधमिन्द्रियात्मकम् (भा.च.) | द्विविधेन्द्रियात्मकम् | ६४ |
| ३२. तत्तद्विषयवत् (भा.च.) | तत्तज्ज्ञानविषयवत् | ६४ |
| ३३. इन्द्रियार्थसन्निकर्षः (त) | इन्द्रियार्थयोः सन्निकर्षः | ६६ |
| ३४. आत्मना सह संयोगः (त) | आत्मना संयोगः | ६७ |

एवमनुमानागमपरिच्छेदयोः पञ्चाशदधिकाः शुद्धपाठाः उपलब्धाः । तस्मात् सैषा प्रमाणपद्धतिरितः पूर्वं मुद्रिताऽपि प्रकृतोपलब्धमातृका-त्रयसहकारेण शताधिकशुद्धपाठ(पाठान्तर)संशोधनद्वारा भावचन्द्रिका टिप्पण्या सह पुनः समपादि ।

### ७.०. *प्रमाणपद्धतिटिप्पणी भावचन्द्रिका*

तत्रेदानीं '**भावचन्द्रिका**'ख्या प्रमाणपद्धतिटिप्पणी तावदितः पूर्वममुद्रिताऽप्रकाशितेदम्प्रथमतया मातृकाभ्यः उद्धृत्य शुद्धपाठ-संशोधनपूर्वकं महता श्रमेण समपादि ।

### ७.१. *ग्रन्थरचयितारो वानिवालनृसिंहाचार्याः*

टिप्पण्या अस्याः प्रणेतारो वानिवालेति उपनामवन्तः श्रीमन्तो नृसिंहाचार्यास्तावत् श्रीविभूषितानां कम्बालूरुश्रीरामचन्द्रतीर्थपूज्य-श्रीचरणानां (क्रिस्ताब्दं-१५७५-१६३५) शिष्या आसन्[१] । उपेन्द्रभट्टा एतेषां पितरः । एतेषां पितृपादैरुपेन्द्रभट्टैरपि उपेन्द्रभट्टीयेति स्वनामधन्या काचित् प्रमाणपद्धतिटिप्पण्यारचिता वर्तते । परन्तु इयमपि टिप्पणीतः पूर्वं न मुद्रिता ।

[२]श्रीरामचन्द्रतीर्थास्तु श्रीव्यासतीर्थेभ्यः (१५३९.A.D.) पञ्चमा-स्तत्पीठाधिरूढाः परमवैष्णवाग्रेसराः श्रेष्ठविद्वांसश्चाऽसन् ।

---

१. तथा च भावचन्द्रिकान्तिमवाक्यम् '**इति श्रीमद्रामचन्द्रतीर्थपूज्यपादानां शिष्येणोपेन्द्रभट्टसूनुना वानिवालनृसिंहेन कृतायां प्रमाणपद्धतिवाक्यविवृतौ भावचन्द्रिकायां तृतीयपरिच्छेदः**' (भा.च.)

२. **सर्वं विवरणं एम्.के. भारतीरमणाचार्याणां 'द्वैतवेदान्तवाङ्मय हागु इतिहास' (कन्नडभाषानुवाद) इति निबन्धानुसारेण गृहीतम् ।**

एतेषां जन्मस्थलं कोयम्बत्तूरुमण्डलसम्बद्धसत्यमङ्गलपरिषत्सम्बन्धि-काविलीपाळयाख्यग्रामः । एतेषां काले एका महत्त्वपूर्णा घटना वेलूरुसमीपे पेन्नात्तूरुग्रामे संवृत्ता । तत्रानेके गृहस्थब्राह्मणा एतेषां सकाशान्माध्वदीक्षां प्राप्नुवन् । तेषु मध्ये वानिवालनृसिंहाचार्या अप्यन्यतमा आसन् । एतत्सर्वं परामृश्य वानिवालनृसिंहाचार्याणां कालः १६०० क्रिस्ताब्दस्य परित इति निश्चेतुं शक्यते ।

### ७.१.१. *कृतयः*

वानिवालनृसिंहाचार्याः [१]तत्वप्रकाशिकाटिप्पणीमारचितवन्त इति ज्ञायते । तत्त्वसङ्ख्यानटिप्पण्यप्येतैः कृतेति पं. गौडगेरि गोपाल-कृष्णाचार्यैरुच्यते[२] । एते द्वे अप्यप्रकाशिते । तृतीया त्विदानीं संशोधिता भावचन्द्रिका प्रमाणपद्धतिटिप्पणी । एतद्भिन्नाः केचन ग्रन्था अपि एतैः रचिताः स्युः ।

### ७.२. *भावचन्द्रिकायाः वैशिष्ट्यम्*

१. पठनपाठनसम्प्रदायागतप्रमाणपद्धतेरध्ययनेऽध्यापने च महान्त-मुपकारमादधतीयं कृतिः ।

२. सङ्क्षेपविस्तराभ्यामत्र विषयनिरूपणपद्धतिरतीव मनोहारिणी ।

३. प्रायशोऽधिकानां व्याख्येयग्रन्थस्थपदवाक्यानाम् अर्थविवरणेन भावाविष्कारेण च विदुषां पामराणां च हृदयहारिणी ।

४. द्वैतवेदान्त - न्याय - व्याकरणशास्त्रसम्बन्धिविचाराणां तलस्पर्शि निरूपणविधात्री टिप्पणी ।

---

१. मद्रपुरी ग्रन्थालयेऽस्याः एकोंऽशो लभ्यते (M.S. No. T.C - II, 806) ।

२. see ग्रन्थमालिकाप्रसरः page 54.

५. प्रमाणपद्धतौ प्रतिपादितेभ्यो विषयेभ्योऽधिजायमानानां शङ्कानां निराकरणपूर्वकं समाधानकारिणी ।

६. प्रमाणपद्धत्युक्तविषयाणामनुव्याख्यानप्रमाणलक्षणाद्यन्यग्रन्थसंवादादिव्यवस्थापिका ।

तस्मादेषा टिप्पणी पाठान्तरसंशोधनादिना सहावश्यं प्रकाशमुपनेतुमर्हेति मातृका- चतुष्टयसाहाय्येन सम्पादिता ।

### ७.३. *प्रकृतमातृकापरिचयः*

#### ७.३.१. *भावचन्द्रिकामातृकाः*

**'भावचन्द्रिका'** इति ग्रन्थरत्नस्य शुद्धपाठसम्पादनार्थं मातृका-चतुष्टयमाश्रितम् । चतस्रोऽपि मातृकाः कर्गजपत्रे देवनागरीलिप्यां लिखिताः वर्तन्ते । तत्र मातृकाद्वयं सम्पूर्णं लब्धम् । अवसिते द्वे अपूर्णे । पाठसम्पादनप्रक्रियायां मातृकाणां कृते, सरलतया क,ख, ग,घ. इति सङ्केताक्षराणि दत्तानि ।

#### *१.क .मातृका*

एषा तावद् अनन्तश्रीविभूषितैः उत्तरादिमठाधीशैः श्रीसत्यात्मतीर्थश्रीचरणैः कर्नाटकराज्यस्य होसपेटेप्रान्त्यस्थोत्तरादिमठग्रन्थालयादुद्धृत्य दत्ताऽस्ति । सम्पूर्णतया लब्धा ।

मातृकाविवरणम् - सामग्री - कर्गजपत्रम्, पत्राणि - ८३ । पङ्क्तयः- ९ । प्रतिपङ्क्ति अक्षराणि - ५० । लिपिः – देवनागरी । स्थितिः– समीचीना ।

### २. *ख.मातृका*

मातृकैषा मैसूरुप्राच्यविद्यासंशोधनालयग्रन्थालयात् प्राप्ता, परिपूर्णा च । प्रायः बहुशुद्धपाठयुक्तेयं मातृकैव प्रामुख्येन स्वीकृता ।

मातृकाविवरणम् – सामग्री - कर्गजपत्रम् । पत्राणि - ५४ । पङ्क्तयः- ११ । प्रतिपङ्क्ति- अक्षराणि - ४२ । लिपिः- देवनागरी । स्थितिः- समीचीना । मातृकासङ्ख्या- C २१०१.

### ३. *ग. मातृका.*

मातृकेयं मैसूरुप्राच्यविद्यासंशोधनालयस्य मातृकासङ्ग्रहालयात् प्राप्ताऽपूर्णा च । प्रत्यक्षपरिच्छेदपर्यन्तमेव लब्धा । तत्रापि कानिचित् पत्राणि लुप्तानि । यावन्ति लब्धानि तावन्ति समीचीनानि ।

मातृकाविवरणम् – सामग्री - कर्गजपत्रम् । पत्राणि -१-१५, १८-२५ । लुप्तपत्राणि - १६,१७. पङ्क्तयः -९. प्रतिपङ्क्ति अक्षराणि - ३८, मातृकासङ्ख्या = B १४०७. लिपिः - देवनागरी ।

### ४. *घ.मातृका.*

एषा मातृका डा. श्रीप्रभञ्जनाचार्याणां व्यासमध्वप्रतिष्ठानस्य मातृकालयात् प्राप्ता । इयमपि पूर्णतया न लभ्यते ।

मातृकाविवरणम् । सामग्री-कर्गजपत्रम् । पत्राणि- ५१-१०४ । लब्धपत्राणि - ५३ । लिपिः - देवनागरी । पङ्क्तयः - ९ । प्रतिपङ्क्ति-अक्षराणि - २६ । लेखकः - मङ्गलगीश्रीनिवासः ।

## ७.३.२. *प्रमाणपद्धतिमातृकाः*

### १. *च. मातृका*

पूर्णप्रज्ञग्रन्थालयादानीतैषा मातृका । सामग्री - कर्गजपत्रम् ।

मातृकासङ्ख्या - ३३७ । परिपूर्णा । स्थितिः - त्रुटिता । लिपिः - देवनागरी । आहत्यपत्राणि-१-३० ।

### २. *ज. मातृका*

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थालयात् प्राप्तैषा मातृका अपरिपूर्णा । आहत्य पत्राणि १-३४ । अनुपलब्धपत्राणि-२४,२५,२६. । लिपिः देवनागरी ।

मातृकाविवरणम् । सामग्री - कर्गजपत्रम् । ग्रन्थालये मातृकासङ्ख्या - ५३७ । स्थितिः - समीचीना ।

### ३. *त. मातृका*

एषा मातृकाऽपि पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थालयात् प्राप्ता । अपूर्णा च ।

मातृकाविवरणम् - सामग्री कर्गजपत्रम् । पत्राणि १-१६ । लिपिः- देवनागरी । ग्रन्थालये मातृकासङ्ख्या- ४६६ । स्थितिः- समीचीना ।

### ७.३.३. *पाठसम्पादनप्रकारः*

प्रमाणपद्धतेः शुद्धपाठशोधने मातृकात्रयमाश्रितम् । मातृका-चतुष्टयमाश्रित्य भावचन्द्रिकायाः शुद्धपाठसम्पादनं कृतम् । बहवः लेखकदोषा इदम्प्रथमतया सम्पादितायाः भावचन्द्रिकायाः सर्वासु मातृकासु दृश्यन्ते स्म । ते च यथामति निवारिताः ।

यत्र पाठचतुष्टयेष्वपि दोषोऽस्ति तत्राधष्टिप्पण्यां सम्भावितः शुद्धपाठः प्रदर्शितः । यत्र क्वचिद् भावचन्द्रिकायां प्रमाणपद्धतेः

पदादिकं न व्याख्यातं तत्रान्यटिप्पणीवाक्यानि अधष्टिप्पण्यां तत्पदादिभावाविष्काराय सङ्गृह्य प्रदत्तानि । पाठभेदाः ' ' – एतच्चिह्ने अन्तःकृत्वा मातृकानाम च निर्दिश्याधस्तात् सम्प्रदर्शिताः । भावचन्द्रिकोदाहृतप्रमाणवचनानामाकरग्रन्थोल्लेखः ( ) वर्तुला-वरणयोर्मध्ये संशोध्य योजितः । तदेवं मातृकाचतुष्टयं स्वीकृत्य प्रकृतः पाठः शुद्धतरः यथाशक्ति यथामति सम्पादितः । अत्रावसरे प्रमाणपद्धतेः भावचन्द्रिकायाश्च प्रतिविषयं शीर्षिकादि च प्रदत्तम् ।

### ७.४ .भावचन्द्रिकाविशेषविचाराः

#### ७.४.१. भावचन्द्रिकायां लक्षणलक्षणविचारः

श्रीजयतीर्थाः प्रमाणपद्धतिं लक्षणलक्षणनिरूपणपूर्वकं प्रारभन्ते । प्रमाणादीनां लक्षणकथनात् पूर्वं लक्षणेन कीदृशेन भाव्यमित्यवश्यं ज्ञातव्यम् । अतो लक्षणलक्षणनिरूपणावसरः प्राप्तः । लक्ष्यभिन्नेऽ-वर्तमानः सर्वत्र लक्ष्ये वर्तमानो धर्मो लक्षणं भवितुमर्हति ।

तदुक्तम्-

**'यो धर्मो लक्ष्ये व्याप्त्या वर्तते न वर्तते चान्यत्र स धर्मः लक्षणम् ।**[१]'

द्वैतदर्शने एतद्वाक्यार्थः विमर्शनीयः । द्वैतसिद्धान्ते तावदनेकपदार्थेषु अनुगतैकधर्मो नाभ्युपगतः । धर्माश्च प्रतिपदार्थं प्रतिवस्तु च भिन्ना एव । तदुक्तमनुव्याख्याने-

**'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि**[२]' इति ।

---

१. प्रमाणपद्धतिः प्रत्यक्षपरिच्छेदः । पृ. १०.

२. अनुव्याख्यानम् – अ-२, पा.२-अधि-६,श्लोक – ६७०.

न्यायदर्शने यथाऽनुगतजातिः सामान्यं वा सर्वत्र एकमेवाङ्गीकृतं न तथा द्वैतसमये । तथाहि- गोत्वरूपधर्मः एकस्यां गवि विद्यमानः अन्यः, अपरस्यां वर्तमानो भिन्न एव । तत् कथमत्रानुगतलक्षणकथनं सङ्गच्छत इत्यतः प्रमाणपद्धत्युक्तलक्षणलक्षणं वक्ष्यमाणप्रकारेण भावचन्द्रिकायां विवृतमस्ति–

**'यो धर्मः यत्सदृशो धर्मः लक्ष्ये लक्ष्यतावच्छेदकावच्छिन्ने सर्वत्र व्याप्त्या साकल्येन वर्तते, अन्यत्र लक्ष्यतावच्छेदकावच्छिन्नाद् भिन्ने न वर्तते तत्संसर्गिभिन्नः स धर्मः लक्षणमित्युच्यत इत्यर्थः । अनुगत-धर्मवादिना नैयायिकेनापि गोलक्षणसास्नानामनेकत्वाल्लक्षण-स्यान्तरङ्गधर्माभिव्यङ्ग्यसादृश्यप्रतियोगिधर्माणां यावल्लक्ष्यवृत्तित्व-मादायैव लक्षणस्य लक्ष्ये वृत्तित्वमभ्युपेयम्'** इति ।[३]

अयमभिप्रायः यल्लक्षणमित्युच्यते न स साक्षात् सर्वलक्ष्यसाधारण एको धर्मो भवति । किन्तु तल्लक्षणं प्रतिलक्ष्यभिन्नमेव । नैयायिकै-र्गोर्लक्षणत्वेनाभ्युपगताः सास्नाः प्रतिगोभिन्ना एव दृष्टाः । किन्तु तासां परस्परं सादृश्यवत्त्वात् सामान्याकारेण प्रातिस्विका एव ताः गोर्लक्षणानीत्युच्यन्ते । सास्नादिमत्त्वरूपलक्षणस्य लक्ष्ये व्याप्तिः = सकललक्ष्यवृत्तित्वं तु नैकस्य । किन्तु तत्तद्गोगतान्तरङ्गधर्माभिव्यङ्ग्य-सादृश्यप्रतियोगिनामनेकेषां धर्माणामेव ।

### ७.४.२. *प्रमाणलक्षणविचारः*

प्रमाणपद्धतौ लक्षणलक्षणनिरूपणानन्तरं प्रमाणलक्षणमुच्यते । एतल्लक्षणं तु अन्यदार्शनिकाङ्गीकृतप्रमाणलक्षणापेक्षया बहु व्यतिरिक्त-

३. भावचन्द्रिका – प्रत्यक्षपरिच्छेदः ।

मस्ति । नैयायिकाः **'यथार्थज्ञानकरणान्येव प्रमाणानि'** इति सङ्गिरन्ते । प्राभाकरास्तु **'यथार्थज्ञानमात्रं प्रमाणम्'** इति वदन्ति । व्याकरणशास्त्रे तु भावकरणयोः ल्युट् स्मर्यते । अतः जयतीर्थाः उभयोः प्रमाणत्वमवोचन् । यदा भावे ल्युट्प्रत्ययः तदा प्रमाणशब्दः केवलप्रमाणवाची । करणे ल्युट्प्रत्यये तु अनुप्रमाणवाची । एवमयं शब्दः प्रमा-तत्साधनोभयं वक्ति- इत्यभिप्रायेण **'यथार्थं प्रमाणम्'** इति केवलानुप्रमाणरूपप्रमाणसामान्यलक्षणमभिहितम् ।

अत्र यथाशब्दः यथावस्थितवाची । अर्थशब्दः विषयवाची । एवं च यथावस्थितज्ञेयविषयीकारित्वं प्रमाणानां लक्षणम् । तत्र ज्ञानं साक्षाद् ज्ञेयविषयीकारि चेत्, करणानि ज्ञानद्वारा अर्थान् विषयीकुर्वन्तीति आपाततः समाधानमुच्यते प्रमाणपद्धतिकृद्भिः श्रीजयतीर्थैः ।

**'ज्ञेयविषयीकारित्वं च साक्षाद् वा साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन वा विवक्षितम्**[1]**'** इति ॥

इदं तु परन्यायेन समाधानम् । यद्यपि द्वैतदर्शने ज्ञानतत्साधनयोरुभयोरपि साक्षादेव ज्ञेयविषयीकारित्वमभिहितम् । अतोऽत्र वानिवालनृसिंहाचार्या एवं समाधानं स्वकीयभावचन्द्रिकायां प्रब्रुवते ।

**'द्वितीयो वाशब्दः उपमायाम् । ज्ञान इव करणेऽपि मुख्यमेव विवक्षितमिति हेतोरित्यर्थः । अस्मिन् पक्षे 'साक्षाद्वा' इत्यनन्तरं ज्ञेयतासम्पादकत्वेनेति शब्दाध्याहारो न कार्य इति ज्ञानकरणयोर्ज्ञेयतासम्पादन एव मुख्यामुख्यभेदः । विषयीकारित्वं तूभयत्र मुख्यमेवेत्येतत् सुधायामुक्तम् ।'** इति[2] ॥

१. प्रमाणपद्धतिः – प्रत्यक्षपरिच्छेदः । पृ.३९. २. भावचन्द्रिका – प्रत्यक्षपरिच्छेदः ।

अयमत्र भावार्थः । ज्ञानतत्साधनयोः साक्षादेव ज्ञेयविषयीकारित्वं वर्तते । तत्र ज्ञानं विषयस्य साक्षाद् ज्ञेयतासम्पादकं सद् ज्ञेयं विषयीकरोति । करणं साक्षाद् ज्ञेयविषयीकार्यपि विषयस्य न साक्षाद् ज्ञेयतासम्पादकम् । किन्तु स्वजन्यज्ञानद्वारा । अतः **'साक्षाद्वा'** इत्यनन्तरं ज्ञेयतासम्पादकत्वेनेति पदाध्याहारः प्रथमव्याख्यायां कर्तव्यः । तत्र **'साक्षात्'** इति पदं ज्ञेयतासम्पादनरूपक्रिया-विशेषणमेव, न तु ज्ञेयविषयीकरणविशेषणम् ।

एवं प्रथमव्याख्यानेन ज्ञानकरणयोः साक्षाद् ज्ञेयविषयीकारि-त्वाङ्गीकाराद् द्वैतदर्शनानुगुण्यं भवति । पुंनरत्र नृसिंहाचार्यैरेवमुच्यते । वाशब्द आवर्तनीयः । आवर्तितो द्वितीय उपमायां वर्तते । तथा च यथा ज्ञाने साक्षाद् ज्ञेयविषयीकारित्वमस्ति एवं करणेऽपि मुख्यमेव ज्ञेयविषयीकारित्वम् । अतो न दोषः । तथा च न्यायसुधानुगुण्यमपि सम्पादितं भवति । विष्णुतत्त्वविनिर्णये–

**'याथार्थ्यमेव प्रामाण्यं तन्मुख्यं ज्ञानशब्दयोः'** इत्यादि ब्रह्मतर्के[1]'

इत्यत्र ज्ञानगतं प्रामाण्यं मुख्यं तत्साधनगतप्रामाण्यममुख्यम् इति कृतः व्यवहारस्तु तयोर्यद् ज्ञेयतासम्पादनसामर्थ्यं तदनुसृत्येति मन्तव्यम् । न तु ज्ञेयविषयीकारित्वमाश्रित्य । तस्य उभयोः साम्याद् इत्युक्तम् ।

### ७.४.३. *यथार्थशब्दार्थविचारः*

**'यथार्थं प्रमाणम्'** इति लक्षणवाक्यस्थयथार्थपदेन यथावस्थित-ज्ञेयविषयीकारित्वरूपलक्षणं कथं लभ्यते ? तत्र यथाशब्दोऽनति-क्रमार्थकः । अर्थशब्दो ज्ञेयार्थकः । तथाऽपि विषयीकारित्वरूपार्थलाभः कथम् ? इत्येवं व्याख्येयग्रन्थे आशङ्का भवति । अत्र भावचन्द्रिका–

१. वि.त.विनिर्णयः – परिच्छेदः .१.पृ.३९२.

**'प्रत्यक्षादेर्ज्ञेयानतिक्रमः स्वसत्तायां न विवक्षितः। किन्तु विषयीकरणक्रियायामेव। एवं च नासम्भव इति भावेनाऽह– यथावस्थितमेवेति॥ ज्ञेयं येन प्रकारेण वर्तते तं प्रकारं परित्यज्यान्यथाविषयीकरणे ज्ञेयातिक्रमो भवति। तथैव विषयीकरणे त्वनतिक्रमो भवति। तथा च यथावस्थितमात्रार्थविषयीकारित्वमपि अनतिक्रमार्थकयथाशब्दार्थ एव।'** इति।

एवं च विषयीकारित्वमपि यथाशब्दाल्लभ्यते।

### ७.४.४. *व्याकरणशास्त्रविचारः*

व्याकरणशास्त्रसम्बन्ध्यपूर्वविषयोऽपि अत्र भावचन्द्रिकायां दरीदृश्यते। स्थालीपुलाकन्यायेन कश्चन विचारः प्रदर्श्यते। तत्र-

**'सजातीयविजातीयव्यावृत्ततया लक्ष्यावधारणं लक्षणज्ञानस्य प्रयोजनम्**[१]' इति प्रमाणपद्धतिमूलम्।

अत्र सजातीयेति शब्दरूपं कथम्? समाना जातिः यस्येति विग्रहे बहुव्रीहिसमासानन्तरं समानशब्दस्य सभावे '**सजाति**' इत्येव रूपं भवति। न च '**सजातीयेषु वा केचित्**' इति वार्तिकोक्तेः जातीयशब्दे परे समानशब्दस्य सभावो भवत्येवेति शङ्क्यम्। समानजातिशब्दाच्छप्रत्ययस्यैवानुपपत्त्या जातीयेति रूपासिद्धेः। समानजातिशब्दात् '**वृद्धाच्छः**[२]' इति सूत्राद्धि छप्रत्ययो वाच्यः। परन्तु '**वृद्धिर्यस्याचामादिस्तद्वृद्धम्**[३]' इति सूत्रेण '**वा नामधेयस्य वृद्धसञ्ज्ञा वाच्या**[४]' इति वार्तिकेन वाऽत्र वृद्धसञ्ज्ञाभावात् छप्रत्ययानुपपत्तिः, सजातीयशब्दव्युत्पादनं चानुपपन्नं भवति। तस्माद् भावचन्द्रिकाकर्तॄणां

१. प्रमाणपद्धतिः – पृ.२३.
२. पा.सू. ४.२.११४.
३. पा.सू. १-१-७३.
४. वार्तिकम् – ३५८.

नृसिंहाचार्याणां मते - **'जातेरदं जातीयम्, समानं च तत् जातीयं च सजातीयम्'** इति विग्रहो बोध्यः । समाना जातिर्यस्येति विग्रहोऽनुपपन्न एव ।

एवमन्येऽपि न्यायशास्त्रीया अन्यान्यशास्त्रीया विषयाश्च चर्चिताः ।

### ७.५.*उपसंहारः*

एवमाद्यनेकविशिष्टविषयभूयिष्ठा, पठनपाठनसम्प्रदायगतप्रमाण-पद्धतिव्याख्याभूता, कालतोऽपि प्राचीनतरा (१६००) इयं वानिवाल-नृसिंहाचार्यविरचिता भावचन्द्रिका टिप्पणी मया बहुप्रयासेन प्रकृत-ग्रन्थोपयोगिविविधविषयसमाकलनपुरःसरं सम्पादिता । लिखितश्च प्रमाणस्वरूपविषये परमतविमर्शपूर्वकस्वाभिमतप्रमेयनिरूपणानुगुणं सविमर्शं विस्तृतोपोद्घातः । विहितश्च महान् प्रयत्नः दोषदूरोत्सारे उपलब्धमातृकाचतुष्टयमाश्रित्य ।

अत्रोपोद्घाते प्रायशो ग्रन्थाधारेणैव विषयो निरूप्यमाणोऽपि क्वचिदयं प्रबन्धसारः स्वमत्युत्प्रेक्षितशास्त्राविरोधिविषयैरप्याक्रान्तो भवति । नात्राल्पदृष्टिः कर्तव्या । प्रमादस्य सम्भावितत्वाद् यदत्र स्खलनं भवेत् तत् क्षमासमुद्राः सदयहृदयाः विपश्चिदपश्चिमाः मधुरया कारुण्य-पूर्णया दृष्ट्या निरीक्ष्य ससूचनं क्षमन्तामिति सविनयं सम्प्रार्थये ।

अनेन वाग्व्यापारेण भारतीरमणमुख्यप्राणान्तर्गतः रुग्मिणीसत्य-भामासमेतः साकल्येन वाचामगोचरोऽप्यौपनिषदः पुरुषः गोपालकृष्णः प्रीणात्विति सम्प्रार्थ्य विरमामि ।

*सुधीजनपादरेणुः*

**डा. के. शङ्करनारायण अडिगः**

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

॥ शुभमस्तु ॥ हरिः ॐ ॥

अथ श्रीमज्जयतीर्थभिक्षुविरचिता

# प्रमाणपद्धतिः

## अथ प्रत्यक्षपरिच्छेदः

### (मङ्गलाचरणम्)

**प्रणम्य चरणाम्भोजयुगलं कमलापतेः ।**
**प्रमाणपद्धतिं कुर्मो बालानां बोधसिद्धये ॥ १ ॥**

**श्रीमद्रामचन्द्रतीर्थपूज्यपादशिष्यश्रीवानिवालनरसिंहाचार्यविरचिता**
**प्रमाणपद्धतिटिप्पणी भावचन्द्रिका**

*(मूले कृतस्य मङ्गलस्य प्रयोजनवर्णनम्)*

परमविशिष्टो भगवान् जयतीर्थमुनिः चिकीर्षितस्य[१] ग्रन्थस्य निर्विघ्नपरिसमाप्तिमुद्दिश्य कृतं मङ्गलं ग्रन्थादौ निबध्नाति - **प्रणम्येति** ॥

*(मङ्गलवादः)*

ननु मङ्गलं न कर्तव्यम् । निष्प्रयोजनत्वात् । न चाभीष्टसमाप्तिरेव प्रयोजनम् । प्रमत्ताद्यनुष्ठिते कर्मण्यकृतेऽपि मङ्गले[२] समाप्तिदर्शनात् । क्वचित् कृतेऽपि मङ्गले[२] समाप्त्यदर्शनाच्चेति शङ्कायां मङ्गलं[३] तावत्

१.**'स्वचिकीर्षितस्य'** .ग . क    २.**'मङ्गळे'** ग.
३.**'मङ्गळं'** ग.

सर्वैरपि शिष्टैर्ग्रन्थारम्भादावभीष्टसमाप्त्युद्देशेनानुगीयत इत्यविवादम्[1] । तेन [2]चाविगीतशिष्टाचारलक्षणप्रमाणेनाभीष्टसमाप्तिसाधनत्वं सिद्धमेव ॥

*(मङ्गलसमाप्त्योः शङ्कितान्वयव्यतिरेकव्यभिचारनिरासः)*

तथा च यत्र त्वकृतेऽपि मङ्गले समाप्तिस्तत्र जन्मान्तरीयमेव मङ्गलं[3] कारणमिति[4] कल्पनीयम् । यत्र कृतेऽपि मङ्गले नाभीष्टसमाप्तिः, तत्राङ्गवैगुण्यं कल्पनीयम् । अस्माभिरनुष्टीयमानं मङ्गलं भक्तिश्रद्धा-द्यतिशयरूपाङ्गसहितत्वाद् अभीष्टसाधनं भवत्येव । अतो न मङ्गलवैफल्यमिति प्रमेयसूचनद्वारोक्तशङ्कापरिहाराय नम्येत्येवमनुक्त्वा प्रणम्येत्युक्तम् । भक्त्यादिपूर्वकं नत्वेत्यर्थः । कमलापते-श्चरणाम्भोजयुगलं[5] प्रणम्य बालानां बोधसिद्धये प्रमाणपद्धतिं कुर्म इति सम्बन्धः ॥

अत्र कुर्म इत्युत्तमपुरुषबहुवचनप्रयोगबलाद् वयमिति लभ्यते ।

*(कमलापतिपदग्रहणकृत्यम्)*

सकलवाङ्मनसदेवतात्वाद् ग्रन्थारम्भे लक्ष्मीस्तवनं कार्यमिति भावेन कमलापतेरित्युक्तम् । अनेन सर्वोत्कृष्टविष्णुभार्यात्वरूपगुणाभिधाना-ल्लक्ष्मीस्तवनं[6] कृतं भवतीति ज्ञेयम् । रमापतेरित्यनुक्त्वा कमलापतेरिति कथनं तु वन्द्यताप्रयोजकेष्टत्वविशिष्टत्वयोर्नारायणे सत्त्वसूचनार्थम्[7] ।

---

१.'इत्येतदविवादम्' ग.क.

२.'चाविगीतं शिष्टा-' ग.

३.'मङ्गळं' ग.

४.'कारणत्वेन' ग. क.

५.'युगळं' ग.

६.'गुणाभिधानलक्ष्मीस्तवनं' ग.

७.'सत्वसूचनार्थम्' क.

*(कमलापतिपदव्युत्पत्तिः)*

**'कमु कान्तौ'** इति धातुव्याख्यानात् **कमम्** अभीष्टं **लाति** = ददातीति कमला । 'ला दाने' । तस्याः **पति**रित्युक्त्याऽभीष्टदातृत्व-रूपम् इष्टत्वमुक्तं भवति । **कस्य** = ब्रह्मणः, **मं** = ज्ञानं, **लाती**ति कमला, तस्याः पतिरित्युक्त्या ब्रह्माद्युत्तमत्वरूपं विशिष्टत्वं चोक्तं भवतीति ज्ञेयम् ॥

चरणे अम्भोजे इव चरणाम्भोजे, [1]तयोर्युगलमित्यर्थः । अत्राम्भोज-ग्रहणमतिमृदुत्वादिगुणविशिष्टत्वज्ञापनार्थम् ॥

यद्वा, चरणमम्भोजमिव चरणाम्भोजम् । तद्युगं युग्मम्, इष्टप्राप्त्य-निष्टनिवृत्तिलक्षणं लातीति चरणाम्भोज[2]युगलमित्यर्थः । **'युग्मं तु युगलं[2] युगम्'** इत्यभिधानात् ॥

*(प्रमाणपद्धतिशब्दार्थः)*

**प्रमाणानां** प्रत्यक्षादिप्रमाणानां **पद्धतिरिव पद्धतिः** । प्रमाणपद्धतिः, प्रसिद्धमार्गस्य गम्यप्रापकत्वमस्य प्रकरणस्य [3]ज्ञेयप्रमाणस्वरूप-प्रापकत्वम् । इह प्राप्तिस्तु ज्ञानरूपेति प्रापकत्व-साम्यात् पद्धति-शब्दप्रयोगः ॥

यद्वा, **प्रमाणानां** परोदीरितप्रमाणानां **पदा** एकदेशेन = पादेन वा **हतिः**, पराहतिः यस्मिन् ग्रन्थे स प्रमाणपद्धतिरित्यर्थः ॥

बालानामल्पमतीनां प्रत्यक्षादिप्रमाणस्वरूपविशेषविषयकबोध-स्योत्पत्तय इत्यर्थः[4] । यद्वा, **'ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन**

---

१. **'तयोर्युगम्'** ग. क.
२. **'युगळम्'** ग.
३. **'ज्ञेयं प्रमाण-'** ग.
४. **'उत्पत्तयेत्यर्थः'** क. ग.

**तिष्ठासेत्'** (बृ.उ.३-५-१) इत्यत्र उपपत्तिजं ज्ञानं बलम्[1] । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । बलमेव **बाल्यम्** । तेन **तिष्ठासेत्** = उपपत्तिजज्ञानं सम्पादयेत् ; श्रवणं कृत्वा मननं कुर्यादिति कथितत्वाद् बलमुपपत्तिजं ज्ञानम् । तस्येमे बालाः = उपपत्तिजज्ञानकुशलाः । तेषामित्यर्थः ॥

बालायेत्येतावता पूर्तेः बोधसिद्धय इति कथनं त्वस्य प्रकरणस्य भगवदपरोक्षपर्यन्तं तत्त्वज्ञानार्थम् । बोधजाता सिद्धिश्चेति मध्यम-पदलोपिसमासः । **'सिद्धाश्रमम्'** इत्यादौ सिद्धिरित्येतदपरोक्ष-ज्ञानमिति प्रसिद्धम् ॥

*(मङ्गलश्लोके 'कुर्मः' इति लट्प्रयोगस्य साधुत्वप्रतिपादनम्)*

ननु कुर्म इति लट्प्रयोगः कथम् ? आरब्धपरिसमाप्ति-क्रियोपलक्षितकालविशेषे वाच्ये **'वर्तमाने लट्'** (पा.सू-३-२-१२३) इत्यनेन लटोऽनुशासनात् । इह प्रमाणानां लक्षणानां लक्षणादि-प्रतिपादकग्रन्थरूपक्रियाया अनारब्धत्वादिति चेत्, उच्यते ॥

यद्यपि तत्राऽदौ तावत् प्रमाणसामान्यलक्षणमुच्यत इति उत्तरग्रन्थ एव लक्षणं वक्ष्यति । तथाऽपीहानुष्ठितं मङ्गलं[2] ज्ञाप्यते, चिकीर्षितं प्रकरणं च ज्ञाप्यते प्रमाणपद्धतिमिति [3]तज्ज्ञापनव्याजेनोत्तरग्रन्थे वक्ष्यमाणलक्षणप्रमाणस्योद्देशरूपग्रन्थस्तावदारब्धः । अत एव लक्षण-मात्रं वक्ष्यति । तथा च कुर्म इति प्रयोगः साधुरिति ज्ञेयम् ।

स्वचिकीर्षितप्रकरणस्य वैय्यर्थ्यमाशङ्कते - **यद्यपीति** ॥

---

१.**'बालम्'** क. ग. २.**'मङ्गळं'** ग.

३.**'तदज्ञापन'** क.ग.

*(प्रकरणस्यास्याऽरम्भणीयत्वप्रतिपादनम्)*

**(प्र.प.) यद्यपि भगवत्पादैरेव प्रमाणलक्षणादिकमभिहितम्[1] । तथाऽपि गम्भीरया वाचा विक्षिप्य वर्णितं न मन्दैः [2]शक्यते सुखेन बोद्धुमिति तदर्थमिदं [3]प्रकरणमारभ्यते ॥**

**(भा.च.) अभिहितमिति** ॥ प्रमाणलक्षणादिग्रन्थे इति शेषः । प्रमाणविभागः, तद्विशेषलक्षणं, लक्षणगतविशेषणप्रयोजनादिकमादिशब्दार्थः । भगवत्पादैरेवेत्यवधारणबलेन तैरेवाभिहितम् । भवद्भिः किमर्थं वक्तव्यमिति सूचनाद् वैय्यर्थ्यमाशङ्कितं भवति ॥

परिहरति - **तथाऽपीति** ॥ **गम्भीरया वाचा** = बह्वर्थगर्भितत्वेनाविस्पष्टतया, **वाचा** = प्रमाणलक्षणादिग्रन्थरूपया, **विक्षिप्य** = व्यवधानेन वर्णितमित्यर्थः । प्रमाणादिस्वरूपमिति शेषः ॥

लक्षणविचारस्य प्रमाणलक्षणग्रन्थे नविलक्षणत्वाधिकरणादौ च करणात् तदर्थं सुखेन बोधाय इत्युक्तम्[4] ॥

---

१. **'यथार्थं प्रमाणम् । तद् द्विविधम् । केवलमनुप्रमाणं च । यथार्थज्ञानं केवलम् । तत्साधनमनुप्रमाणम्'** *(प्रमाणलक्षणम्)*

**'याथार्थ्यमेव मानत्वं तन्मुख्यं ज्ञानशब्दयोः'**

*(अनुव्याख्यानम् – नविलक्षणत्वाधिकरणम् – अध्याय– २, पाद– १, अधिकरणम्- २)*

२. **'सुखेन शक्यते बोद्धु-'** त.

३. प्रकरणलक्षणं त्वेवं ग्रन्थान्तरेऽभिहितम् –

**'शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् ।**
**आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥'** इति ।

*(उपाधिखण्डनश्रीनिवासतीर्थीयटिप्पण्युदाहृतस्मृतिवाक्यम् )*

४. **'इत्युक्तम्'** इति क.ग. पाठे नास्ति ।

यद्वा, भगवत्पादीयप्रकरणस्यार्थो यस्मिन् तत् **तदर्थं** = तद्व्याख्यानरूपमिदं प्रकरणमित्यर्थः । नहि [१]व्याख्येयेन व्याख्यानस्य वैय्यर्थ्यम् । व्याख्येयस्य स्पष्टार्थत्वे हि व्याख्यानवैय्यर्थ्यम् । न च भगवत्पादीयं [२]प्रकरणं स्पष्टार्थमिति भावेनोक्तम् - **गम्भीरयेति** ॥

*(लक्षणलक्षणविचारः)*

प्रमाणलक्षणं वक्तुं लक्षणशब्दार्थापरिज्ञाने, अस्येदं लक्षणमिति कथनेऽपि लक्षणपदप्रवृत्तिनिमित्तज्ञानाभावेनास्येदं लक्षणमिति ज्ञातुमशक्यत्वात्, लक्षणशब्दार्थावगत्यर्थं लक्षणस्य लक्ष्यस्य[३] लक्षणमाह- **यो धर्म इति** ॥

**(प्र.प.) [४]यो धर्मो लक्ष्ये व्याप्त्या वर्तते, न वर्तते चान्यत्र स**

१.**'व्याख्यायेन'** क. ग.

२. प्रमाणलक्षणरूपं भगवत्पादीयं प्रकरणम् इत्यर्थः ।

३.**'लक्षणस्य लक्षणमाह'** ग. क.

४. **वेदे.**– यो धर्म इत्यादिना । अत्र यो धर्म इत्यादिना तत्तल्लक्ष्यगतः प्रातिस्विकधर्म एव सामान्याकारेणोच्यते । तस्य लक्ष्ये व्याप्तिस्तत्रतत्र लक्ष्ये च वर्तमानत्वमेव विवक्षितं न त्वेकस्य सर्वलक्ष्यगतत्वमतोऽनुगत-धर्मलक्षणाभावात्कथमेतदिति शङ्काऽनवकाशः । यथा गन्धः पृथिव्या लक्षणमित्युक्ते नैकस्य गन्धस्य सर्वपृथिवीगतत्वं प्रतीयते ; किन्तु तत्तत्पृथिवीगत एव गन्धः सामान्याकारेण तथाऽत्रापीति ध्येयम् । न च तत्र गन्धत्वेन गन्धानामनुगमात्सामान्योक्तिः सम्भवतीति वाच्यम् । गन्धत्वानुगमेन गन्धानामनुगमासम्भवात् । न हि पितुः पाण्डित्येन पुत्रः पण्डितो भवति । अस्माभिरपि लक्षणीभूतधर्मानुगतैकसादृश्यस्य लक्ष्यमाणत्वाच्च । **(पृ.सं.१६)**
***अत्र सर्वे टिप्पणीविषयाः 'प्रमाणपद्धतिः - प्रकाशनम्- द्वैतवेदान्त फौण्डेशन्, बेङ्गळूरु ,२००४' मुद्रितपुस्तकतः सङ्गृहीताः ।***

**धर्मो लक्षणमित्युच्यते । यथा गोः [1]सास्नादिमत्त्वम् । [2]तद्धि गोषु सर्वत्रास्ति, नास्ति चागोषु ॥**

**(भा.च.) यो धर्मो** यत्सदृशो धर्मः, **लक्ष्ये** = लक्ष्यतावच्छेदकावच्छिन्ने सर्वत्र, **व्याप्त्या** = साकल्येन, वर्तते । **अन्यत्र** = लक्ष्यतावच्छेदकावच्छिन्नाद् भिन्ने न वर्तते, तत्संसर्गिभिन्नः, स धर्मः लक्षणमित्युच्यत इत्यर्थः[3] ॥

अनुगतधर्मवादिना नैय्यायिकेनापि गोलक्षणसास्नानामनेकत्वाल्लक्षणस्यान्तरङ्गधर्माभिव्यङ्ग्यसादृश्यप्रतियोगिधर्माणां यावल्लक्ष्यवृत्तित्वमादायैव लक्षणस्य लक्ष्ये व्याप्यवृत्तित्वमभ्युपेयम् । सास्नात्वाभिव्यङ्ग्यसादृश्यप्रतियोगिकाः[4] सर्वाः सास्ना एवेति लक्ष्येतरावृत्तित्वं च युज्यते ॥

एतेन **'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला[5] अपि'**(अनु. २.२.१४) इत्यनुव्याख्यानोक्तेरनुगतधर्माभावेन कथमेकस्य लक्षण-

---

१. **जना.–** सास्नादिमत्त्वमिति । गलकम्बलादिमत्त्वमित्यर्थः । आदिशब्देन लाङ्गूलककुत्खुरविषाणादीनां ग्रहणम् । **(पृ.सं.२८)**

२. **वेदे** - तद्धीति ॥ अत्रापि नैकं सास्नादिमत्त्वं सर्वगोवृत्ति किन्तु प्रातिस्विकमेव । तच्च सामान्यरूपेण तत्र तत्र गवि वर्तत इत्यर्थः । न च सास्नादिमत्त्वस्य प्रातिस्विकस्य तत्तद्व्यक्तिरूपस्य कथं सामान्यरूपत्वमिति वाच्यम् । प्रातिस्विकस्यापि तस्य विशेषबलेन सामान्यरूपतोपपत्तेः । उक्तं हि भगवत्पादैः ।

'अतो विशेषसामान्यरूपं सर्वमपीष्यते ।
व्यावृत्तं यच्च सामान्यं तदेव स्याद्विशेषतः ॥' इति ॥ **(पृ.सं.२९)**

३. **'उच्यतेत्यर्थः'** क. ग.

४. **'प्रतियोगिभूताः'** क. ग.

५. **'अखिला'** क.ग.

भूतधर्मस्य लक्ष्ये व्याप्त्या वर्तनमुच्यते, [१]लक्षणभूतधर्मस्य कथम् अलक्ष्यनिष्ठात्यन्ताभावप्रतियोगित्वरूपमलक्ष्यावृत्तित्वमिति चोद्यं चापास्तम् ॥

प्रामाणिकप्रतियोगिकात्यन्ताभावाभावात् लक्षणभूतधर्मस्य कथम् अलक्ष्यनिष्ठात्यन्ताभावप्रतियोगित्वरूपमलक्ष्यावृत्तित्वमिति चोद्यं चापास्तम् । अन्योन्याभावगर्भत्वेनैव लक्षणवाक्यार्थकथनादिति ॥

यद्वा, अलक्ष्ये न वर्तते । तत्संसर्गवन्न भवति- इत्यलक्ष्यनिरूपितलक्षणधर्मिकसंसर्गो[२] निषिध्यते । अलक्ष्याधिकरणकलक्षणसंसर्गो वा लक्ष्ये निषिध्यते । उक्तोभयविधोऽपि संसर्गस्त्वप्रामाणिक एवेति न काऽप्यनुपपत्तिः ॥

एवमसम्भविलक्षणादावपि द्रष्टव्यम् । न च यो धर्मो लक्ष्ये व्याप्त्या वर्तते न वर्तते चान्यत्र स धर्मो लक्षणमित्येव वक्तव्यम्, इत्युच्यत इत्येतद् व्यर्थमिति वाच्यम् ॥

तथात्वे पुनरुक्तिः स्यात् । लक्षणपदेन लक्ष्येतरावृत्तित्वे सति सकललक्ष्यवृत्तिधर्म उच्यते । तथा च यो धर्मो लक्ष्ये व्याप्त्या वर्तते, न वर्तते चान्यत्र स धर्मो लक्षणम् । लक्ष्येतरावृत्तित्वे सति सकललक्ष्यवृत्तिधर्म इत्युक्तं भवतीति । अतः '**इत्युच्यते**' इत्युक्तम् । तथा च यो धर्म इत्यादिना लक्षणभूतं धर्मं सप्रकारमभिधाय स धर्म इत्यनेनोक्तमेव धर्ममनूद्य लक्षणमित्युच्यते । लक्षणमिति पदाभिधेयमिति लक्षणपदाभिधेयत्वविधानान्न पुनरुक्तिरिति ॥

---

१.इयं पङ्क्तिः ग. पुस्तके नास्ति ।

२.'**-कसंसर्गिकः**' क. ग.

ननु यो धर्म इति[१] लक्षणवाक्ये लक्ष्यवृत्तित्वं, तत्रापि व्याप्त्या वर्तनम्, अलक्ष्यव्यावृत्तत्वं चेति त्रीणि विशेषणानि सन्ति । तानि किमर्थानीत्याशङ्क्य त्रिप्रकारालक्षणेष्वतिव्याप्तिपरिहारार्थानीति वक्तुमलक्षणपरिज्ञानार्थमलक्षणस्य लक्षणमाह- **अन्यथाभूतं त्विति** ॥

*(अलक्षणलक्षणम्, लक्षणज्ञानप्रयोजनं च)*

**(प्र.प.) अन्यथाभूतं त्वलक्षणम् । तत् त्रिविधम् । असम्भवि यल्लक्ष्ये सर्वथा न वर्तते । यथा गोरेकशफत्वम् । अव्यापकं यल्लक्ष्यैकदेशे वर्तमानमपि तदेकदेशान्तरे न वर्तते । यथा गोः[२] शबलत्वम् । अतिव्यापकं यल्लक्ष्यादन्यत्रापि वर्तते । यथा विषाणित्वम् ॥**

**सजातीयविजातीयव्यावृत्ततया लक्ष्यावधारणं लक्षणज्ञानस्य प्रयोजनम् । [३]अस्मिन् ग्रामे देवदत्तगृहमिति वार्तां श्रुतवतो हि तद्ग्रामस्थेषु सर्वेष्वपि गृहेषु देवदत्तगृहबुद्धिः प्रसक्ता । ततो यत्र पताका तद् देवदत्तगृहमिति लक्षणज्ञाने सतीदमेव[४] [५]नान्यदित्यवधारणं जायते ॥**

**शब्दव्यवहारो वा लक्षणज्ञानस्य प्रयोजनम् । सास्नादिमान् गौरिति लक्षणज्ञाने सति यं यं सास्नादिमन्तं पिण्डं पश्यति तं तं गोशब्दवाच्यं प्रत्येति ॥**

---

१. 'इत्यादि' क.ग.
२. त. पाठे **'गोः'** इति नास्ति ।
३. **'यथा अस्मिन्'** त. च.
४. **'लक्षणज्ञानेनेदमेव'** त.
५. **'देवदत्तगृहम्'** इत्यधिकः पाठः च. पुस्तके ।

**यावदन्यतो व्यावर्तनीयं यावति चैकः शब्दो व्युत्पादनीय-स्तदुच्यते लक्ष्यमिति ॥**

**(भा.च.)** [१]सकललक्ष्यवृत्तित्वे सति अलक्ष्यव्यावृत्तत्वस्य योऽयमन्यथाभावस्तं प्राप्तमन्यथाभूतम् । तदेवालक्षणमित्यर्थः ॥

तथा सकलक्ष्यवृत्तित्वविशेषितालक्ष्यव्यावृत्तत्वस्याभावोऽलक्षणस्य लक्षणमित्युक्तं भवति ॥

*(लक्षणलक्षणे दलकृत्यविचारः)*

उक्तविशिष्टप्रतियोगिकाभावश्चातिव्यापकविषाणित्वरूपालक्षणे सकललक्ष्यवृत्तित्वरूपविशेषणे सत्यप्यलक्ष्यव्यावृत्तत्वरूपविशेष्या-भावात्, तथा अव्यापकशबलत्वरूपालक्षणे तु [२]अलक्ष्यव्यावृत्तत्व-रूपविशेष्ये सत्यपि सकललक्ष्यवृत्तित्वरूपविशेषणाभावात्, तथाऽ-सम्भव्येकशफत्वरूपालक्षणे तूभयाभावादुपपादनीय[३] इति ॥

तथा च वृत्तित्वं लक्षणस्य लक्षणमित्युक्ते असम्भविन्यतिव्याप्तिः । अतः लक्ष्यपदम् । लक्ष्यवृत्तित्वं लक्षणस्य लक्षणमित्युक्तेऽव्यापकेऽ-तिव्याप्तिः । अतः सकलपदम् ॥

सकललक्ष्यवृत्तित्वं लक्षणस्य लक्षणमित्युक्तेऽतिव्यापकेऽ-तिव्याप्तिः । अतः अलक्ष्यव्यावृत्तत्वे सतीत्युक्तमिति ॥

यद्यप्यलक्ष्यव्यावृत्तत्वपदेनासम्भविव्यावृत्तिः कर्तुं शक्या । तथाऽपि

---

१.**'सकळलक्ष्य-'** ग. इतः परं ग. पुस्तके सकलेति पदस्थाने सर्वत्र 'सकळ' इति पाठान्तरं ऊह्यम् ।

२.**'अलक्ष्यव्यावृत्तित्वरूप-'** ग. ३.**'उपपादनीयम्'** ग.क.

न लक्ष्यवृत्तित्ववैय्यर्थ्यम् । व्याप्त्या वृत्तित्वं कुत्रेति जिज्ञासायां लक्ष्यादन्यत्र वृत्तित्वकथनेऽलक्ष्यव्यावृत्तत्वेन विरोधात् । लक्ष्यादन्यत्र वृत्तित्वस्य बाधितत्वाच्च । अतो व्याप्त्या वृत्तित्वं लक्ष्य एवेति वक्तव्यमिति ॥

लक्ष्यादन्यत्रापि वर्तत इत्यनेन सकललक्ष्यवृत्तित्वे सति लक्ष्यादन्यत्र वृत्तित्वमतिव्यापकस्य लक्षणमित्युक्तं भवति । लक्ष्यादन्यत्र वृत्तित्वमात्रं त्वसम्भविन्यतिव्याप्तम् । सकललक्ष्यवृत्तित्वमात्रं तु सल्लक्षण[१] इति दोषद्वयपरिहाराय पदद्वयं बोध्यम् ॥

*(लक्षणज्ञानप्रयोजनम्)*

ननु यथार्थं प्रमाणमित्यादिना प्रमाणादिलक्षणकथनमयुक्तम् । निष्प्रयोजनत्वात् । न च लक्ष्यस्वरूपावधारणमेव प्रयोजनम् । प्रमाणमिति पदेनैव प्रमाणरूपलक्ष्यावधारणसम्भवादित्याशङ्क्य, लक्ष्यस्वरूपावधारणमात्रं[२] न लक्षणज्ञानस्य प्रयोजनम्, किन्त्वलक्ष्य-व्यावृत्ततया तदवधारणमेव ॥

तच्च प्रमाणलक्षणज्ञानेनैव साध्यमतो न लक्षणपरोत्तर-ग्रन्थवैय्यर्थ्यमिति भावेन लक्षणज्ञानस्य प्रयोजनमाह- **सजातीयेति** ॥

समाना जातिर्यस्य तत् सजातीयम् । सजातीयं च विजातीयं च सजातीयविजातीये । [३]ताभ्यां व्यावृत्ततया [४]ज्ञातत्वादिव्यवस्थापक-धर्मवत्तयेत्यर्थः ॥

ननु यदि लक्ष्यतावच्छेदकधर्मापेक्षया साजात्यादि विवक्षितं तदा

१. **'तल्लक्षणे'** ग. २. **'-धारणमत्र'** ग.
३. **'आभ्याम्'** ख. क. ४. **'ज्ञातत्वाज्ञातत्वादि-'** ख.

गोत्वरूपलक्ष्यतावच्छेदकापेक्षया सर्वं विजातीयमेव । न सजातीयं किञ्चित् । यदि लक्ष्यतावच्छेदकाधिकवृत्तिधर्मापेक्षया साजात्यादिस्तर्हि लक्ष्यतावच्छेदकगोत्वापेक्षयाऽधिकवृत्तिप्रमेयत्वेन सर्वं सजातीयमेव । न विजातीयं किञ्चित् । अतः सजातीयविजातीयव्यावृत्ततयेति कथमिति चेत् । उच्यते ॥

लक्ष्यतावच्छेदकाधिकवृत्तिधर्मेषु न्यूनवृत्तिर्यो धर्मः पशुत्वं तद्युक्तं सजातीयम् । तदधिकवृत्तिर्यो धर्मो द्रव्यत्वादिस्तद्युक्तं विजातीयमिति नानुपपत्तिः ॥

ननु समाना जातिर्यस्येति विग्रहः कथम् ? समाना जातिर्यस्येति विग्रहपक्षे समानजाति[1]- इति स्थिते समानशब्दस्य सभावे[2] सजातीत्येव शब्दरूपं भवति । न तु सजातीयमिति रूपम् ॥

किञ्च सजातीति शब्दरूपं चायुक्तम् । समानशब्दस्य **'ज्योतिर्जनपद..'**(पा.सू.६-३-८५) इत्यादिसूत्रेण [3]सभावप्राप्त्यभावात् ॥

न च **'सजातीयेषु वेति केचित्'** इति वार्तिकोक्तेः सजातीयमित्यत्र जातीयशब्दस्य परत्वात् समानशब्दस्य [4]सभावो युक्त इति वाच्यम् । समानजातिशब्दाच्छप्रत्यय इति स्थिते समानशब्दस्य सभावे[5] सजातीयेति रूपस्य वक्तव्यत्वात् ॥

न हि समानजातिशब्दात् छप्रत्ययो युक्तः । **'वृद्धाच्छः'** (पा.सू.४-२-११४) इति सूत्रे [6]वृद्धसञ्ज्ञकशब्दादेव छप्रत्ययविधानात् । नहि

१.**'समाना जात-'** ग.**'समानजात-'** ख. २.**'समानशब्दस्याभावे'**- ख. ग.
३.**'अभावप्राप्त्य-'** ख.ग. ४.**'अभावः'** ख. ग.
५.**'अभावे'** ख.ग. ६.**'वृद्धसञ्ज्ञिक-'** ग.

समानजातिशब्दस्य **'वृद्धिर्यस्याचामादिस्तद् वृद्धम्'** (पा.सू.१-१-७३) इति सूत्रेण, **'वा नामधेयस्य वृद्धसञ्ज्ञा वाच्या'** (वार्तिक-सङ्ख्या– ३५८) इत्यादिना, **'त्यदादीनि च'** (पा.सू.१-१-७४) इत्यनेन वा वृद्धसञ्ज्ञाऽस्ति । तथा च वृद्धसञ्ज्ञाभावे च सजातीय-शब्दस्यैवानिष्पत्तेः । समानशब्दस्य सभावः[१] सिद्ध्यति ॥

न च जातिशब्दस्य **'वृद्धिर्यस्याचामादिस्तद् वृद्धम्'** (पा.सू. १-१-७३) इति सूत्रेण वृद्धसञ्ज्ञोपपत्तेः **'जातेरिदम्'** इत्यर्थे छप्रत्यये जातीयशब्दनिष्पत्तौ जातीयशब्दस्य परत्वात् समानशब्दस्य सभावो युक्त इति वाच्यम् ॥

तथात्वे समाना जातिर्यस्येति विग्रहानुपपत्तेः । तथा, चास्मिन् पक्षे समानं च तत् जातीयं च सजातीयं, समानत्वं च पशुत्वविवक्षया ।

तथा विलक्षणं च तत् जातीयं च विजातीयम् । वैलक्षण्यं च पशुत्वविलक्षणद्रव्यत्वाद्यपेक्षयेति वक्तव्यत्वात् पूर्वोक्तो विग्रहश्चिन्त्य एवेति ॥

यद्यप्यलक्ष्यव्यावृत्तिज्ञानमेव लक्षणज्ञानस्य प्रयोजनम् । अलक्ष्यं तु विवक्षाभेदेन सजातीयं विजातीयं चेत्यभिप्रेत्येत्थमुक्तम् ॥

स्वरूपेन्द्रियत्वं साक्षिणो लक्षणम्- इत्यत्र प्रमातुरप्यलक्ष्यत्वात् तद्भिन्नतया साक्षिरूपलक्ष्यज्ञानस्य तल्लक्षणज्ञानेनासम्भवादलक्ष्य-व्यावृत्ततया लक्ष्यावधारणं लक्षणज्ञानस्य प्रयोजनमिति चोद्यं ज्ञातत्वाज्ञातत्वादिव्यवस्थापकधर्मवत्तयेति व्याख्यानेनैवापास्तम् ॥

भेदवद् विशेषस्यापि ज्ञातत्वाज्ञातत्वादिव्यवस्थापकधर्मत्वात् ।

१. **'न सभावः सिद्ध्यति'** इति स्वरसः पाठ ऊह्यते ।

प्रमातुः सकाशात् तादृशविशेषवत्तया साक्षिरूपलक्ष्यज्ञानजनकत्वस्य स्वरूपेन्द्रियत्वरूपसाक्षिलक्षणेऽप्युपपत्तेरिति ॥

लक्षणज्ञानेनालक्ष्यव्यावृत्ततया जायमानं लक्ष्यज्ञानं कुत्र दृष्टमित्यत आह- **अस्मिन् ग्राम इति ॥ देवदत्तगृह**मित्यनन्तरमस्तीति शेषः ।

**देवदत्तगृहबुद्धिरिति** ॥ इदं वा देवदत्तगृहमन्यद्वा- इति सन्देहरूपा देवदत्तगृहबुद्धिरित्यर्थः । **शब्दव्यवहारो वेति** ॥ शब्दः व्यवह्रियतेऽनेनेति व्युत्पत्त्या व्यवहारो वाच्यवाचकसम्बन्धज्ञानं[१], तद्वा लक्षणज्ञानस्य प्रयोजनमित्यर्थः । तथा चेतरव्यावृत्ततया गोरूपार्थो यदा [२]जिज्ञासोरुद्देश्यस्तदाऽलक्ष्यव्यावृत्तिज्ञानं लक्षणप्रयोजनम् ॥

इतरव्यावृत्ततया गोरूपार्थज्ञाने त्ववर्जनीयसन्निधितया **'अयमेव गोशब्दवाच्यः'** इति ज्ञानं भवति । न हि व्यावृत्ततया गोरूपार्थज्ञानानन्तरमप्ययं वाऽन्यो वा गोशब्दवाच्य इति सन्देहो दृश्यते ॥

यदा त्वेतेषु गोशब्दवाच्यार्थः क इति जिज्ञासा, तदा **सास्नादिमान् गौ**रित्यभिहिते उक्तलक्षणगोरूपार्थज्ञानवतः **अयं गोशब्दवाच्य** इति ज्ञानं भवति । अयं महिष्यादितो विलक्षण इति ज्ञानं त्ववर्जनीयसन्निधितया जायते ॥

नह्ययं गोशब्दवाच्य इति ज्ञानानन्तरं महिष्यादिव्यावृत्तौ सन्देहोऽस्ति । तथा च जिज्ञासोरुद्देश्यविवक्षयैव क्वचिद् व्यावृत्तिज्ञानं क्वचिद् वाच्यत्वज्ञानं प्रयोजनमित्युक्तमिति ज्ञेयम् ॥

---

१. **'वाच्यवाचकभावसम्बन्धज्ञानम्'** ख. **'वाच्यवाचकसम्बन्धिज्ञानम्'** क.
२. **सर्वत्र 'जिज्ञासुः'**इति पाठ उपलभ्यते । सः **'जिज्ञासोः'** इति परिवर्तितः ।

*(लक्ष्यलक्षणनिरूपणम्)*

ननु लक्ष्ये व्याप्त्या वर्तमानत्वे सतीति लक्षणलक्षणकथनावसरे लक्ष्यरूपार्थघटितत्वेनैव लक्षणलक्षणमभिहितम् । तत्र यद्युच्यमान-लक्षणकत्वं लक्ष्यस्य लक्षणं तदा लक्षणज्ञाने सति लक्ष्यशब्दार्थज्ञानं, लक्ष्यशब्दार्थज्ञाने सत्येव लक्षणशब्दार्थज्ञानमित्यन्योन्याश्रय इत्या-शङ्क्य लक्षणशब्दार्थाघटितत्वेन लक्ष्यस्य लक्षणमाह- **यावदिति** ॥

**यावत्** = यद्धर्मावच्छिन्नं, गोत्वादिरूपधर्मावच्छिन्नमित्यर्थः । **यावति** = यद्धर्मावच्छिन्ने, गोत्वादिरूपधर्मावच्छिन्ने, **एकः** = असाधारणशब्दो व्युत्पादनीयः, शक्ततया ज्ञापनीय इत्यर्थः ॥

*(प्रमाणसामान्यलक्षणम्)*

**(प्र.प) तत्राऽदौ तावत् प्रमाणसामान्यलक्षणमुच्यते । यथार्थं प्रमाणम् । प्रमाणमिति लक्ष्यनिर्देशः । यथार्थमिति लक्षणोक्तिः[१] । एवमुत्तरत्रापि[२] ज्ञातव्यम् । अत्र यथाशब्दोऽ-नतिक्रमे[३] वर्तते । अर्थशब्दश्चार्यत इति व्युत्पत्त्या[४] ज्ञेयवाची[५] ।**

१. **'यथार्थमिति लक्षणोक्तिः । प्रमाणमिति लक्ष्यनिर्देशः'** त.

२. टिप्पण्यनुसारेण **'अन्यत्रापि'** इति मूलपाठः सम्भाव्यते ।

३. **'ह्यनतिक्रमे'** त.

४. -कर्मव्युत्पत्त्येत्यर्थः । व्युत्पत्तिरवयवशोऽर्थकथनम् । ऋगताविति धातोः कर्मण्यौणादिके थप्रत्यये सार्वधातुकार्धधातुकयोरिति गुणे कृतेऽर्थ इति निष्पत्तेः । गत्यर्थस्य ज्ञानार्थत्वात् । ज्ञानोपलक्षितवस्तुवाचीत्यर्थः ।
*(प्रमाणपद्धतिराघवेन्द्रीयटिप्पणी – पृ.स.४३.)*

५. **'मुख्याभिधेयस्त्वर्थः स्याद् वाच्यमन्यच्च भण्यते ।
अमुख्येष्वर्थशब्दस्तु नीचोपरिहितो भवेत् ॥'**
*(भाग. ता.उदा. ब्रह्मतर्कस्मृतिः ३-१२-२.)*

**ज्ञेयमनतिक्रम्य वर्तमानं यथावस्थितमेव ज्ञेयं यद् विषयीकरोति नान्यथा तत् प्रमाणमित्यर्थः ।**

**(भा.च.)** उत्तरत्रापि[१]प्रमाणलक्षणकथनोपयुक्तत्वेन प्रमेयमुच्यत इति शङ्कावारणाय लक्षणं वक्तुं प्रतिजानीते - **तत्रेति** ॥ **तत्र** = वक्तव्येषु प्रमाणसामान्यलक्षणतद्विभागविशेषलक्षणादिषु मध्य आदौ विशेषलक्षणकथनात् पूर्वं सामान्यलक्षणमुच्यते । तावत् क्रमेण विशेषलक्षणं च वक्ष्याम इति शेषः। **'यावत्तावच्च साकल्ये'** इति वचनात्, **तावत्** = साकल्येन सामान्यलक्षणमुच्यत इति वाऽर्थः । तद्विशेषणप्रयोजनादिकं सकलशब्दार्थः ॥

ननु उद्देशमकृत्वा कथं लक्षणमुच्यत इति शङ्कावारणार्थमप्युक्तम् **आदाविति** ॥ **आदौ** मङ्गलाचरणकाल एवोद्देशस्य कृतत्वादिति शेषः ॥

**एवमिति** ॥ **अन्यत्र**[२] लक्षणवाक्यान्तरेष्वपि असाधारणोक्तिः लक्षणोक्तिः ॥ तदन्यनिर्देशस्तु लक्ष्यनिर्देशः । निर्दिश्यतेऽनेनेति व्युत्पत्त्या लक्ष्यवाचकः शब्द इत्येवं प्रकारेण ज्ञातव्यमित्यर्थः ॥

*(यथार्थशब्दनिर्वचनम्)*

ननु यथाशब्दस्य योग्यता, वीप्सा, पदार्थानतिक्रमः, सादृश्यं चेति चत्वारोऽर्थाः। तेषु विवक्षितार्थो न ज्ञायते। यथार्थम्– [३]इत्यव्ययीभाव-

---

१. **'प्रमाणत्वलक्षण-'** ग.

२. अत्र प्रमाणपद्धतिप्रचलितमूलपाठे **'उत्तरत्रापि'** इति पाठो दृश्यते। टिप्पणीमातृकासु **'अन्यत्रापि'** इति पाठः स्वीकृतः। अतः टिप्पणीकर्तॄणां **'अन्यत्रापि ज्ञातव्यम्'** इति मूलपाठ उपलब्धो भवेत् ।

३.'यथाऽसादृश्ये' (पा.सू. २-१-७) इति सूत्रादव्ययीभावसमासः ।

समासबलादसादृश्यार्थत्वनिश्चयेऽपि योग्यतादिषु कोऽर्थः प्रकृते ? इति संशयो दुर्वार एव । अर्थशब्दोऽपि **'अर्थोऽभिधेयरैवस्तुप्रयोजन-निवृत्तिषु'** इत्यभिधानाद् द्रव्याद्यन्यतमार्थो वक्तव्यः ॥

स तावदयुक्त एव । अतो यथाशब्दार्थशब्दयोर्विवक्षितार्थमाह - **यथाशब्द इत्यादिना ॥ ज्ञेयवाचीति ॥** तथा च ऋ गताविति गत्यर्थकाद् धातोः **'उषिकुषिगर्तिभ्यस्थन्'** (उणादि.१६१-पा-२-सू-४) इत्यौणादिके कर्मणि थनूप्रत्यये **'सार्वधातुकार्धधातुकयोः'** (पा.सू. ७-३-८४) इति गुणे **'उरण्रपरः'** (पा.सू.१-१-५१) इति रप्रत्याहारपरत्वे[1] **'अचो रहाभ्याम्'** (पा.सू.८-४-४६) इति थकारद्वित्वे च निष्पन्नोऽर्थ्थशब्दो ज्ञेयवाचीत्यर्थः । पदार्थमुक्त्वा वाक्यार्थमाह– **ज्ञेयमनतिक्रम्य वर्तमानमिति ॥**

ननु प्रत्यक्षादिकं ज्ञेयं घटादिकमतिक्रम्यैव वर्तते । घटादेर्भूतलादि-गतत्वात्[2] । प्रत्यक्षादेश्च [3]गोलकादिस्वस्थानगतत्वात् – इत्याशङ्क्य प्रत्यक्षादेर्ज्ञेयानतिक्रमः स्वसत्तायां न विवक्षितः । किन्तु विषयीकरणक्रियायामेव । एवं च नासम्भव इति भावेनाऽह – **यथावस्थितमेवेति ॥** ज्ञेयं येन प्रकारेण वर्तते तं प्रकारं परित्यज्य अन्यथा विषयीकरणे ज्ञेयातिक्रमो भवति । तथैव विषयीकरणे त्वनतिक्रमो भवति । तथा च यथावस्थितमात्रार्थविषयीकारित्व-मप्यनतिक्रमार्थकयथाशब्दार्थ एव ॥

न चानतिक्रम एव यथाशब्दार्थः, नतु विषयीकरणक्रियाऽपीति

१.**'रपरत्वे'** ग. २.**'भूतळादिगतत्वात्'** ग.
३.**'गोळकादि'** ग.

वाच्यम् । तथा, **यथा** अनतिक्रम इत्यर्थज्ञानानन्तरं कुत्रेति क्रिया-सामान्यवाचिनाऽनतिक्रमार्थकयथाशब्देन विषयीकरणरूपक्रिया-विशेषविवक्षायां लक्षणा स्यादिति वाच्यम् । (तथासति) **'घटेन जलमाहर'** इत्यादौ छिद्रेतरघटे घटशब्दस्य लक्षणा स्यात् । तथा न विद्यन्ते अरा दोषा येषामिति व्युत्पत्त्या नारशब्देन निर्दोष-विशेषवेदग्रहणे[1] लक्षणा स्यात् ॥

यदि निर्दोषविशेषस्यापि उक्तप्रवृत्तिनिमित्ताश्रयत्वान्न लक्षणा, तर्हि विषयीकरणक्रियाविशेषस्यापि अनतिक्रमार्थकयथाशब्दप्रवृत्तिनिमित्त-योग्यक्रियासामान्यविशिष्टानतिक्रमत्वं प्रति स्वयोग्यसम्बन्धेनाऽ-श्रयत्वान्न लक्षणा । तथा च न कुत्राप्यंशेऽमुख्यार्थस्वीकार इति भावेनाऽह- **यथावस्थितमेव ज्ञेयं यद् विषयीकरोतीति ॥**

अवधारणार्थमाह- **नान्यथेति ॥ 'देवदत्तो ग्रामं गच्छति'** इत्यत्र गमनक्रियायामपि प्रत्यक्षादिज्ञेयग्रामविषयीकारित्वसद्भावाद् विशिष्ट-लक्षणस्यातिव्याप्तिः । तत्परिहाराय यथावस्थितस्वज्ञेयविषयीकारित्वं विवक्षणीयम् ॥

तथा च स्वशब्दस्य समभिव्याहृतपरत्वाद् यदा गमनक्रियाविवक्षा तदा ग्रामस्य गम्यत्वेऽपि ज्ञेयत्वाभावात् स्वज्ञेयविषयीकारित्व-रूपलक्षणस्य नातिव्याप्तिः । भ्रमस्यापीदमंशे यथावस्थितज्ञेय-विषयीकारित्वात् तत्रातिव्याप्तिपरिहाराय यथावस्थितमेवेत्युक्तम् ॥

अत्रेतः परमपि[2] वक्तव्यं विशेषणप्रयोजनं ग्रन्थकार एव वक्ष्यति ।

---

१. **'निर्दोषवेदग्रहणे'** ग.

२. गपुस्तके **'अपि'** इति नास्ति ।

**(प्र.प.) [1]ज्ञेयविषयीकारित्वं च [2]साक्षाद्वा साक्षाज्ज्ञेयविषयी -कारिसाधनत्वेन वा विवक्षितमिति नानुप्रमाणेष्वव्याप्तिः । ज्ञेयविषयीकारित्वेनैव प्रमातृप्रमेययोर्व्यवच्छेदः । तयोः साक्षाज्ज्ञेयविषयीकारित्वाभावात् । साक्षाज्ज्ञेयविषयीकारि-कारणत्वेऽपि तत्साधनत्वाभावाच्च ॥**

---

१. **वेदे.–** ननु ज्ञेयविषयीकारित्वं ज्ञानधर्मः । तथा चेन्द्रियाद्यनुप्रमाणेष्वव्याप्तिरित्यत आह- ज्ञेयविषयीकारित्वं चेति । करणेष्वपि सम्यग्ज्ञानसाधनतया परम्परया ज्ञेयविषयीकारित्वमस्त्येव । न हि साक्षादेव ज्ञेयविषयीकारित्वं लक्षणे विवक्षितम् । येनोक्तदोषः स्यात् । अपि तूभयसाधारणं ज्ञेयविषयीकारित्वमात्रमिति भावः । इदं च पररीत्यैवोक्तम् । स्वमते तु ज्ञान इव करणेष्वपि साक्षादेव ज्ञेयविषयीकारित्वमस्तीति नोक्ताव्याप्तिरिति द्रष्टव्यम् । **पृ.सं- ५१.**

२. **राघ.–** साक्षाद्वेत्यादि ॥ नन्वेवमपि साधनत्वं न ज्ञाने । साक्षाज्ज्ञेयविषयत्वं च करणेषु नेत्यन्यतरविवक्षायामन्यतरत्राव्याप्तिः । उभयविवक्षायामपि ज्ञानकरणाननुगमेन पुनः स एव दोष इति चेन्मैवम् । ज्ञानं यथा साक्षादन्याव्यवधानेनार्थविषयकं तथा तत्साधनानीन्द्रियलिङ्गशब्दरूपानु-प्रमाणान्यप्यन्याव्यवधानेन साक्षादेवार्थविषयकाणि । न हि तानि किमप्यविषयीकृत्य ज्ञानं जनयितुमीशते । यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विषय इति विषयत्वनिर्वचनात् । सन्निकर्षशब्देन प्रत्यासत्तेरभिमतत्वात् । इन्द्रियाणामर्थैः संयोग इव लिङ्गशब्दयोरपि लिङ्गिवाक्यार्थाभ्यां व्याप्तिशक्तिरूपप्रत्यासत्त्या लिङ्गिवाक्यार्थधीजनकत्वेन करणानि यत्सम्बध्य ज्ञानं जनयन्ति तस्यैव ज्ञानविषयस्य करणानि प्रत्यपि विषयत्वात् । एवं चार्थविषयीकारित्वं ज्ञानरूपकेवलप्रमाणे साधने

नचैवमव्याप्तिर्लक्षणस्य वाच्यम् । ज्ञानमेव यथार्थं, करणानि तु तज्जनकतया तथोपचर्यन्त इत्यङ्गीकारे हि सा स्यात् । न चैवम् । यथावस्थितार्थविषयीकारित्वस्योभयत्र साम्यात्, ज्ञानविषय एव हि करणानां विषयः । नहि किमप्यविषयीकुर्वन्त्येतानि तज्ज्ञानं जनयन्ति[१] । अतिप्रसङ्गात् ॥

केवलं[२] विषयस्य ज्ञेयतां ज्ञानमुपाधितया करणानि तु तज्जनकतया सम्पादयन्तीत्येतावन्तं विशेषमाश्रित्य केवलानुप्रमाणभेदः समर्थित इति ॥

न च करणस्य सविषयकत्वे प्रमाणाभावः । **'मम चक्षुर्लक्ष्यमेव गोचरयति'** इत्यनुभवादिति ॥

[३]यथावस्थितत्वं प्रमाणलक्षणमित्युक्ते प्रमातृप्रमेययोरतिव्याप्तिः । तदर्थं ज्ञेयविषयीकारित्वग्रहणमिति भावेनाऽह – **ज्ञेयविषयीकारित्वेनैवेति** ॥ ज्ञेयमनतिक्रम्य वर्तमानत्वं प्रमाणलक्षणमित्युक्ते प्रत्यक्षादीनां ज्ञेयमतिक्रम्यैव वर्तमानाल्लक्षणस्यासम्भव इति शङ्कायाम्[४] असम्भवपरिहारार्थमवश्यमङ्गीकार्येण ज्ञेयविषयीकारित्वेनैवेत्यर्थः ॥

प्रमातृप्रमेययोर्ज्ञेयविषयीकारित्वं कुतो नेत्याशङ्क्य ज्ञेयविषयीकारित्वप्रयोजकसाक्षाज्ज्ञेयतासम्पादकत्वाभावादिति भावेनाऽह– **तयोरिति ॥ तयोः** प्रमातृप्रमेययोः साक्षाद् यद् ज्ञेयं ज्ञानं[५] तद्विषयीकारित्वाभावात् । साक्षाज्ज्ञेयतासम्पादकत्वेन ज्ञेयविषयीकारित्वाभावादिति यावत् ॥

---

१. **'जनयन्तीति'** क.ग.पाठः । २. **'न केवलं'** क.पाठः ।
३. **'यथावस्थितम्'** ग. पाठः । ४. **'इत्याशङ्कायाम्'** क.ग.पाठः ।
५. **'ज्ञानम्'** इति पदं ख. पाठे नास्ति ।

ननु साक्षाज्ज्ञेयतासम्पादकत्वाभावेऽपि ज्ञानद्वारा ज्ञेयतासम्पादकत्वाद् ज्ञेयविषयीकारित्वं स्यादेवेत्यत आह- **ज्ञेयविषयीकारिकारणत्वेऽपीति** ॥

**'न चार्थस्य क्वापि जनकताऽसम्मतेः'** इति तत्वोद्योतटीकायामुक्तत्वात् प्रमेयस्य कथं ज्ञानकरणत्वाभ्युपगमः[१] इति वाच्यम् । अर्थनिरूपितेन्द्रियधर्मिकसन्निकर्षस्य ज्ञानकरणत्वेन सन्निकर्षद्वारा प्रयोजकत्वस्येह विवक्षितत्वादिति ॥

तथा च साक्षाज्ज्ञेयतासम्पादकज्ञानकरणत्वस्यैव ज्ञेयविषयीकारित्वप्रयोजकत्वात् प्रमातृप्रमेययोः तदभावाच्चेत्यर्थः । साधनत्वाभावाच्च ज्ञेयविषयीकारित्वेनैव प्रमातृप्रमेययोर्व्यवच्छेद इति सम्बन्धः ।

*(प्रमातृप्रमेययोर्लक्षणम् )*

**(प्र.प) [२]प्रमावान् प्रमाता । प्रमाविषयः प्रमेयम् । यथार्थज्ञानं प्रमा । यथार्थग्रहणेन संशयविपर्ययतत्साधनानां निरासः । अनवधारणं ज्ञानं संशयः । अनवधारणग्रहणं सम्यग्ज्ञानविपर्ययव्युदासार्थम् । घटादिनिवृत्त्यर्थं ज्ञानमिति ॥**

---

१. **'-कारणत्वाभ्युपगमः'** इति पाठेन भाव्यमिति भाति ।

२. **जना–** प्रमावानिति । प्रमाता स्वामीत्यर्थः । तेनान्तःकरणस्याप्युपादानोपादेयभावसम्बन्धेनान्तःकरणवृत्तिरूपप्रमावत्त्वात् प्रमातृत्वापत्ति-रिति निरस्तम् । प्रमाविषय इति । प्रमयाऽस्तीति गृह्यमाण इत्यर्थः । तेन भ्रमेणास्तीति गृह्यमाणे शुक्तिरूप्यादौ तथा बाधकप्रत्ययेन नास्तीति गृह्यमाणे तत्रैव पुनर्नातिव्याप्तिरिति ज्ञेयम् । **पृ.सं- ६१.**

२. **राघ–** प्रमावानिति ॥ प्रमाया मनोधर्मत्वेऽपि तत्स्वामित्वाद्धनी गोमानित्यादिवत् प्रमावानित्युक्तिर्युक्ता ॥ **पृ.सं- ६२.**

**(भा.च.)** प्रमातृप्रमेययोर्व्यवच्छेद इत्युक्ते प्रमात्रादिस्वरूप-जिज्ञासायामाह– **प्रमावान् इति** ॥ प्रमास्वामीत्यर्थः । यस्त्वप्रमावान् सः प्रमातैव न भवतीति भावः । **यथार्थग्रहणेनेति** ॥ स च[१] प्रमाण-लक्षणगतयथार्थपदकृत्यं नोच्यते । ज्ञानं प्रमेत्युक्ते संशय-विपर्यययोरतिव्याप्तिसम्भवेऽपि तत्साधनेष्वतिव्याप्त्यभावात् । किन्तु प्रमाणसामान्यलक्षणगतयथार्थपदस्यैव ॥

न च प्रमाणसामान्यलक्षणे यथार्थपदेन समग्रस्यापि लक्षणस्य गृहीतत्वात् कस्यांशस्यातिव्याप्तिरिति वाच्यम् । यथाशब्दस्य योऽर्थो [२]यथावस्थितत्वमात्ररूपस्तदर्थग्रहणेनेतीह विवक्षितत्वात् । तथा च यथावस्थितमात्रज्ञेयविषयीकारित्वस्य संशयादावभावान्न तेष्वति-व्याप्तिरिति भावः ॥

संशयविपर्ययतत्साधनानां निरास इत्युक्ते संशयादिस्वरूप-जिज्ञासायामाह– **अनवधारणं ज्ञानमिति** ॥ अवधारणभिन्नं ज्ञानं, निश्चयरूपज्ञानभिन्नज्ञानत्वं संशयस्य लक्षणमित्यर्थः ॥

*(संशयकारणविषये विभिन्नमतप्रदर्शनम्)*

**(प्र.प) तस्य निर्णायकाभावसहकृताः साधारणधर्मासाधारण-धर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धयः पञ्च कारणानीति [३]केचिदाहुः । तद्यथा ।**

---

१. एतत्स्थाने **'अत्र'** इति पदेन भाव्यमिति भाति ।

२. यथावस्थितत्वमात्ररूपो नाम ज्ञेयानतिक्रमणमेव ।

३. **'केचित् चिरन्तनतार्किका भूषणकारादयः'** इति रा.टिप्पणी ।

स्थाणुपुरुषयोः साधारणमूर्ध्वतालक्षणं धर्मं पुरोवर्तिन्युपलभ्य, स्थाणुपुरुषौ स्मृत्वा, विशेषजिज्ञासायां स्थाणुत्वनिश्चायकं वक्रकोटरादिकं पुरुषत्वनिश्चायकं शिरःपाण्यादिकं चानुपलभमानस्य डोलायमानं संशयज्ञानमुत्पद्यते किमयं स्थाणुर्वा पुरुषो वेति ॥

शब्दे चाऽकाशविशेषगुणत्वमसाधारणधर्ममुपलभमानस्य निर्णायकमजानतः संशयो भवति किं शब्दो नित्योऽनित्यो वेति ॥

इन्द्रियेषु वैशेषिकसाङ्ख्ययोर्भौतिकत्वाभौतिकत्वविप्रतिपत्तिं पश्यतो निश्चायकमजानतः सन्देहो भवति किमिन्द्रियाणि भौतिकान्युताभौतिकानीति ॥

कूपखनननानन्तरं जलोपलब्धौ सत्यां निश्चायकाभावे संशयो जायते किं प्राक् सदेवोदकं कूपखननेना[१]भिव्यक्तमुपलभ्यते उतासत् तेनोत्पन्नमिति[१] ॥

अस्मिन् वटे पिशाचोऽस्तीति वार्तां श्रुतवतो[२] वटसमीपं गतस्य तत्र पिशाचानुपलब्धौ सत्यां निर्णायकाभावे संशयो भवति । किं विद्यमान एव पिशाचोऽन्तर्धानशक्त्या नोपलभ्यते, किं वाऽविद्यमान एवेति ॥

उपलब्ध्यनुपलब्ध्योः साधारणधर्म एवान्तर्भावात् त्रीण्येव

---

१. '-नाभिव्यक्तं सदुपलभ्यते । किं वाऽसदेवोत्पन्नमिति' - त.

२. 'श्रुतवतः पुरुषस्य' - त.

**कारणानीत्यपरे[1]। उपलब्धिर्हि सतामेव घटादीनां प्रदीपारोपणेन दृष्टा। असतां च कुलालादिव्यापारानन्तरमिति[2]। तथाऽनुपलब्धिः [3]सतामीश्वरादीनामसतां च शशविषाणादीनां दृष्टेति ॥**

**(भा.च.)** संशयः सर्वोऽपि साधारणधर्मजन्य एवेति व्युत्पादयितुं संशयसाधनानामनेकविधत्वपक्षव्युदासाय तत्पक्षमनुवदति **तस्येत्यादिना** ॥ अन्यतरकोटिनिर्णायकविशेषदर्शनदशायां साधारणादिधर्मदर्शनस्य संशयाहेतुत्वान्निर्णायकाभावसहकृत इत्युक्तम्। साधारणधर्मादीनां संशयकारणत्वं कथमिति पृच्छति – **तद्यथेति** ॥ तत् तेषां पञ्चानां संशयकारणत्वं यथा = येन प्रकारेण। उत्तरमाह– **स्थाणुपुरुषयोरित्यादिना** ॥ **विशेषजिज्ञासायामिति** ॥ स्थाणुपुरुषकोट्योरन्यतर[4]कोटिप्रापकजिज्ञासायामित्यर्थः ॥ **असाधारणधर्ममुपलभमानस्येति** ॥ शब्दगतमाकाशविशेषगुणत्वं नित्यगगनादिव्यावृत्तं, तथा अनित्यघटादिव्यावृत्तं चेत्युपलभमानस्येत्यर्थः ॥

**किमिति** ॥ नित्यगगनादिव्यावृत्तघटत्वादिधर्मवान् घटादिरनित्य उपलब्धः। तथाऽनित्यघटादिव्यावृत्ताकाशत्वादिधर्मवानाकाशादिर्नित्यत्वेनोपलब्धः। अयं च शब्दो नित्यगगनादिव्यावृत्ताकाशविशेषगुणत्वरूपधर्मवान्, तथाऽनित्यघटादिव्यावृत्ताकाशविशेषगुणत्वरूपधर्मवांश्च भवति। तथा चाऽनित्यव्यावृत्ताकाशविशेषधर्मवत्त्वा[5]दाकाशवन्नित्यो वा नित्यगगनादिव्यावृत्तधर्मवत्त्वाद् घटादिवदनित्यो वेति संशयो भवतीत्यर्थः ॥

१. '**अपरे नवीननैयायिकाः**' इति रा.टिप्पणी.   २. '**-नन्तरं दृष्टेति**' त.

३. '**सतामेवेश्वरादीना-**' त.

४. '**कोट्योरन्यतरकोट्योरन्यतरकोटि-**' ग.क.

५. '**अनित्यव्यावृत्तधर्मवत्त्वा-**' - क.पाठः

**प्रागिति** ॥ कूपखननलक्षणपुरुषव्यापारात् प्रागित्यर्थः । **असदेवेति** ॥ कूपखननविलक्षणपुरुषव्यापारात् प्रागसदेवेत्यर्थः ॥ **अपरे** नैय्यायिकाः । **प्रदीपारोपणेनेति** ॥ तथा च पुरुषव्यापारानन्तरं जलोपलब्धौ सत्यां पुरुषव्यापारात् प्राक् सदसत्कोटिकजलधर्मिकसंशयकारणीभूतोपलब्धिः पुरोवर्तिजले, प्रदीपारोपणलक्षणपुरुषव्यापारात् प्रागन्धकारस्थघटे कुलालव्यापारात् प्रागसत्यपि घटे कुलालव्यापारानन्तरभाविनि सत्त्वेनोपलब्धेः । धर्मिकोटिद्वयसाधारणत्वादुपलब्धिजन्यः संशयः साधारणधर्मजन्य इत्यर्थः ॥

इतीत्यनन्तरमुपलब्धिः साधारणधर्म एवेति शेषः ॥ **तथेति** ॥ वटे पिशाचानुपलब्ध्या[१] जायमानः पिशाचधर्मिकः सदसत्कोटिकसंशयोऽपि पिशाचसदसत्कोटिसाधारणानुपलब्धिजन्यत्वात् साधारणधर्मजन्य एवेत्यर्थः । इतीत्यनन्तरमनुपलब्धिरपि साधारणधर्म एवेति शेषः ॥

*(स्वमते संशयकारणप्रदर्शनम्)*

**(प्र.प) वयं तु ब्रूमः । असाधारणधर्मविप्रतिपत्त्योरपि साधारणधर्म एवान्तर्भावः । असाधारणो हि धर्मो न स्वरूपेण संशयहेतुः । विशेषस्मरणकारणत्वाभावात् । किन्तु [२]व्यावृत्तिमुखेनैव । तथा च नित्यव्यावृत्तत्वमनित्यस्यानित्यव्यावृत्तत्वं च नित्यस्य धर्म इति साधारण एव ॥**

---

१. **'पिशाचानुपलब्धौ'** ग.

२. **वेदे-** व्यावृत्तीति । नित्यानित्यव्यावृत्तत्वेन ज्ञात इत्यर्थः । आकाशविशेषगुणत्वं नित्यव्यावृत्तमनित्यव्यावृत्तमिति ज्ञाने हि शब्दस्य नित्यव्यावृत्तधर्मवत्त्वस्य नित्यत्वसहचरितत्वेनाऽकाशादौ च दर्शनात् । ततश्च व्यावृत्तिमुखेन ज्ञातस्य विशेषस्मरणकारणत्वमस्तीति संशयहेतुत्वमुपपन्न-

**नचैकेनैव साधारणधर्मेण भाव्यमिति नियमोऽस्ति । तथातथाप्रतिपन्नत्वं तस्य तस्य धर्म इति विप्रतिपत्तिरपि साधारणीति[१] ॥**

**(भा.च.) असाधारणो हीति ॥** स्वरूपेणेत्यनन्तरं ज्ञात इति शेषः । तथा च शब्दमात्रवर्ति[२]राकाशविशेषगुणत्वलक्षणोऽसाधारणो धर्मोऽयं शब्दमात्रवृत्तिरित्यसाधारणस्वरूपेण ज्ञातः संशयहेतुर्न भवतीत्यर्थः ॥ **विशेषेति ॥** कोटिस्मृति[३]कारणत्वाभावादित्यर्थः । संशयहेतुभूतसाधारणधर्मदर्शनस्य कोटिस्मृतिसम्पादनद्वारैव संशय-हेतुत्वस्य वक्तव्यत्वादिति भावः ॥

तथा चाऽकाशविशेषगुणत्वं शब्दमात्रवृत्तीत्यसाधारणधर्मत्वेन ज्ञानेऽपि नित्यानित्यकोटिस्मृतिद्वारा संशयानुदयान्नासाधारणधर्मः संशयहेतुत्वेन गणनीय इति हृदयम् ॥

**व्यावृत्तिमुखेनेति ॥** [४]ज्ञात इति शेषः । संशयहेतुरिति

मिति भावः । अस्त्वेवं व्यावृत्तिमुखेन ज्ञान एवासाधारणधर्मः संशयहेतु-स्तथाऽपि तस्य साधारणधर्म एव कथमन्तर्भाव इत्यत आह- तथा चेति । नित्यव्यावृत्तत्वं च नित्यावृत्तित्वमनित्यव्यावृत्तत्वमनित्यावृत्तित्वमुक्तरीत्या नित्यव्यावृत्तत्वेन ज्ञातो ह्यसाधारणधर्मः संशयहेतुः । तथा च नित्यव्यावृत्तत्वमनित्यस्य घटादेर्धर्मे वर्तते । अनित्यव्यावृत्तत्वं नित्यस्याऽकाशादेधर्मे वर्तते । एवं च नित्यव्यावृत्तधर्मवत्त्वमनित्ये घटादौ संशयधर्मिणि शब्दे च साधारणम् । अनित्यव्यावृत्तधर्मवत्त्वमुक्तरीत्या च नित्ये गगनादौ शब्दे च साधारणम् । प्रसिद्धकोट्यधिकरणपुरोवृत्तिसाधारणस्यैव साधारणशब्दार्थत्वादिति भावः । **पृ.सं - ७४.**

१. त. पाठे **'इति'** शब्दो नास्ति । २.**'आकाशविशेषत्वलक्षणः'** ख.
३. **'स्मरण-'** क. ४.**'ज्ञाने'** ग.

पदमत्रानुषञ्जनीयम् । तथा च शब्दगतमाकाशविशेषगुणत्वमनित्य-घटादिव्यावृत्तं नित्यगगनादि व्यावृत्तं वेत्यनित्य[१]व्यावृत्तत्वेनाऽकारेण नित्यगगनादिव्यावृत्तत्वेनाऽकारेण च ज्ञातः संशयहेतुरित्यर्थः ॥

तथा चोक्तप्रकारेण ज्ञाने सति नित्यव्यावृत्तत्वावच्छिन्नघटत्वादि-धर्मवति अनित्यत्वस्यानुभूतत्वात्, तथाऽनित्यव्यावृत्तत्वावच्छिन्ना-काशत्वादिधर्मवति नित्यत्वस्यानुभूतत्वान्नित्यानित्यकोटिस्मृति-र्भवतीति भावः ॥

तावताऽस्य कथं साधारणत्वमित्यत आह – **तथा चेति** ॥ तथा च साधारणधर्मजन्यत्वेन प्रसिद्धस्य 'स्थाणुर्वा पुरुषो वा' इति संशयस्य कारणीभूतः पुरोवर्तिनि उपलभ्यमान ऊर्ध्वतालक्षणधर्मोऽपि न धर्मिकोटिसाधारणः । [२]ऊर्ध्वता हि दीर्घपरिमाणम् । न हि परिमाणमनुगतो धर्मः । पुरुषगतदीर्घपरिमाणस्य पुरुषमात्रवृत्तित्वात् । तथा स्थाणुगतस्यापि तन्मात्रवृत्तित्वाच्च ॥

एवं च ऊर्ध्वता साधारणधर्म इति वदता नैय्यायिकेनापि येनाऽकारेण ज्ञातो धर्मः संशयहेतुः तदवच्छिन्नधर्मस्य धर्मिकोटिसाधारणत्वे, स च धर्मः साधारणः । ऊर्ध्वतालक्षणधर्मस्तु एतदूर्ध्वतात्वाकारेण ज्ञातो न संशयहेतुः । किन्तूर्ध्वतात्वेनैव । ऊर्ध्वतात्वावच्छिन्नोर्ध्वतालक्षणधर्मः धर्मिकोटिसाधारण एवेति वक्तव्यम् ॥

इदं तु प्रकृतेऽपि समम् । नित्यगगनादिव्यावृत्तत्वावच्छिन्नधर्मस्य धर्मिणि शब्देऽनित्ये घटादावपि सत्त्वेन धर्मिकोटिसाधारणत्वात् । तथा अनित्यव्यावृत्तत्वावच्छिन्नधर्मस्यापि धर्मिणि शब्दे नित्ये गगनादावपि सत्त्वेन धर्मिकोटिसाधारणत्वादिति ॥

---

१. **'चेत्यनित्य-'** क. ग.  २. **'ऊर्ध्वतादि-'** ग. क.

**अनित्यस्ये**त्यनन्तरं धर्म इत्यनुवर्तते । अत्र धर्मे इति पदच्छेदः । तथा च अनित्यस्य[1] धर्मे[2] घटत्वादौ नित्यव्यावृत्तत्वस्य सत्त्वात् । नित्य-व्यावृत्तत्वावच्छिन्नधर्म अनित्यकोटिसाधारणः । तथा नित्यस्य धर्मे आकाशत्वादावनित्यव्यावृत्तत्वस्य सत्त्वाद् अनित्यव्यावृत्तत्वा-वच्छिन्नधर्मः नित्यकोटिसाधारण इत्यर्थः ॥

ननु शब्दगताकाशविशेषगुणत्वस्य[3] नित्यव्यावृत्तत्वेनाऽकारेणा-नित्यव्यावृत्तत्वेन चाऽकारेण ज्ञातस्य संशयहेतुत्वेऽपि नित्यव्यावृत्त-त्वावच्छिन्नस्य धर्मस्य धर्म्यनित्यकोटिमात्रसाधारणत्वात्, तथा अनित्यव्यावृत्तत्वावच्छिन्नधर्मस्य धर्मिनित्यकोटिमात्रसाधारणत्वाद् ऊर्ध्वतात्वावच्छिन्नधर्मस्य[4] धर्मिकोटिद्वयसाधारणेनेत्यर्थः । भाव्यं भवितव्यमिति नियमो नेत्यर्थः ॥

तथा च संशयहेतुभूतधर्मस्य धर्म्येककोटिसाधारणत्वेऽपि संशयहेतु-भूतो धर्मः साधारण एवेति भावः । अन्यथा चैत्रे दण्डं दृष्टवतो मैत्रे तु कुण्डलं दृष्टवतः, [5]तयोर्दण्डकुण्डलयोरेकत्र दर्शने सति दण्डित्वाच्चैत्रो वा कुण्डलित्वान्मैत्रो वेति जायमानः संशयः साधारणधर्मजन्य-स्त्वन्मतेऽपि न स्यात् । दण्डकुण्डलयोर्धर्म्यन्यतरकोटिमात्र-साधारणत्वादिति ॥

**तथा तथा प्रतिपन्नत्वमिति** ॥ भौतिकत्वाभौतिकत्वेन च तत्त-च्छब्दबोध्यत्वमित्यर्थः । विरुद्धार्थप्रतिपादकवाक्यद्वयनिरूपितायाः भौतिकानि अभौतिकानीति विप्रतिपत्तेः धर्मिकोटिवृत्तित्वेनोभय-

१. **'नित्यस्य'** इति सर्वत्र मातृकासु पाठः ।

२. **'नित्यधर्मे'** क.पाठः ।

३. **'-काशगुणत्वस्य'** ग.क.

४. **'ऊर्ध्वतावच्छिन्नधर्मस्य'** इति सर्वत्र मातृकासु पाठः ।

५. **'अनयोः'** ग.

साधारणस्य केनचित्सम्बन्धेन वक्तव्यत्वात् । तथा तथा प्रतिपन्नत्वं तस्य धर्मिणो भौतिकत्वकोटेस्तस्य धर्मिणोऽभौतिकत्वकोटेश्च धर्म इत्युक्तम् ॥

**(प्र.प) विपरीतनिश्चयो विपर्ययः । विपरीतेति सम्यङ्-निश्चयव्युदासः । निश्चय इति संशयज्ञानस्य[१] । स च प्रत्यक्षानुमानागमाभासेभ्यो जायते । यथा शुक्तिकायामिदं रजतमित्यादि ॥**

**(भा.च.) संशयस्य** संशयरूपज्ञानस्य[२] । तत्साधनाना-मित्युक्तम् । तान्याह– **स चेति** ॥

*(भ्रान्तिविषये विभिन्नमतप्रदर्शनम्)*

**(प्र.प) अयथार्थज्ञानमेव नास्तीति प्राभाकरादयः[३] । तन्न । अनुभवसिद्धत्वात्[४] । एतावन्तं कालमहं शुक्तिकामेव[५] रजतत्वेन प्रतिपन्नोऽस्मीत्युत्तरकाले परामर्शाच्च[६] ॥**

**प्रतीतं च रजतं देशान्तरे सदेवेति वैशेषिकादयः[७] ।**

---

१.अत्रोत्तरत्र भावचन्द्रिकाटिप्पण्यां **संशयस्येति** प्रतीकं गृहीत्वा **'संशयरूप-ज्ञानस्य'** इति व्याख्यानात् संशयस्येत्येव प्राचीनमूलपाठः सम्भाव्यते ।

२. प्रसक्तप्रमाणपद्धतिमूलपाठे **'संशयज्ञानस्य'** इति पाठो दृश्यते । व्याख्यायां तु **'संशयस्य'** इति मूलपदप्रतीकधारणेन **'संशयरूपज्ञानस्य'** इति अर्थविवरणरूपं व्याख्यानं कृतम् । तस्मात् संशयस्य इत्येव टिप्पण्यनुगुणः शुद्धः मूलपाठ इति सम्भाव्यते ।

३. आदिपदेन रामानुजीया अभिप्रेताः । **'प्राभाकराः'** – त.

४. **'साक्ष्यनुभवसिद्धत्वादित्यर्थः'**(रा.टिप्पणी)

५. त. पाठे **'एव'** शब्दो नास्ति ।

६. **'-त्युत्तरकालीनपरामर्शाच्च'** – त.

७. **'वैशेषिकाः'** – त.

**ज्ञानस्वरूपमेवेति विज्ञानवादिनः । तत्रैव तात्कालिकमुत्पन्नं सदिति भास्करः । न सन्नासन्न सदसत् किन्त्वनिर्वचनीयमेवेति मायावादिनः ॥**

**'असदेव रजतं प्रत्यभात्' इत्युत्तरकालीनानुभवात्[१] शुक्तिरेवात्यन्तासद्रजतात्मना[२] प्रतिभातीत्याचार्याः ॥**

**(भा.च.)** ननु प्रमाणसामान्यलक्षणे यथावस्थितत्वविशेषणे-नायथार्थसंशयादिव्युदास इत्युक्तम् । तदयुक्तम् । अयथार्थज्ञान-स्यैवाभावात् । इदं रजतमित्यादिकं हि ग्रहणस्मरणात्मकं ज्ञानद्वयमेव, रजतार्थप्रवृत्तिरपि दृष्टभेदाग्रहादेवोपपन्ना[३] । अतो ज्ञेयविषयीकारित्वमेव लक्षणमस्त्वित्याशङ्कावारणाय तन्मतं दूषयितुमनुवदति– **अयथार्थ-मिति ॥ अनुभवसिद्धत्वादिति ॥** विशिष्टज्ञानस्य, इदं रजतात्मना जानामीत्यनुभवसिद्धत्वादित्यर्थः । **उत्तरकाले** भ्रमनिवृत्त्युत्तरकाले भ्रमनिरूपणप्रसङ्गात् ॥

---

१. **जना.–** ननु भ्रमस्य कथमत्यन्तासद्रजततादात्म्यविषयकत्वम् । असता साकं चक्षुरादेः सन्निकर्षाभावादित्यत आह ॥ प्रत्यभादित्यनुभवादिति । तथा चानुभवबलेनात्यन्तासतोऽपि रजततादात्म्यस्य दोषरूपसन्निकर्षेण भ्रम उल्लेख्यत्वलक्षणं विषयत्वं कल्प्यत इति भावः । **पृ.सं- ८५.**

२. **वेदे.–** अत्यन्तासद्रजतात्मनेति । इदं च यत्राधिष्ठानासन्निहितमारोप्यं तदभिप्रायेण । तत्राऽरोप्यतत्तादात्म्ययोरुभयोरपि बाध्यत्वेनासत्त्वात् । यत्राऽ-रोप्यमधिष्ठानसन्निहितं तत्र तत्तादात्म्यमात्रमसत् । तन्मात्रस्यैव बाधात् । आरोप्यं तु सदेव । बाधोत्तरकालमप्यनुवर्तमानत्वात् । यथा दूरस्थयो-श्चूतपनसयोरयं चूत इति भ्रम इति द्रष्टव्यम् । **पृ.सं- ८७.**

३. **'उत्पन्ना'**–क.ग.पाठः ।

तद्विषये वादिनां मतमनुवादेनैव दूषयति– **प्रतीतमिति** ॥ अत्र प्रतीतमित्यर्थः । तथा च देशान्तरे प्रतीतरजतात् पुरोवर्तिनि शुक्तिकाशकले वैलक्षण्यानुभवात् तदभेदारोपः कथं स्यादिति भावः । **अनिर्वचनीयमिति** ॥ सदसद्विलक्षणमित्यर्थः ॥

**(प्र.प) अनध्यवसायः स्वप्नश्चायथार्थज्ञानान्तरमस्तीति वैशेषिकाः[1] । [2]किंसञ्ज्ञकोऽयं वृक्ष इत्यनध्यवसायः । स तु कोटीनामतिबाहुल्यादनिर्दिष्टकोटिकः संशय एव । वटादिव्यावृत्तिं पश्यतोऽपि पनसे यत् किंसञ्ज्ञकोऽयं वृक्ष इत्युत्पद्यते तद् ज्ञानमेव न भवति । किन्तु सञ्ज्ञाविषयं जिज्ञासामात्रम् ॥**

**स्वप्नेऽपि गजादिदर्शनं चेद् ययार्थमेव । मानसवासनाजन्यत्वाद् गजादीनाम् । तेषु यद् बाह्यत्वज्ञानं स विपर्यय एव ॥**

**बाह्यालीप्रदेशे[3] पुरुषेणानेन भवितव्यमित्यूहापरनामकं सम्भावनाज्ञानमप्यन्यतरकोटि[4]प्रापकप्राचुर्यनिमित्तोऽन्यतरकोटिप्रधानः संशयः एव ॥**

**(भा.च.)** ननु यथार्थग्रहणेनायथार्थानामित्यत्र यथावस्थिततत्वविशेषणव्यावर्त्यतया संशयविपर्ययरूपायथार्थज्ञानद्वयमेव स्वीकृतम् । तदयुक्तम् । संशयविपर्ययाभ्यामन्येषामनध्यवसायादिरूपाणामयथार्थ-

---

१. **'वैशेषिकादयः'**– त.

२. **'का सञ्ज्ञा यस्य सः किंसञ्ज्ञकः । इत्याकारं ज्ञानमिति शेषः ।'**

*(प्रमाणपद्धतिवेदेशीयटिप्पणी)*

३. **'वाह्यालीप्रदेशे प्रायेण'**इति भा.च.टिप्पण्यनुसारी शुद्धःपाठः सम्भाव्यते ।

४. भावचन्द्रिकानुसारेण **'अन्यतरप्रापक'** इत्येव मूलपाठः सम्भाव्यते ।

ज्ञानानां बहूनां सत्त्वादित्याशङ्क्यानध्यवसायादिस्वरूपनिरूपणपूर्वकं तेषां यथासम्भवं संशयविपर्यययोरेवान्तर्भावं दर्शयति – **अनध्यवसायः स्वप्नश्चेत्यादिना** ॥

**वैशेषिका** इति वर्णयन्तीति शेषः । **कोटीनामतिबाहुल्यादिति** ॥ दूरे पनसं दृष्टवतः स्वेन निश्चितवटत्वाद्यसाधारणधर्मवतां वृक्षाणां सकाशाद् [1]भेदाग्रहणदशायाम् '**अयं किंसञ्ज्ञकः वटश्चूतः पनसो वा**' इत्यादिरूपः मनोवृत्तिविशेषः कोटीनामतिबाहुल्यात् तत्तत्कोट्यसाधारणशब्देनानिर्दिष्टाः अनुक्ताः कोटयो यस्य सः तादृशः संशय एवेत्यर्थः ॥

**वटादिव्यावृत्तिमिति** ॥ स्वेन निश्चितवटत्वाद्यसाधारणधर्मवतां वृक्षाणां व्यावृत्तिं पश्यत इत्यर्थः । यन्मनोवृत्तिरूपमित्यर्थः ।

ननु स्वप्ने गजादिस्वरूपदर्शनं यथार्थं चेत् तर्हि गजादिकं सत्यं स्यात् । सत्यत्वमिष्टं चेत् तद्गजादिकं नित्यमनित्यं वा ? नाऽद्यः । स्वप्नात् प्रागूर्ध्वं च तदुपलम्भप्रसङ्गात् । यद्यनित्यं तदा विद्युदादिवत् तदैवोत्पत्तिविनाशवदित्यभ्युपगम्य स्वप्न एव तेषामुत्पत्तिर्वाच्या । न च सा युक्ता । सामग्र्यभावादित्यत आह– **मानसेति** ॥ बाह्यनगरादिबहिर्देशगतत्वम् ॥

न च बर्हिर्देशगतत्वमपि वासनामयं कस्मान्न प्रतीयते, तदंशेऽपि पूर्वानुभवसद्भावादिति वाच्यम् । तथात्वे गजादिस्वरूप इव बहिष्ठत्वेऽपि बाधाभावप्रसङ्गात् । तस्मात् सामग्रीसम्भवेऽपि बाह्यत्वमसदेव प्रतीयते, न तु वासनामयम् । नहि सामग्रीसम्भवमात्रेण गजादीनां सत्यत्वम् । किन्तु बाधाभावेनैव, बहिष्ठत्वांशे बाधनान्न वासनामयं तदिति ॥

१. '**भेदाग्रहदशायाम्**' ख.

तदुक्तं सुधायां- **'नहि कारणसामग्रीसम्पादनमात्रेणार्थानां सत्यत्वमातिष्ठामहे । किं नाम ? बाधकाभावेनैव'** इति[१] ॥

**प्रायेणेति**[२] ॥ बाह्यालीप्रदेशे बाह्यवीथीप्रदेशे । गच्छन् पुमान् वा[३] न चेदियं स्त्री वेति विमर्शे पुरुषत्वप्रापकाणां धर्माणां प्राचुर्येण दर्शने सति प्रायशः पुरुषेणानेन भवितव्यमिति सम्भावनारूपं ज्ञानमुत्पद्यत इत्यर्थः । **अन्यतरप्रापकेति**[४] ॥ अन्यतरकोटिप्रापकेत्यर्थः ॥

*(मीमांसकाभिमतप्रमाणलक्षणनिरासः)*

**(प्र.प.) तर्कोऽनुमानमेवेति वक्ष्यामः । स्मृतावतिव्यापकं प्रमाणलक्षणमिति चेन्न । तस्या अपि प्रमाणत्वेन लोकवेदयोः संव्यवहारात् । अनुभूतिः प्रमाणम् । स्मृतिव्यतिरिक्तं ज्ञानमनुभूतिरिति प्राभाकराणां लक्षणं संशयविपर्ययव्यापकत्वात्[५] स्मृतौ वेदादिषु च यथार्थज्ञानसाधनेष्वव्यापकत्वाच्चायुक्तम् ।**

**ज्ञातताप्राकट्यापरपर्यायवाच्यस्य प्रमेयाश्रितस्य[६] प्रकाशविशेषस्य साधनं क्रियाज्ञानं प्रमाणमिति भाट्टानां लक्षणमप्ययुक्तम् ।**

---

१. **'बाधकाभावेनेति'** ग.क. ।

२. प्रसक्तमुद्रितमूलपाठे इदं पदं न दृश्यते । **'प्रायेणेति ॥ बाह्याळीप्रदेशे'** -ग.पाठः

३. **'पुमानयं वा'** क.ग.पाठः ।

४. अत्र यद्यपि मुद्रितप्रमाणपद्धतिमूलपाठे **'अन्यतरकोटिप्रापक'** इति उपलभ्यते । तथाऽपि एतद्व्याख्यानुसारेण **'अन्यतरप्रापक'** इत्येव शुद्धो मूलपाठः सम्भाव्यते ।

५. **'संशयविपर्यययोरतिव्यापकत्वात्'** च.

६. **'विषयाश्रितस्य'** इति भावचन्द्रिकानुसारी शुद्धः पाठः सम्भाव्यते ।

**ज्ञानव्यतिरिक्तायां ज्ञाततायां प्रमाणाभावेनासम्भवित्वात् । अतीतादिविषयज्ञानानामाश्रयाभावेन तज्जनकत्वायोगाच्च । वेदादिष्वव्याप्तेश्च । अनधिगततथाभूतार्थज्ञानं प्रमाणमिति तेषामेव लक्षणान्तरमप्ययुक्तम् । स्मृतौ वेदादिषु चाव्याप्तेः ॥**

**(भा.च.) वक्ष्याम इति** ॥ द्विविधमनुमानं साधनानुमानं दूषणानुमानं चेति वक्ष्याम इत्यर्थः । **लोकवेदयोरिति** ॥ अस्मिन्नर्थे मम स्मृतिरस्तीति लोके जने ॥

**'स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम्[1] ।**
**प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिः'॥**

*(प्रमाणलक्षणोदाहृतश्रुतिः)*

इति वेदे च संव्यवहारादित्यर्थः । ऐतिह्यशब्देनाऽऽगममात्रग्रहणात् स्मृतिपदं न मन्वादिस्मृतिपरम् । प्रमाणसामान्यलक्षणं सप्रपञ्चं निरूप्य परोक्तं लक्षणं दूषयितुमनुवदति– **अनुभूतिरिति** ॥ प्राभाकराणां लक्षणमयुक्तमिति सम्बन्धः । वेदादेरप्रामाण्यात् कथमव्याप्तिरिति शङ्कावारणाय यथार्थज्ञानसाधनेषु वेदादिष्वित्युक्तम् ॥

**ज्ञाततेति** ॥ प्रकाशसाधनं प्रमाणमित्येव लक्षणवाक्यम् । आन्तरप्रकाशादिलक्षणस्वरूपत्वज्ञापनाय विषयाश्रितस्येति[2] स्वरूपसद्विशेषणम् । नहि शब्दसाम्यमात्रेणातिव्याप्तिः । तच्च साधनं किमिति

---

१.**'अनुमानं चतुष्टयम्'** इति मुद्रितान्यटिप्पणीपाठः ।

२. मुद्रितप्रमाणपद्धतिमूलपाठे **'प्रमेयाश्रितस्य'** इति पदमुपलभ्यते । अत्र तु व्याख्यायां **'विषयाश्रितस्य'** इति मूलपदप्रतीकधारणं स्वीकृतं वर्तते । तदनुसारेण अयमेव शुद्धः मूलपाठ इति सम्भाव्यते ।

जिज्ञासायां क्रियाज्ञानधात्वर्थभूतं ज्ञानमित्युक्तम् । तथा च साधनपदं करणे, भावे च ल्युडन्तं सत् साधनं ज्ञानं च वक्तीति प्रकाश-साधनज्ञानत्वं प्रमाणलक्षणमित्युक्तं भवति ।

प्रकाशसाधनं प्रमाणमिति लक्षणवद् ज्ञाततासाधनं प्रमाणं प्राकट्यसाधनं प्रमाणमित्यादीनि तेषामेव लक्षणान्तराणि कुतो न दूष्यन्ते ? इति शङ्कावारणाय ज्ञातताप्राकट्यापरपर्यायवाच्य-स्येत्युक्तम् । ज्ञाततापदं प्राकट्यपदं च शब्दस्वरूपपरम् ।

तथा च ज्ञातता च प्राकट्यं चेत्येतौ शब्दावपरावन्यौ पर्यायौ एकप्रवृत्तिनिमित्तकशब्दौ, एषां शब्दानां तैर्वाच्यस्येत्यर्थः । अनेनैकमेव लक्षणं पर्यायशब्दैरनेकधा व्याहृतमिति भावः । **ज्ञानव्यतिरिक्ताया-मिति** ॥ धात्वर्थव्यतिरिक्तायां[१] विषयाश्रितप्रकाशरूपायां ज्ञातताया-मित्यर्थः । ज्ञानातिरेकेण विषयाश्रितप्रकाशस्यैवाभावात् । तत्साधन-ज्ञानत्वमसम्भवदूषणग्रस्तमिति भावः ॥

*(नैय्यायिकाभिमतप्रमाणलक्षणनिरासः)*

**(प्र.प.) सम्यगनुभवसाधनं प्रमाणमिति नैयायिकादयः । तदप्यसत् । यथार्थज्ञानेऽव्याप्तेः । प्रमाव्याप्तं प्रमाण-मित्युदयनः । तदपि सर्वस्यापि प्रमेयस्येश्वरप्रमाव्याप्तत्वेनाति-व्यापकत्वादयुक्तम् । साधनाश्रययोरन्यतरत्वे सति प्रमा-व्याप्तत्वं विवक्षितमिति[२] चेन्न । आश्रयग्रहणवैयर्थ्यात् । ईश्वरस्यापि प्रामाण्यसिद्ध्यर्थं तदिति चेन्न । कर्तरि**

---

१.'धात्वर्थभूतज्ञानव्यतिरिक्तायां' - क.पाठः

२.'प्रमाव्याप्तं प्रमाणमिति' - त.

**प्रमाणशब्दस्याननुशासनात् । यथार्थज्ञानेष्वव्याप्तेश्च । तस्माद् याथार्थ्यमेव प्रमाणलक्षणं युक्तम् ॥**

**(भा.च.)** प्रमेयेऽतिव्याप्तिमुद्धरति– **साधनेति** ॥ तथा च घटादिप्रमेयस्य साधनाश्रययोरन्यतरत्वाभावान्नातिव्याप्तिरिति भावः । ननु दुष्टेन्द्रियादौ, जीवात्मनि च साधनाश्रययोरन्यतरत्वे सतीश्वर-प्रमाव्याप्तत्वसद्भावादतिव्याप्तिस्तदवस्थैवेति वाच्यम् । स्वजन्य-स्वाश्रयान्यतरप्रमाव्याप्तत्वस्यैवेह विवक्षितत्वात् । तर्हि किमर्थं साधनाश्रययोरिति[1] विशेषणमिति चेन्न । उक्तरीत्या वैय्यर्थ्यस्य वरदराजीये परेणैवाऽशङ्कितत्वात् सुखादिप्रमेयव्यावर्तनेन तदुपयोगो वा स्यादिति न वैय्यर्थ्यमित्युक्तत्वाच्च । इदं प्रमेयमन्यत्र द्रष्टव्यम् ॥

**अननुशासनादिति** ॥ **'भावे'** (पा.सू. ३–३–१८), **'करणाधि-करणयोश्च'**(पा.सू.३–३–११७) इति सूत्रेण भावकरणयोरिव धात्वर्थभूतज्ञानकर्तरि ल्युडन्तप्रमाणशब्दस्याविधानादित्यर्थः ॥ न चाधिकरणेऽपि ल्युटो विधानाच्च ज्ञानकर्तुरप्यधिकरणत्वात्[2] कर्तृत्वेन प्रमाणशब्दार्थत्वाभावेऽप्यधिकरणत्वेन तदर्थत्वसम्भवाद् ईश्वरप्रामाण्य-सिद्ध्यर्थम् आश्रयग्रहणमिति वाच्यम् । धात्वर्थभूतज्ञानस्य मनोवृत्तित्वेन कर्तुरधिकरणत्वाभावात् ॥

प्रमातुस्तु स्वामित्वमात्रम् । ज्ञानादिमनोवृत्तीनामात्मधर्मत्ववचनमपि तत्स्वामिकत्वाभिप्रायम् । कर्तुरप्यधिकरणत्वेन प्रामाण्ये जीवानामपि प्रामाण्यं दुर्वारम् । न च **'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु'** इति नैघण्टिकमनुशासनं कर्तर्यस्तीति वाच्यम् । तस्यातिप्रसक्तत्वेनार्थ-

१.**'साधनमाश्रययोरिति'** सर्वमातृकापाठः ।

२. ज्ञानाधिकरणत्वादित्यर्थः ।

व्यवस्थापकतया[1] शास्त्रसिद्धप्रमाणस्य तत्राकथनादिति । **तस्मादिति ॥** यस्मात् परोक्तं लक्षणं दुष्टमस्मदुक्तलक्षणं त्वदुष्टं तस्मादित्यर्थः ॥

*(प्रमाणविभागः)*

**(प्र.प.) [2]द्विविधं प्रमाणं केवलमनुप्रमाणं चेति । तत्र यथार्थज्ञानं केवलप्रमाणम् । यथार्थमिति संशयादिव्युदासः । ज्ञानमिति प्रत्यक्षस्य । लिङ्गज्ञानं वाक्यज्ञानं च लिङ्गिनि वाक्यार्थे चानुप्रमाणमपि लिङ्गे वाक्ये च केवलप्रमाणमिति नातिव्याप्तिः । [3]इदं च साक्षाज्ज्ञेयविषयीकारित्वात् केवलमित्युच्यते ॥**

**(भा.च.)** विशेषलक्षणं वक्तुं तद्विभागमाह– **द्विविधमिति ॥ यथार्थज्ञानमिति ॥** यथावस्थितज्ञेयविषयीकारिज्ञानमित्यर्थः । एवमुत्तरत्रापि यथार्थपदघटितलक्षणवाक्यार्थोऽवगन्तव्यः ॥

ननु ज्ञानमिति प्रत्यक्षस्येत्यनेन यथार्थत्वरूपलक्षणस्य प्रत्यक्ष एवाति व्याप्तिरुक्ता । नत्वनुमानागमयोः । न च तयोरपीह

१. **'अर्थाव्यवस्थापकतया'** इति पाठेन भाव्यमिति भाति ।

२. **'तद् द्विविधं केवलमनुप्रमाणं'** त.

३. **राघ.–** इदं चेति । यथार्थज्ञानमित्यर्थः । नोक्तरूपकैवल्यमत्राभिमतं किन्तु साक्षाज्ज्ञेयविषयीकारित्वम् । ननूक्तं करणानामपि साक्षाद्वस्तुविषयत्वमस्तीति चेत् । सत्यम् । साक्षाज्ज्ञेयविषयीकारित्वं नाम स्वविषये ज्ञेयत्वाधाने स्वात्मान्यानपेक्षत्वम् । तच्च पटादिप्रमितेरेवास्ति न करणानाम् । लिङ्गज्ञानादेर्लिङ्ग्यादौ ज्ञेयत्वाधाने स्वात्मान्यानुमित्यादिसापेक्षत्वात् । अतो न लिङ्ग्याद्यंशे लिङ्गज्ञानादेः केवलतापत्तिरिति । लक्षणे तु साक्षादित्यविवक्षितमिति ज्ञानपदमर्थवदिति भावः । **पृ.सं- ११४.**

लक्ष्यत्वम् । केवलप्रमाणस्यैवेह[१] लक्ष्यत्वादित्याशङ्क्यानुमानागमयोर्विषयभेदेन केवलप्रमाणत्वस्यापि सद्भावाद् यथार्थज्ञानत्वस्यातिव्याप्तिर्नेत्याह– **लिङ्गज्ञानमिति** ॥

ननु तथाऽपि लिङ्गज्ञानवाक्यज्ञानयोर्लिङ्गवाक्यविषये साक्षाज्ज्ञेयतासम्पादनद्वारा ज्ञेयविषयीकारित्वरूपकेवलप्रमाणत्ववत्, लिङ्गिन्यनुमेये पदार्थसंसर्गरूपवाक्यार्थे च अनुमितिवाक्यार्थज्ञानद्वारा ज्ञेयतां सम्पाद्य ज्ञेयविषयीकारित्वेन केवलत्वस्यापि सद्भावादतिव्याप्तिर्दुर्वारेति चेत्, सत्यम् । विषयभेदेन लिङ्गज्ञानवाक्यज्ञानव्यावृत्तलक्षणविवक्षायाः साक्षाद् यथावस्थितज्ञेयविषयीकारित्वमेव लक्षणम् । ज्ञानपदमेव प्रमात्वाभिप्रायमिति ज्ञेयम् ॥

तथा च साक्षाज्ज्ञेयविषयीकारित्वं लक्षणमित्युक्ते संशयादिष्वतिव्याप्तिः । तत्परिहाराय यथाशब्दार्थयथावस्थितत्वं विशेषणं द्रष्टव्यम् ।

ननु केवलानुप्रमाणयोर्ज्ञेयविषयीकारित्वसाम्येऽपि केवलशब्दवाच्यत्वे किं निमित्तमिति शङ्कायामाह– **इदं चेति** ॥ यथार्थज्ञानमित्यर्थः । **साक्षाज्ज्ञेयविषयीकारित्वादिति** ॥ साक्षाज्ज्ञेयतां सम्पाद्य ज्ञेयविषयीकारित्वादित्यर्थः । करणं तु ज्ञेयतासम्पादने ज्ञानमनुसरतीत्यनुसृत्य मानमिति व्युत्पत्त्या अनुप्रमाणमित्युच्यत इत्यपि ज्ञेयम् ॥

*(केवलप्रमाणविभागप्रदर्शनम्)*

**(प्र.प.) तच्च चतुर्विधम् । ईश्वरज्ञानं लक्ष्मीज्ञानं**

१. क.पाठे **'इह'** इति पदं नास्ति ।

**योगिज्ञानमयोगिज्ञानं चेति । तत्र [१]सर्वार्थविषयकमीश्वर-ज्ञानम् । नियमेन यथार्थम् । तत्स्वरूपमनादिनित्यम् । स्वतन्त्रम् । [२]निरतिशयस्पष्टं च ।**

**ईश्वरे त्वसार्वत्रिकमन्यत्रानालोचनेऽपि सर्वविषयं लक्ष्मी-ज्ञानम् । तदपि नियमेन यथार्थम् । तत्स्वरूपमनादि नित्यं च । ईश्वरैकाधीनम् । तदपेक्षया स्पष्टत्वे न्यूनम् । स्पष्टत्वं चापरोक्षत्ववज्ज्ञानगत एव विशेषो न विषयोपाधिकः[३] ॥**

**(भा.च.) सर्वार्थविषयमिति** ॥ यथार्थसर्वार्थविषयमित्यर्थः । केवलप्रमाणलक्षणवाक्ये सर्वत्रापि ज्ञानपदमनुषञ्जनीयम् । सर्वप्रमेयमिति सामान्याकारेण सर्वविषयेऽस्मदादिज्ञानेऽतिव्याप्तिपरिहारायाशेष-विशेषाकारेण सर्वार्थविषयत्वं विवक्षितम् । उक्तप्रकारेण सर्वार्थ-विषयत्वमीश्वरप्रत्यक्षेऽतिप्रसक्तमिति ज्ञानपदम् । नियमेन यथार्थ-मित्यादिना ईश्वरज्ञानस्य लोकसाधारण्यशङ्कैव निरस्यते । न तु लक्षणान्तरमुच्यत इति ज्ञेयम् ॥

लक्ष्मीज्ञानादावपि सत्त्वात् स्वतन्त्रत्वस्य ईश्वरेऽपि सत्त्वाद् ईश्वरज्ञानस्य लक्ष्यत्वेऽपि ईश्वरस्यालक्ष्यत्वादिति– **नियमेनेति** ॥

---

१.**वेदे.**– सर्वार्थेति । स्वपरगताखिलविशेषविषयमित्यर्थः । लक्ष्मीज्ञानादेरीशादन्यत्रैव सर्वविषयकत्वं नेश्वरेऽपीति भावः । **पृ.सं- ११८.**

**श्रीनि.**– सर्वार्थविषयकमिति । स्वस्वातिरिक्ताशेषधर्मिगताशेषधर्मप्रकारकमित्यर्थः । पृ.सं- ११९.

२.**जना.** निरतिशयस्पष्टं चेति । अत्र स्पष्टशब्दो भावप्रधानः । स्वनिष्ठस्पष्टतानिरूपितस्पष्टतारहितमित्यर्थः ॥ **पृ.सं- ११७.**

**वि.**– निरतिशयस्पष्टं चेति । स्पष्टत्वं च ज्ञानगतो ज्ञानविशेष इति । **पृ.सं- १२०.**

३.**'विषयोपाधिकम्'** - त.

अयथार्थत्वरूपपक्षान्तरव्यवच्छेदेनेत्यर्थः । **तदिति** ॥ तज्ज्ञानं भगवतः स्वरूपमित्यर्थः । इदं तु ज्ञानादिधर्माणां धर्मिभेदपक्षस्य रामानुजोक्तस्य निरासार्थम् । **स्वतन्त्रम्,** स्वसत्तादौ परानपेक्षम् । ईश्वरज्ञानस्य लक्षणान्तरमाह– **निरतिशयस्पष्टं चेति** ॥

लक्ष्मीज्ञानस्य लक्षणमाह - **ईश्वर इति** ॥ **अन्यत्र** = ईश्वराद्भिन्ने लक्ष्म्यादिरूपेऽस्वतन्त्रे जगति । न चानालोचनेऽपीत्यनेन कदाचन[1] आलोचनाधीनसर्वविषयकत्वमप्यस्तीति शङ्कनीयम् । अस्य ऋजुज्ञान-व्यावृत्तिमात्राभिप्रायत्वात्[2] । अन्यथा लक्ष्मीज्ञानस्य जगद्विषये कदाचिदालोचनाधीनसर्वविषयत्वे उक्तलक्ष्मीज्ञाने लक्षणस्य आलोचनाधीनलक्ष्मीज्ञाने[3] अतिव्याप्तिः स्यात् ॥

**'विशेषान् तद्गतान् त्यक्त्वा प्रायस्तल्लक्षणाश्रयः ।**
**तथैव स्पष्टताभावात् तत्त्वं तत्त्वाच्च केवलम्'**॥(अनु.४.२.१,श्लो.१७७२)

इत्यनुव्याख्यानेन,

**'स्वात्मानमन्यच्चाशेषं पश्यत्येव हि सर्वदा'** ।(अनु.३.४.३३,श्लो.१४८१)

इत्यनुव्याख्यानेन च विरोधात् । तथाचानालोचनेऽपीत्यत्रापिपदेन आलोचनेऽनादर एव ज्ञाप्यत इति ध्येयम्[4] ॥

असति शुक्तिरूप्यादौ सत्प्रतियोगिकभेदो नास्तीति पक्षे त्वीशादन्यत्रेत्यनेनैवासद्व्यावृत्तेः सर्वविषयमित्यत्र परमार्थत्वविशेषणं न देयम् । असति सत्प्रतियोगिकभेदोऽस्तीति पक्षे तु [5]'ईशादन्यत्रे-त्यनेनासतोऽपि ग्रहणाल्लक्ष्मीज्ञाने तद्विषयकत्वाभावेनासम्भववारणाय परमार्थेति विशेषणं देयम् । एवम् ऋजुज्ञानलक्षणेऽपि द्रष्टव्यम्[6] ॥

१.**'कदाचित्'** क.ग.पाठः । २.**'-भिप्रायकत्वात्'** ग.पाठः ।
३.**'अनालोचनाधीनलक्ष्मीज्ञाने'**क.पाठः । ४.**'ज्ञेयं'ग.पाठः** ।
५.**'ईश्वराद्'** ग.पाठः । ६. **'ज्ञेयम्'** ग.पाठः ।

ऋजुज्ञानेऽतिव्याप्तिवारणाय **अनालोचन** इति विशेषणम् । स्वपरगताशेषविषयके ईश्वरज्ञानेऽतिव्याप्तिवारणाय **ईशेऽसार्वत्रिक**मिति विशेषणम् । लक्ष्मीप्रत्यक्षेऽतिव्याप्तिपरिहाराय **ज्ञान**पदम् । लक्ष्मीज्ञानस्य लक्षणान्तरमाह- **तदपेक्षया स्पष्टत्वे न्यूनमिति** ॥ ईश्वरज्ञानगतस्पष्टत्वापेक्षयेत्यर्थः ॥

ननु तर्हीश्वरज्ञानं घटादिकं रेखोपरेखादिना यथा विषयीकरोति न तथा लक्ष्मीज्ञानमिति प्राप्तम् । तथा चेशादन्यत्र सर्वविषयत्वलक्षणस्यासम्भव इत्यत आह- **स्पष्टत्वं चेति** ॥

न चैवमपि लक्ष्मीः स्वाज्ञाततद्गुणभिन्नत्वेन घटं जानाति न वा ? नाऽद्यः । तज्ज्ञानस्य ईश्वरेऽसार्वत्रिकत्वात् । द्वितीये घटस्वरूप एवाशेषविशेषज्ञानाभावात् कथमीशादन्यत्र तज्ज्ञानस्य सर्वविषयत्वमिति वाच्यम् । स्वायोग्यगुणभेदांशस्यापीशकोटिप्रविष्टत्वेनेशादन्यत्रेति पदेनैव स्वाज्ञाततत्तद्गुणप्रतियोगिकभेदस्यापि व्यावर्तितत्वादिति ॥

*(योगिज्ञानलक्षणकथनपुरस्सरं तद्विभागप्रदर्शनम्)*

**(प्र.प.)योगप्रभावलब्धातिशयं योगिज्ञानम् । तत् त्रिविधम् । ऋजुयोगिज्ञानं तात्त्विकयोगिज्ञानमतात्त्विकयोगिज्ञानं चेति । [1]ऋजवो नाम [2]ब्रह्मत्वयोग्या जीवाः । [3]ईश्वरादन्यत्राऽलोचने सर्वविषयं तज्ज्ञानम् । ईश्वरे त्वसार्वत्रिकमेव ॥**

---

१. **'तत्र ऋजवो'** त.

२. **श्रीनि.–** ब्रह्मत्वयोग्या इति । योग्यतायाः स्वरूपत्वादिदानीन्तनचतुर्मुखे मुक्ते इदमस्तीति ज्ञेयम् । **पृ.सं- १२८.**

३. **'ईशादन्यत्र'** इति भा.च.टिप्पण्यनुसारी पाठः ।

तद् द्विविधम् । स्वरूपं मनोवृत्तिरूपं चेति । तत्र स्वरूप-मनादिनित्यम् । योगप्रभावादामुक्तेः व्यक्त्यतिशयोपेतम् । मुक्तावेकप्रकारम् । वृत्तिज्ञानं तु प्रवाहतोऽनादि । योगानुगृहीतप्रत्यक्षादिजन्यम् । मुक्तौ तु नास्त्येव । द्वयमपि नियमेन यथार्थम् । ईश्वरे त्वन्यजीवेभ्योऽधिकविषयम् ॥

तदतिरिक्तास्तत्त्वाभिमानिनो देवास्तात्त्विकाः । अनादित्वे सतीश्वरादन्यत्राऽलोचनेऽप्यसर्वविषयं तज्ज्ञानम् ॥

तदपि [१]स्वरूपं बाह्यं चेति द्विविधम् । तस्यानादित्वं पूर्ववत् । स्वरूपं यथार्थमेव । बाह्यं कदाचिदयथार्थमपि ॥

तद्व्यतिरिक्ता देवादयो योगिनोऽतात्त्विकाः । सादित्वे सतीश्वरादन्यत्राल्पाज्ञानयुक्तं तज्ज्ञानम् । तदपि पूर्ववद् द्विविधम् । तत्र [२]स्वरूपस्य सादित्वं व्यक्त्यपेक्षया । अन्यस्य प्रवाहोत्पत्त्यपेक्षया । याथार्थ्यनियमादि पूर्ववत् ॥

**(भा.च.)** योगप्रभावेति ॥

'खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते ।
अप्रयत्नात् समाधिः' *(तन्त्रसारसङ्ग्रहः. ४. १५७)*

इति तन्त्रसारोक्तेः यत्नेन विना इन्द्रियाणां स्वस्वविषय इव हरावभ्यासपाटववशात् स्वत एव मनसा जायमाना या अखण्डा

१. 'स्वरूपं मनोवृत्तिरूपं चेति' त. २.'सादित्वं स्वरूपस्य' त.

स्मृतिर्युगपत्प्रतीयमानज्ञानादियावत्सम्भावित[1]गुणविशिष्टतया तैल-धारावदविच्छिन्ना[2] स्मृतिः समाधिः । तस्य समाधेः परिपाकः फलावस्था योगः । तस्य योगस्य प्रभावः सामर्थ्यम् । तेन लब्धः प्राप्तोऽतिशयः ।

अयोगिज्ञानादधिकार्थविषयकज्ञानत्वं योगिज्ञानस्य लक्षणमित्युक्तं भवति । योगिप्रत्यक्षेऽतिव्याप्तिपरिहारार्थं ज्ञानपदम् । अयोगिज्ञाना-दधिकार्थविषयकज्ञानत्वस्य लक्ष्मीज्ञानेऽपि सत्त्वादतिव्याप्तिपरिहाराय योगप्रभावलब्धेत्युक्तम् ॥

ऋजुयोगिज्ञानस्य लक्षणं वक्तुम् ऋजूनां लक्षणमाह– **ऋजव इति ॥** ब्रह्मत्वं चतुर्मुखत्वम् । चतुर्मुखत्वस्य वाय्वादिऋजुष्व-भावादव्याप्तिः स्यात् । तदर्थं योग्यपदम् । **'हिरण्यगर्भः समवर्तताग्रे'** (ऋ.सं.१०–१२१–१.) इत्यादिवेदवाक्यमवष्टभ्य हिरण्यगर्भस्य सर्वोत्तमत्वं केचन वर्तयन्ति । तन्मतनिरासाय जीवा इत्युक्तम् । तथा च जीवकोटिप्रविष्ट एवायमित्युक्त्या सर्वोत्तमत्वं दूरत एवेत्युक्तं भवति । [3]**ईशादन्यत्रेति ॥** ईशभिन्ने आलोचनाधीनसर्व-विषयकत्वयोग्यज्ञानत्वं ऋजुयोगिज्ञानस्य लक्षणम् । ज्ञानपदम् ऋजुप्रत्यक्षेऽतिव्याप्तिपरिहारार्थम् । लक्ष्मीज्ञानेऽतिव्याप्तिपरिहाराय आलोचन इति विशेषणम् । अनालोचनदशापन्नऋजुज्ञानेऽति-व्याप्तिपरिहाराय योग्यत्वविशेषणम् । असम्भवपरिहारार्थमीशादन्यत्रेति विशेषणमिति ॥

ननु ऋजुयोगिज्ञानस्य योगिज्ञानत्वाद् योगप्रभावात् क्रमेणा-

---

१.**'-संविभक्त-'** ग.पाठः । २.**'-दवच्छिन्ना'** ग.

३. अत्र मूले ईश्वरपदमस्ति । टिप्पण्यां पुनः तत्स्थाने ईशपदमेव गृहीतम् । तेन मूलेऽपि ईशपदघटितः पाठ एव शुद्ध इति सम्भाव्यते ।

धिकार्थविषयीकरणे ईश्वरे सर्वविषयत्वं क्रमेण सम्भवति[१] इति शङ्कायाम्[२] आह– **ईश्वर इति** ॥ लक्ष्म्यादिज्ञानवद्[३] एकरूपमेवेति[४] शङ्कायामाह– **तद् द्विविधमिति** ॥ **मनोवृत्तिरूपम्** अन्तःकरण-परिणामरूपम् । स्वरूपज्ञानस्य नित्यत्वेन[५] तदंशे योगस्य कथमुपयोग इत्यत आह– **योगप्रभावादिति** ॥ योगसामर्थ्योत्कर्षक्रमादित्यर्थः ॥

व्यक्त्यतिशयस्योत्तरावधिराहित्ये क्रमेणेश्वरविषयेऽपि सर्वविषय-कत्वं स्यादित्यत आह– **आमुक्तेरिति** ॥ आङ् मर्यादायाम् । तेन विनेत्यर्थो हि मर्यादाशब्देनोच्यते ॥

अभिवृद्धनदीपूरस्य पुनर्ह्रासवन्मुक्तिज्ञानगतैकरूपतायाः ह्रासः किं भवतीत्यत आह– **मुक्तावेकप्रकारमिति** ॥

ननु मुक्तिपर्यन्तमभिव्यक्तस्य [६]स्वरूपज्ञानस्य मुक्तौ कथमेक-प्रकारता ?

**'[७]अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् ।**
**कादाचित्कविशेषस्तु नैव तेषां निषिद्ध्यते ॥'**

*(ब्र.सू.भा.उदा.कौर्मवचनम्.४-४-२२)*

**'भोगानां तु विशेषेण वैचित्र्यं लभ्यते क्वचित् ॥'**

*(ब्र.सू.भा.उदा.नारायणतन्त्रवचनम्.४-४-२२)*

इति भाष्योदाहृतप्रमाणे मुक्तज्ञानस्य वृद्धिह्रासकथनादिति चेदुच्यते ।

---

१.**'किं भवति'** क.ग.पाठः २.**'आशङ्कायाम्'** क.पाठः
३.**'लक्ष्मीज्ञानवत्'** क. ग. पाठः ४.**'एकप्रकारमेवेति'** ग.
५.**'नित्यत्वे'** ग. ६.**'स्वज्ञानस्य'** ग.
७.**'अभिवृद्धिह्रासरूपं मुक्तानां'** ग.

**'स्वात्मानमन्यच्च सदा विशेषैरखिलैरपि । पश्यन्त्यज्ञः'**

*(अनु. ३-४-३३, श्लो-१४८४.)*

इत्यनुव्याख्याने, **'न तादृशी ब्रह्मणस्तु प्राय एव श्रियो यथा'**

*(अनु. ४-२-१, श्लो-१७७३.)*

इत्यनुव्याख्याने च मुक्तब्रह्ममतेः स्वस्वातिरिक्तजगद्विषये सर्वदाऽप्येकरूपत्वस्य आलोचनां विना सर्वविषयकलक्ष्मीमतिसाम्यस्य चोक्तत्वादवृद्धिह्रासरूपत्वमित्यादिवचनं मुक्तऋजुव्यतिरिक्तविषयम् । मुक्तऋजुज्ञानं तु मुक्तिपर्यन्तं गृहीतेश्वरगुणेषु लक्ष्म्यादिजगद्विषये चैकरूपमेव ।

न च ऋजुज्ञानलक्षणस्य मुक्तऋजुज्ञानेऽव्याप्तिः आलोचनाधीन-सर्वविषयत्वयोग्यत्वस्य मुक्तऋजुज्ञानेऽपि सत्त्वात् । न च लक्ष्मीज्ञानलक्षणस्य मुक्तऋजुज्ञानेऽतिव्याप्तिः । अनालोचनपदस्य सर्वदेत्यर्थकत्वात् । अत एव लक्ष्मीज्ञानलक्षणपरानुव्याख्याने–

**'स्वात्मानमन्यच्चाशेषं पश्यत्येव हि सर्वदा'**

*(अनु. ३-४-३३, श्लो-१४८१)*

इत्युक्तम् । अतो न किञ्चिदप्यनुपपन्नम् ।

ननु योगस्य प्रत्यक्षमात्रसहकारित्वाच्च ऋजूनामनुमानादिजन्य-ज्ञानस्य कथं योगिज्ञानत्वमित्यत आह– **योगानुगृहीतेति** ॥

लक्षणान्तरमाह – **ईश्वर इति** ॥ लक्ष्म्यपेक्षयाऽधिकविषयत्वस्य बाधितत्वात् स्वान्यजीवेभ्य इत्युक्तम् । जीवज्ञानेभ्य इत्यर्थः ।

तात्त्विकयोगिज्ञानस्य लक्षणं वक्तुं तात्त्विकानां लक्षणमाह- **तद्व्यतिरिक्ता इति** ॥

ऋजुलक्ष्मीव्यतिरिक्तत्वे सति तत्त्वाभिमानिदेवत्वं तात्त्विकानां लक्षणम् । ऋजुव्यतिरिक्तत्वस्येश्वरेऽपि सत्त्वात् तत्त्वाभिमानिन इत्युक्तम् । दैत्यानामपि तत्त्वाभिमानित्वाद् देवपदम् ।

यदा तु तत्त्वपदेन ब्रह्माण्डावरणभूतं तत्त्वं विवक्षितं तदा दैत्यानां तत्रानधिकाराद् **देव**पदं स्वरूपकथनपरम् । **अनादित्वे सतीति ॥** अनादित्वे सतीशादन्यत्राऽलोचनेऽप्यसर्वविषयत्वं तात्त्विकयोगिज्ञानस्य लक्षणम्[1] । आलोचनेऽप्यसर्वविषयत्वस्य[2] ईश्वरविषये ऋजुज्ञानेऽपि[3] सत्त्वाद् अनादित्वस्यापि सत्त्वाच्चातिव्याप्तिः । तत्परिहाराय **ईशादन्यत्रे**ति विशेषणम् ।

अनादित्वे सति असर्वविषयत्वस्य अनालोचनदशापन्नऋजुज्ञानेऽपि सत्त्वाद् **आलोचनेऽपी**ति विशेषणम् । ईशादन्यत्राऽलोचनेऽप्यसर्वविषयत्वस्यातात्त्विकयोगिज्ञानेऽपि सत्त्वाद**नादित्वे सती**ति विशेषणम् ।

नन्वत्रानादित्वं यदि स्वरूपतो विवक्षितं तदा तात्त्विकानां वृत्तिज्ञानेऽव्याप्तिः[4] । यदि प्रवाहतस्तदा स्वरूपज्ञानेऽव्याप्तिः । यद्युभयं विवक्षितं तदाऽसम्भवः । अतात्त्विकानां स्वरूपवृत्तिज्ञानयोरतिव्याप्तिश्च । स्वरूपतश्चानादित्वस्यापि तत्र सत्त्वादिति चेद् उच्यते ।

अनादित्वे सतीत्यनेन साक्ष्ययोग्यार्थव्यक्त्यनादित्वं योगजवृत्तिप्रवाहानादित्वं[5] चेत्युभयं विवक्षितम् । सादियोगिनां वृत्तिज्ञानस्य

---

१. **'तात्त्विकयोगिज्ञानलक्षणम्'** ग.क.पाठः ।

२. **'अनालोच्यसर्वविषयत्वस्य'** क.पाठः ।

३. **'ईशविषयऋजुज्ञानेऽपि'** ग.क.पाठः ।

४. **'अतिव्याप्तिः'** ग.

५. अत्र **'प्रवाहानादित्वं'** इत्यारभ्य उत्तरत्र 'योगस्य सादित्वात्' इत्यन्तो भागः क.ग.पाठे नास्ति ।

प्रवाहतो अनादित्वेऽपि योगस्य सादित्वाद् योगजवृत्तिप्रवाहोऽपि सादिरेव । तेषां स्वरूपज्ञाने स्वरूपतोऽनादित्वस्य वा साक्षियोग्ये आत्माकाशादौ व्यक्त्यनादित्वस्य वा सत्त्वेऽपि साक्ष्ययोग्यार्थविषये स्वरूपज्ञानगतव्यक्तेर्योगसापेक्षत्वेन सादियोगसापेक्षा । अतात्त्विकानां स्वरूपज्ञानगता[1] साक्ष्ययोग्यार्थगोचरा व्यक्तिः सादिरेव ।

तथा च साक्ष्ययोग्यार्थव्यक्त्यनादित्वयोगजवृत्तिप्रवाहानादित्वयोरन्यतरानादित्वे सतीशादन्यत्राऽलोचनेऽपि असर्वविषयत्वमिह विवक्षितम् । अन्यतरत्वविशेषणेन परस्पराव्याप्त्यसम्भवयोः परिहारः । उक्तविधानादित्वस्य सादितात्विकयोगिनां स्वरूपज्ञाने वृत्तिज्ञाने चाभावान्नातिव्याप्तिरिति ॥

**पूर्ववदिति** ॥ ऋजुज्ञानवत् स्वरूपज्ञानस्य स्वरूपतोऽनादित्वं वृत्तिज्ञानस्य तु प्रवाहत इत्यर्थः । बाह्यं तु **कदाचिदयथार्थमिति** ॥ इदं तु सरस्वतीव्यतिरिक्तविषयम् ॥

**'तस्मादेको वायुरेव धर्मे भागवते स्थितः ।**
**लक्ष्मीः सरस्वती चेति परशुक्लत्रयं स्मृतम् ॥'** *(म.भा.ता.नि.१८.२७)*

इत्यनेन लक्ष्मीवाय्वोरिव सरस्वत्या अपि मिथ्याज्ञानराहित्यादिरूपपरशुक्लत्वोक्तेरिति ॥

अतात्त्विकयोगिज्ञानस्य लक्षणं वक्तुम् अतात्त्विकानां लक्षणमाह- **तद्व्यतिरिक्ता इति** ॥ ऋजुतात्त्विकव्यतिरिक्तदेवादयो[2] देवऋष्यादयो मनुष्योत्तमाधिकारिणस्तेऽतात्त्विका इत्यर्थः । देवादियोगित्वम् ऋजु-

---

१.**'स्वरूपज्ञानगतसाक्षि'** क.ग.पाठः ।

२.**'-व्यतिरिक्ता देवादयः'** ग.

तात्त्विकयोरप्यस्तीति **तद्व्यतिरिक्ता** इत्युक्तम् । तद्व्यतिरिक्तत्वं तु मनुष्यादावस्तीति **देवादय** इत्युक्तम् ॥

**सादित्वे सतीति** ॥ सादित्वे सतीशादन्यत्राल्पाज्ञानयुक्तत्व-मतात्त्विकयोगिज्ञानस्य लक्षणम् । अज्ञानस्याल्पत्वं स्वसमानाधि-करणज्ञानापेक्षया विवक्षितम् । न तु स्वाधमगतज्ञानापेक्षया[१] । तथात्वे सादित्वे सति स्वाधमगताज्ञानापेक्षयाऽल्पाज्ञानयुक्तत्वस्य ईश्वर-विषयेऽपि अतात्त्विकयोगिज्ञानेऽसम्भवेन[२] ईशादन्यत्रेति विशेषण-वैय्यर्थ्यात् । स्वसमानाधिकरणज्ञानापेक्षया अल्पाज्ञानयुक्तत्वं तु ईश्वरविषयमादाय बाधितम् । ईश्वरविषये स्वगतज्ञानापेक्षया अज्ञानस्यैव प्रचुरत्वात् । अत ईशादन्यत्रेति विशेषणम् । ईशादन्यत्राल्पाज्ञानयुक्तत्वं तात्त्विकयोगिज्ञानेऽप्यस्तीति सादित्व-विशेषणम् ॥

अतात्त्विकानां स्वरूपज्ञानं वृत्तिप्रवाहयोः स्वरूपप्रवाहाभ्यामनादि-त्वेऽपि योगस्य सादित्वाद् योगजव्यक्तिवृत्तिप्रवाहयोरपि सादित्व-मुपपन्नम् । तथा च योगप्रवाहजन्यव्यक्तिवृत्तिप्रवाहयोरन्यतरापेक्षया सादित्वे सतीशादन्यत्र अल्पाज्ञानयुक्तत्वं लक्षणमित्युक्तं भवति । न च सादियोगिनां योगात् पूर्वभावेषूक्तलक्षणाभावादव्याप्तिः । योगिज्ञानत्वावच्छिन्नस्यैवेह[३] लक्ष्यत्वेनाव्याप्त्यभावात् । सादित्वेऽप्य-न्यतरत्वस्य विवक्षितत्वान्न परस्पराव्याप्त्यसम्भवाविति[४] ज्ञेयम् ॥

**पूर्ववत्** = तात्त्विकयोगिज्ञानवत् । वृत्तिज्ञाने क्वचिदयाथार्थ्यमादि-शब्दार्थः ॥

१. **'स्वार्थगतज्ञानापेक्षया'** क.पाठः । २. **'अभावेन'** ग.पाठः ।

३. **'योगिज्ञानत्वावच्छिन्नस्येह'** ग. पाठः ।

४. **'परस्पराव्याप्तिसम्भवात्'** ग. **'परस्पराव्याप्त्यसम्भवात्'** क. ख.

*(अयोगिज्ञानलक्षणम्)*

**(प्र.प.) तद्व्यतिरिक्ता जीवा अयोगिनः । [1]ईश्वरादन्यत्राज्ञानप्रचुरं तज्ज्ञानम् । तदपि पूर्ववद् द्विविधम् । उत्पत्तिविनाशवच्च ।**

**अयोगिनोऽपि त्रिविधाः । मुक्तियोग्या नित्यसंसारिणस्तमोयोग्याश्चेति । तत्र मुक्तियोग्यानां [2]स्वरूपज्ञानं यथार्थमेव । [3]नित्यसंसारिणां तु मिश्रम् । [4]अन्येषामयथार्थमेव । बाह्यं तु त्रयाणामप्युभयविधमिति ॥**

**(भा.च.)** अयोगिज्ञानस्य लक्षणं वक्तुमयोगिनां लक्षणमाह– **तद्व्यतिरिक्ता इति** ॥ ऋजुतात्त्विकातात्त्विकव्यतिरिक्ता इत्यर्थः । जीवपदं दुःखस्पृष्टचेतनपरम् । तद्व्यतिरिक्तत्वस्य लक्ष्म्यादावपि सत्त्वाज्जीवपदम् । जीवत्वस्य योगिषु सत्त्वात् **तद्व्यतिरिक्ता** इत्युक्तम् ॥

**ईशादन्यत्रेति** ॥ प्रचुरमज्ञानं यस्य तद् अज्ञानप्रचुरम् । अज्ञानप्राचुर्यं तु स्वसमानाधिकरणज्ञानापेक्षया विवक्षितम् । नतु स्वोत्तमगतज्ञानापेक्षया[5] स्वोत्तमापेक्षया अज्ञानप्रचुरत्वस्य ऋजुज्ञाने

---

१.**'ईशात्'** इति टिप्पण्यनुसारी पाठः । २.**'स्वरूपं'** त.

३.**'संसारिणां'** त.

४. **विज.–** अन्येषामिति । तमोयोग्यानां स्वरूपज्ञानमयथार्थमेव । इदं च प्रकारांशमभिप्रेत्य । तदपि च स्वस्वरूपदुःखव्यतिरिक्तविषय एवेति बोध्यम्। स्वरूपदुःखविषयेऽप्ययथार्थत्वे तेषां दुःखात्मकत्वाभावप्रसङ्गात् । सर्वं ज्ञानं धर्मिण्यभ्रान्तमित्यनभ्युपगमाद्वेदमुक्तम् । **पृ.सं - १३९.**

५.**'-गताज्ञानापेक्षया'** क. ग.

त्वीशादन्यत्राभावेऽपि तात्त्विकातात्त्विकयोगिज्ञाने सत्त्वेनेशादन्यत्रेति विशेषणेऽप्यतिव्याप्त्यपरिहारात्[१] ।

तथा चेश्वरांशेऽस्य स्वसमानाधिकरणज्ञानापेक्षयाऽज्ञानप्रचुर-ज्ञानत्वस्य योगिज्ञाने सत्त्वेऽपीशादन्यत्राभावादीशादन्यत्रेत्युक्तम् ।

प्रचुराज्ञानयुक्तत्वमात्रस्य योगिजीवेऽपि सम्भवाद् ज्ञानपदम् । **उत्पत्तिविनाशवच्चेति** ॥ चकारादुत्पत्तिविनाशरहितत्वमपि ग्राह्यम् । तथा च स्वरूपज्ञानमुत्पत्तिविनाशरहितम् । वृत्तिज्ञानं तूत्पत्तिविनाश-वदित्यर्थः ॥

*(वैशेषिकोक्तयथार्थज्ञानचातुर्विध्यनिरासः)*

**(प्र.प.) इन्द्रियजं, लिङ्गजं, स्मृतिः, आर्षं चेति चतुर्विधं यथार्थज्ञानमिति[२] वैशेषिकाः । तदसत् । नित्यस्याऽगमजन्यस्य[३] चासङ्ग्रहात् । स्मृतेरिन्द्रियजत्वेनाऽर्षस्य[४] योगिज्ञानत्वेन च पृथग्ग्रहणायोगाच्च ॥**

*(अनुप्रमाणलक्षणम्)*

**यथार्थज्ञानसाधनमनुप्रमाणम् । यथार्थमित्येवोक्ते केवलेऽति-व्याप्तिः । ज्ञानमित्येवोक्ते तत्र, संशयादौ च । प्रत्यक्षेऽ-व्याप्तिश्च । साधनमित्येवोक्ते कुठारादावतिव्याप्तिः ।**

**यथार्थज्ञानमित्युक्ते केवलेऽतिव्याप्तिः । प्रत्यक्षेऽव्याप्तिश्च । यथार्थसाधनमित्युक्ते प्रत्यक्षसाधनेऽतिव्याप्तिः । ज्ञानसाधन-**

---

१. '-प्यतिव्याप्तेरपरिहारात्' क.ग. २. 'यथार्थज्ञानमेवेति' त.

३. '-ऽगमजस्य' त. ३. '-नाऽर्षस्य च' त.

मित्युक्ते संशयादिसाधनेऽतिव्याप्तिः । यथार्थज्ञानकारण-मित्युक्ते प्रमात्रादावतिव्याप्तिरिति सर्वं सार्थकम् ।

यज्जातीयानन्तरं नियमेन[१] कार्योत्पत्तिस्तदत्र साधनं विवक्षितम्[२] । अतो न यादृच्छिकसंवादिष्वतिव्याप्तिः ॥

*(प्रागुक्तप्रमाणद्वैविध्ये आक्षेपसमाधाने)*

ननु त्रिविधं प्रमाणमिति वक्तव्यम् । ल्युटोऽधिकरणेऽप्यनुशासनात् । सत्यम् । [३]तथाऽपि प्रमाणशब्दस्याधिकरणे प्रयोगाभावात्[४] तदसङ्ग्रहः । तथाऽपि प्रमाणशब्दो [५]भावसाधनः करणसाधनश्चेत्यनेकार्थः । तत्र किमनुगत-लक्षणकथनेनेति[६] ॥

उच्यते; नायमक्षादिशब्दवदत्यन्तभिन्नार्थः । किन्तु

१. 'नित्यमेव' त.

२. यज्जातीयाधिकरणक्षणाव्यवहितक्षणोत्तरव्यापककार्योत्पत्तिकत्वं साधनत्वम् – इति परिष्कृतोऽर्थः ।

३. 'तथा सति' ग.

४. **वेदे.–** प्रयोगाभावादिति । नन्वस्त्यधिकरणेऽपि विप्राः प्रमाणमिति प्रयोगः । मैवम् । विप्राणां प्रमायां स्वातन्त्र्येण कर्तॄणामधिकरणत्वाभावात् । न हि क्रियाधारोऽधि-करणम् । किं नाम ? कर्तृकरणयोः क्रियाश्रययोः धारणक्रियां प्रति यदाधारस्तदधिकरणम् । तस्मात्तदीयस्य विज्ञानस्य वाक्यस्य वा प्रामाण्याद्विप्राः प्रमाणमित्युपचर्यते । अतो नायमधिकरणे प्रयोग इति भावः । **पृ.सं- १५१.**

५. प्रकृतिजन्यबोधे प्रकारतया भासमानो भावः ।
**राघ.– भावसाधन इति** । भावो नाम 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इत्युक्त्या केवलो धात्वर्थः । स एव साधनं यस्य शब्दस्य प्रत्ययोत्पत्तौ स भावसाधनः । एवं करणसाधन इत्यपि बोध्यम् ॥ **पृ.सं - १५०.**

६. त. पाठे **'इति'** शब्दो नास्ति ।

**धात्वर्थानुगमस्तूभयत्र सम[1] इत्येकार्थत्वमाश्रित्यानुगत-लक्षणोक्तिरित्यदोषः ॥**

**(भा.च.)** परोक्तं केवलप्रमाणचातुर्विध्यं दूषयितुमनुवदति– **इन्द्रियजमिति** ॥ **नित्यस्य** ज्ञानस्य **आगमजन्यस्य** ज्ञानस्य[2] । **स्मृतेरिति** ॥ तथा चेन्द्रियजमित्यनेन मनोजन्यस्मृतेर्ग्रहणम् । **आर्षस्य** ऋषिज्ञानस्य । **योगिज्ञानत्वेन** योगस्य प्रत्यक्षादिसहकारितया योगिज्ञानस्यापि इन्द्रियलिङ्गादिजन्यत्वेनेन्द्रियजलिङ्गजशब्दाभ्या-मार्षज्ञानस्यापि ग्रहणादिन्द्रियजलिङ्गजशब्दाभ्यां पृथग् भिन्नत्वेन स्मृत्यादिग्रहणमनुपपन्नमित्यर्थः ।

**यज्जातीयानन्तरमिति** ॥ तथा च धूळीपटळे धूमविभ्रमानन्तरं[3] धूम-विभ्रमजातीयानन्तरं, नियमेनाव्यभिचारेण प्रमालक्षणकार्यानुत्पत्तेः[4] ।

यदृच्छया प्राप्तः यादृच्छिकः, स चासौ संवादश्च, सोऽस्मिन्नस्तीति यादृच्छिकसंवादी, तस्मिन् लिङ्गविभ्रमे । तथा घटोऽस्तीत्युक्ते पटोऽस्तीति भ्राम्यतो दैवात् पटस्यापि सत्त्वे [5]पटास्तित्व-प्रमोत्पत्तेरेतादृशशब्दविभ्रमे च नातिव्याप्तिरिति भावः ।

ननु केवलं लिङ्गविभ्रमजातीयानन्तरं नियमेन प्रमोत्पत्तेरभावेऽपि यादृच्छिकेत्यादिविशेषिततज्जातीयानन्तरं नियमेन प्रमा भवत्येवेति चेत्, सत्यम् । क्वचिद् यादृच्छिकसंवादिलिङ्गविभ्रमानन्तरं विशेषदर्शनादयं धूळीपटळ एवेति भ्रमविरोधिज्ञानोदये च प्रमानुदयादुक्तमनवद्यम् ।

---

१. **'-स्तूभयत्रापि समानम्'** त. २.**'आगमजस्य ज्ञानस्य'** क.पाठः ।
३. **'धूमभ्रमानन्तरं'** क.ग.पाठः ।
४. **'प्रमाणलक्षणकार्यानुत्पत्तेः'** क.ग.पाठः । ५.**'पटेऽस्तित्व-'** ग.

न च तथाऽपि यथावस्थितज्ञेयविषयीकारित्वरूपप्रमाणसामान्य-लक्षणस्य यादृच्छिकसंवादिलिङ्गविभ्रमे ज्ञातज्ञापकवाक्ये चातिव्याप्तिरिति वाच्यम् । निर्दोषत्वविशेषितस्यैव यथावस्थितज्ञेयविषयीकारित्वस्य लक्षणत्वात् ॥

न च तर्हि निर्दोषं ज्ञेयविषयीकारि प्रमाणमित्येवास्तु । तावतैव ज्ञातज्ञापकयादृच्छिकसंवादिलिङ्गशब्दविभ्रमसंशयविपर्ययादीनां निरासात् किं यथावस्थितत्वविशेषणेनेति वाच्यम् । यथावस्थित-पदेनापि विषयीकारिगतनिर्दोषत्वस्यैवाभिधानात् ॥

तर्हि यथावस्थितमेव ज्ञेयमिति यथावस्थितत्वस्य ज्ञेयविशेषण-त्वोक्तिः कथमिति चेत्, तस्याः ज्ञेयविषयीकारिणो निर्दोषत्वे ज्ञेयं यथावस्थितमेव भवतीति लब्धार्थानुवादरूपत्वादिति सर्वं समञ्जसम् ।

**तथाऽपीति** ॥[1] ल्युडन्तप्रमाणशब्दस्याधिकरणेऽनुशासनेऽपि तस्याधिकरणे प्रयोगाभावादित्यर्थः । भावं धात्वर्थं साधयति ज्ञापयतीति भावसाधनः । तत् करणं साधयति ज्ञापयतीति करणसाधनमित्यर्थः ।

**तत्रेति** ॥ अनुगतलक्षणकथनस्यानुगतव्यवहारप्रयोजकत्वात् । अनुगतव्यवहारस्यानुगतप्रवृत्तिनिमित्तसाध्यत्वात् । प्रमाणशब्दस्य च भावकरणत्वरूपानेकप्रवृत्तिनिमित्तकत्वात् केवलानुप्रमाणयोरनुगत-व्यवहारासम्भवेऽनुगतलक्षणकथनेन किम् ? न किञ्चिदपि प्रयोजन-मित्याक्षेपाभिप्रायः ॥

**अत्यन्तभिन्नार्थ इति** ॥ अक्षशब्दार्थेषु इन्द्रियशकटाक्षद्यूत-साधनरूपाक्षेषु अक्षत्वस्य भिन्नभिन्नरूपत्वादिति भावः । **धात्वर्थानु-**

१. 'तथा सतीति' ग.

**गम इति** ॥ **'माङ् माने'** इति धातुव्याख्यानान्मानं धात्वर्थः । धातूनामुपसर्गवशेनार्थविशेषवाचकत्वात् प्रमाणमित्यत्र प्रेत्युपसर्गवशाद् धात्वर्थत्वेनैव प्रतीतं यत् प्रकृष्टत्वं तस्यानुगमः सम्बन्धः ॥

उभयत्र भावे करणे च समानमित्येकार्थतामेकप्रवृत्तिनिमित्तकतामाश्रित्य यथावस्थितज्ञेयविषयीकारित्वरूपानुगतलक्षणोक्तिरित्यनुगतव्यवहारासम्भव(रूप)लक्षणदोषो नेत्यर्थः ॥

*(अनुप्रमाणविभागः)*

**(प्र.प.) त्रिविधमनुप्रमाणम् । प्रत्यक्षमनुमानमागमश्चेति[१] । तत्र [२]निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम् । अर्थशब्देनेन्द्रियविषया गृह्यन्ते । तेषां दोषाः [३]अतिदूरत्वमतिसामीप्यं सौक्ष्म्यं व्यवधानं [४]समानद्रव्याभिघातोऽनभिव्यक्तत्वं सादृश्यं चेत्यादयः । [५]तेषु सत्सु क्वचिज्ज्ञानमेव न जायते । क्वचिद् विपरीतज्ञानमुत्पद्यते ॥**

---

१.**'निर्दोषेन्द्रियसंयोगः प्रत्यक्षमिति गीयते'** *(बृहद्भाष्योक्तब्रह्मतर्कस्मृतिः –५-८-१.)* अनुसृत्य मीयतेऽनेनेति अनुमानम् । **'तर्कोऽदुष्टस्तथाऽनुमा'** *(विष्णुतत्त्वविनिर्णयोदाहृतब्रह्मतर्कस्मृतिः)* **'आसमन्ताद् गमयति धर्माधर्मौ परं पदम् । यच्चाप्यतीन्द्रियं त्वन्यत् तेनासावागमः स्मृतः'** *(अनुव्याख्यानम् – अ-३. पा-३. श्लोक-१३०)* **'वाक्यमेवाऽगमः शुभम्'** *(बृ.भा- ५-८-१)* **'आगमोऽदुष्टवाक्यं च'** *(विष्णुतत्त्वविनिर्णयः – परिच्छेदः -१)*

२. **राघ.–** निर्दोषेति । अर्थाश्चेन्द्रियाणि चार्थेन्द्रियाणि । निर्दोषाणामर्थानां निर्दोषाणामिन्द्रियाणां च सन्निकर्षः । समुदायाशयमेकवचनम् । **पृ.सं-१५४.**

३. **'अतिदूरस्थत्व-'** त.

४.**'समानाभिघातो-'** त.

५. **'तेषु हि'** त.

*(साक्षीन्द्रियलक्षणकथनम्)*

**इन्द्रियशब्देन ज्ञानेन्द्रियं गृह्यते । तद् द्विविधम् । प्रमातृस्वरूपं प्राकृतं चेति । तत्र [१]स्वरूपेन्द्रियं [२]साक्षीत्युच्यते । तस्य विषया आत्मस्वरूपं तद्धर्मा अविद्या मनस्तद्वृत्तयो बाह्येन्द्रिय-ज्ञानसुखाद्याः कालोऽव्याकृताकाशश्चेत्याद्याः । स च स्वरूपज्ञानमभिव्यनक्ति ॥**

१. **'स्वरूपम्'** त.

२. **श्रीनि.–** सुखादिविषयं स्वरूपभूतं चैतन्येन्द्रियं साक्षीत्युच्यते । तदभिव्यक्तं ज्ञानं चेति । अत्रेदं बोध्यम् । स्वरूपेन्द्रियमपि घ्राणादिभेदेन षड्विधं सल्लिङ्गदेहस्थसूक्ष्मषडिन्द्रियैः स्थूलशरीरस्थस्थूलेन्द्रियैश्च मिश्रं तिष्ठति क्षीरनीरवत् । तत्र स्पर्शेन्द्रियं स्थूलशरीरे सर्वत्र व्याप्तं चक्षुरादिचतुष्टयं स्वस्वगोलकवृत्ति । मनस्तु सर्वेन्द्रियाधिष्ठातृ सर्वशरीरसञ्चारि प्रायो हृत्कण्ठवृत्ति । तत्पञ्चविधम् । चित्तं चेतनाऽहङ्कारो बुद्धिरन्तःकरणमिति । तत्र केनचिद्रूपेण बाह्येन्द्रियद्वारा घटादिबाह्यार्थज्ञानं जनयति । रूपान्तरेण च तज्ज्ञानस्य तज्जन्येच्छाप्रयत्नसुखदुःखसंस्कारद्वेषोपादानं भवति । रूपान्तरेण पूर्वपूर्वजातगुणादीन् सहकारीकृत्य निमित्तकारणं च भवति । तत्र साक्ष्याख्यमनोरूपेन्द्रियाभिव्यक्तस्वरूपज्ञानं बाह्यमनोरूपेन्द्रियतत्परिणत-ज्ञानादिभिः सह विषयीकरोति । आत्मकालाकाशाविद्याप्रकृत्यादि-विषयीकार्यपि स्वरूपमनोऽभिव्यक्तं स्वरूपज्ञानमेव । इदं चेन्द्रियद्वैविध्यं संसारिणामेव । मुक्तानां तु स्वरूपेन्द्रियाण्येव । यथोक्तं बृहद्भाष्ये ।

'मनसः सम्प्रयोगो यो दुःखादिरहितात्मनः ।
अभावरूपं प्रत्यक्षं मनश्च द्विविधं मतम् ।
चेतनं च जडं चेति चक्षुराद्यं तथैव च ।
चेतनं त्विन्द्रियं ह्यात्मा स्वरूपान्नापरं स्मृतम् ।
मुक्तानां चेतनं त्वेव बद्धानामुभयं तथा ।

*(प्राकृतेन्द्रियविभागः)*

**[१]प्राकृतं षड्विधम् । घ्राणरसनचक्षुस्त्वक्श्रोत्रमनोभेदात् । तत्र गन्धस्तद्विशेषाश्च घ्राणस्य विषयाः । रसस्तद्विशेषाश्च[२] रसनस्य । महान्ति रूपवन्ति द्रव्याणि केचिद्गुणाः कर्माणि जातयश्च चक्षुस्त्वचोः । वायुस्पर्शोऽपि त्वचो विषयः । शब्दः श्रोत्रस्य । एतेषां पञ्चानां मनोऽनधिष्ठितत्वं काचकामलादयश्च दोषाः । मनसस्तु बाह्येन्द्रियाधिष्ठानेनैते सर्वे विषयाः ।**

**स्वातन्त्र्येण स्मरणसाधनं मनः । तस्य दोषा रागादयः ।**

---

स्वरूपेणापि संयोगः स्वरूपस्यैव युज्यते ।
यथा रक्तस्य संयोगस्तत्प्रकाशेन नित्यदा' इति ।

अनुव्याख्याने च–

'प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतम् ।
शुद्धमीशरमामुक्तेष्वन्यत्र प्राकृतैर्युतम्' ।। इति । **पृ.सं- १५८.**

**१.वेदे.–** प्राकृतम् इत्यत्र प्रकृतिशब्देनाहङ्कारः पञ्चभूतानि चोच्यन्ते ।
'सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहङ्कृतेः ।
तेषां भूतैरुपचयः सृष्टिकाले विधीयते' इत्युक्तेः । **पृ.सं- १६३.**

२. 'गुडस्य पनसादीनां निर्हारीत्यभिधीयते ।
विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् ।।'– इति रसविशेषाः ।
**'तद्विशेषाः रसनस्य'– त.**

**राघ.–** तद्विशेषाः सौरभ्यादयो माधुर्यादय इत्यर्थः । केचिद्गुणा इति । महद्रूपवद्द्रव्यनिष्ठा रूपरसादयः । कर्माण्युत्क्षेपणादीनि । घटत्वद्रव्यत्वादि-जातयश्च । जातिपदेन सर्वघटादिनिष्ठान्योन्यसदृशघटत्वादयो धर्मा ग्राह्याः । काचकामलादय इति । आदिपदेन पित्ताङ्गुल्यवष्टम्भादिग्रहः ।। **पृ.सं - १६२**

**(भा.च.) तत्रेति**[1] ॥ अर्थश्च इन्द्रियं च अर्थेन्द्रिये, निर्दोषे च ते अर्थेन्द्रिये च, तयोः सन्निकर्षः निर्दोषार्थनिरूपितः निर्दोषेन्द्रियधर्मिकः सन्निकर्षः प्रत्यक्षमित्यर्थः । न त्विन्द्रियनिरूपितोऽर्थधर्मिक इति ज्ञेयम् ।

अर्थशब्दस्यानेकार्थत्वाद् विवक्षितमर्थमाह– **अर्थशब्देनेति** ॥ व्यवधानं कुड्यादिव्यवधानम् । **समानाभिघात इति** ॥ माषराशि-प्रविष्टश्याममुद्ग इव समानद्रव्यसंश्लेष इत्यर्थः । अनभिव्यक्तत्वं त्वन्धकारस्थघटगतं शुक्तिकायां रजतसादृश्यम् । आदिशब्दाद् अलातभ्रमणं ग्राह्यम् ।

एतेषां दोषत्वं कुत इत्यत आह- **तेष्विति** ॥

ननु कर्मेन्द्रियस्य ज्ञानसाधनत्वाभावेनानुप्रमाणत्वाभावात् कथं तत्सन्निकर्षः प्रत्यक्षत्वेनोच्यत इत्यत आह– **इन्द्रियशब्देनेति** ॥ प्रमातृस्वरूपेन्द्रियमित्यर्थः । तद्वृत्तयश्च का इत्यत आह – **ज्ञानसुखाद्या इति** ॥ तद्धर्माः ज्ञानसुखाद्या इति सम्बन्धः । आदिशब्देनेच्छादीनां ग्रहणम् । आकाशश्चेत्याद्या इत्यत्राऽदिशब्देन भूतादिकालविशेष-ग्रहणम् ।

तर्हि साक्षिणोऽप्यनुप्रमाणत्वात् कथं यथार्थज्ञानसाधनत्वमित्यत आह– **स चेति** ॥

स्वरूपेन्द्रियवत् प्राकृतमपि किमेकप्रकारं, नेत्याह– **प्राकृतमिति** ॥ सुगन्धादयस्तदवान्तरविशेषा इत्यर्थः । गुरुत्वाकाशसंयोगादीना-मिन्द्रियायोग्यत्वात् केचिद् गुणा इत्युक्तम् । अणोर्नीरूपस्य[2] च चक्षुः-स्पर्शनाविषयत्वान्महान्ति रूपवन्तीत्युक्तम् । **वायुस्पर्शोऽपीति** ॥

१. 'अत्रेति'- क.

२. निरूपस्येति सर्वमातृकापाठः ।

वायोः स्पर्शनायोग्यत्वपक्षे न केवलं कर्मादीनि, वायोः स्पर्शोऽपीति योजना । योग्यत्वपक्षे तु न केवलं वायुः, स्पर्शोऽपीति योजना । अर्थदोषानुक्त्वा इन्द्रियदोषानाह– **तेषामिति** ॥

ननु मनसस्तु बाह्येन्द्रियाधिष्ठानेन बहिःपदार्थविषयकत्वे बहिः-पदार्थज्ञाने चक्षुरादीनामेव करणत्वान्मनस्तु प्रयोजकमात्रत्वाद्[१] यथार्थ-ज्ञानकरणत्वरूपसाधनत्वाभावेनानुप्रमाणत्वेन कथमस्य परिगणनमित्यत आह- **स्वातन्त्र्येणेति** ॥ बाह्येन्द्रियाधिष्ठानं[२] विनेत्यर्थः ।

*(स्मृतेः प्रामाण्योपपादनम्)*

**(प्र.प.) ननु स्मृतेर्याथार्थ्यमेव नास्ति । नहि यदा यादृशोऽर्थः स्मर्यते तदाऽसौ तादृशः । पूर्वावस्थाया निवृत्तत्वादिति चेन्न[३] । यतो ज्ञानकाले वस्तुनस्तथात्वं[४] याथार्थ्योपयुक्तं न भवति । किन्तु यद्देशकालसम्बन्धितया यद् वस्तु ज्ञानेन यादृशं गृह्यते तद्देशकालयोस्तस्य[५] तथात्वम् । स्मृतिश्च तत्र तदाऽसौ तादृश इति गृह्णाति । न च तत्र तदाऽसौ न तादृशः ।**

**ननु पूर्वानुभवजनितसंस्कारः स्मृतिकारणम् । स चानुभूत-विषय एव स्मृतिजननस्येष्टे । न चानुभवेन[६] निवृत्तपूर्वाव-स्थतयाऽर्थो गृहीतः । तत् कथमनुभवसमानविषयसंस्कार-जन्या स्मृतिरर्थं निवृत्तपूर्वावस्थतया विषयीकुर्यादिति ।**

**मैवम् । भवेदेतदेवं यदि संस्कारमात्रजन्यत्वं स्मृतेरभ्युप-**

१. 'प्रयोजकत्वात्' ग. २. 'बाह्येन्द्रियाधिष्ठानेन' क.पाठः ।
३. 'अङ्गीकृतं चेत् प्रामाण्यं स्मृत्यादेः का विरुद्धता' (अनु.अ-२,पा-१,अधि-२)
४. राघ.–तथात्वमिति । याथार्थ्योपयोगि यतोऽतो नेति पूर्वेणान्वयः । पृ.सं-१६८.
५. 'तस्य वस्तुनः' त. ६. 'चानुभवे' त.

गच्छामः । नचैवम् । मनोजन्या स्मृतिः । संस्कारस्तु मनसस्तदर्थसन्निकर्षरूप एव । यथा योगीन्द्रियाणां [1]योगजो धर्मः । ततश्च संस्कारसहकृतं मनोऽननुभूतामपि निवृत्त-पूर्वावस्थां विषयीकुर्वत् स्मरणं जनयेदिति को दोषः ? वर्तमानमात्रविषयाण्यपीन्द्रियाणि सहकारिसामर्थ्यात् कालान्तरसम्बन्धितामपि[2] गोचरयन्ति । यथा संस्कार-सहकृतानि सोऽयमित्यतीतवर्तमानत्वविशिष्टविषयक-प्रत्यभिज्ञासाधनानि[3] ।

प्राकृतेन्द्रियाणि [4]मनोवृत्तिज्ञानं[5] जनयन्ति । तत्र सन्निकर्ष प्रत्यक्षमित्युक्ते घटपटसन्निकर्षेऽतिव्याप्तिः । इन्द्रियसन्निकर्षः प्रत्यक्षमित्युक्ते चक्षुराकाशसन्निकर्षेऽतिव्याप्तिः । अर्थसन्निकर्ष

---

१. राघ.-योगजो धर्म इति । अतीन्द्रियार्थविषये प्रत्यासत्तिरूपस्तथेत्यर्थः । पृ.सं - १६८

२. '-सम्बन्धिनमपि' त.

३. 'न चाफलत्वं वक्तव्यं सर्वस्मृत्यनुवादयोः ।
फलवत्त्वं न चास्माभिः प्रामाण्यं हि विवक्षितम् ।
तृणादिदर्शने किञ्च फलवत्त्वं निगद्यते ।
सुखदुःखादिकं किञ्चित् स्मृतावपि हि दृश्यते ॥'

*(अनु.अ-२,पाद-१,अधि.२)*

४. राघ.-मनोवृत्तीति । मनःपरिणामरूपमित्यर्थः । यद्वा पूर्वमिन्द्रियपदेन ज्ञानेन्द्रियाणि गृह्यन्त इत्युक्तम् । तत्र साक्षिमनसोर्ज्ञानेन्द्रियत्वमुक्त्वा घ्राणादीनां तदाह- प्राकृतेन्द्रियाणीति । आत्मसमवेतं ज्ञानं जनयन्तीति न्यायमतनिरासाय मनोवृत्ती-त्युक्तम् । एवमुपयुक्तं सर्वं निरूप्याधुना पदकृत्यान्याह- तत्रेति । प्रत्यक्षलक्षणे । पृ.सं - १६८

५. 'मनोवृत्तिरूपज्ञानं' तं.

**इत्युक्ते[१] पूर्ववदतिव्याप्तिः । दुष्टार्थानां दुष्टेन्द्रियैर्वा सन्निकर्षं व्यावर्तयितुमुभयत्र निर्दोषग्रहणम् ॥**

**(भा.च.)** ननु स्मृतिरूपज्ञानसाधनत्वेन कथमस्यानुप्रमाणत्वम् ? स्मृतेरयथार्थत्वेन यथार्थज्ञानसाधनत्वाभावादिति भावेन शङ्कते- **नन्विति** ॥ **यदेति** ॥ **यदा** यस्मिन् स्मृतिकाले । **यादृशः** यस्मिन् देशे यस्मिन् काले यैः कुण्डलादिधर्मैर्विशिष्ट इत्यर्थः । **तदा** तस्मिन् काले स्मृतिकाले **असौ** स्मर्यमाणदेवदत्तादिस्**तादृशः** तद्देशकालकुण्डलादि-प्रकारैर्विशिष्टो नहीत्यर्थः । **पूर्वेति** ॥ **पूर्वायाः** अनुभवकालीनायाः । तद्देशतत्कालकुण्डलादिधर्मैर्वैशिष्ट्यरूपावस्थाया इत्यर्थः । **यत इति** ॥ यतो यस्माद् ज्ञानोत्पत्तिकाले वस्तुनो विशेष्यस्य तथात्वं ज्ञानविषयी-भूतप्रकारैः विशिष्टवेषेण सत्त्वम् । **तत्रेति** ॥ तत्र देशविशेषे **तदा** तस्मिन् कालविशेषे **तादृशः** तैः कुण्डलादिधर्मैर्विशिष्ट इति गृह्णातीत्यर्थः ॥

ननु स्मृतेरुक्तविधत्वे तदुत्पत्तिरेवायुक्तेति शङ्कते– **नन्विति** ॥ **निवृत्तपूर्वावस्थतयेति** ॥ तदा परं तादृशमिति गृह्णातीत्युक्त्या इदानीं तद्देशतत्कालादिवैशिष्ट्यरूपावस्थापगमोऽपि प्रतीयत इत्युक्तं भवति । तथा च निवृत्तपूर्वदेशकालादिवैशिष्ट्यरूपाऽवस्था यस्य स तथोक्तः । तद्भत्तयेत्यर्थः ॥

**भवेदेतदेवमिति** ॥ **एतत्** निवृत्तपूर्वावस्थतयाऽर्थं स्मृतिः कथं विषयीकुर्यादिति चोद्यम् । एवमनुभवसमानविषय एव स्मृतिजनने सामर्थ्यमित्युक्तप्रकारेण भवेत् । यदि संस्कारमात्रजन्यत्वं स्मृते-रभ्युपगच्छाम इति योजना । एवं त्वदुक्तप्रकारेण संस्कारमात्रजन्यत्वं नचेत्यर्थः ।

---

१. '-सन्निकर्षः प्रत्यक्षमित्युक्ते' त.

ननु मनसः स्मृतिकारणकत्वे[१] संस्कारजन्यत्वमेव न स्यात् । स्मर्यमाणार्थसन्निकृष्टमनसैव[२] स्मृतिजननोपपत्तेरित्यत आह– **संस्कारस्त्विति** ॥

नन्विन्द्रियार्थासम्बन्धरूपस्य संस्कारस्य कथं प्रत्यासत्तित्वमित्यत आह– **यथेति** ॥ निवृत्ता च सा पूर्वावस्था चेति विग्रहः । निवृत्तत्वेन पूर्वावस्थां विषयीकुर्वदित्यर्थः । **को दोष इति** ॥ स्मृतेर्याथार्थ्याभ्युपगमे न कोऽपि दोष इत्यर्थः ॥

[३]करणानां सहकारिविशेषसम्पत्त्या शक्तिविशेषाविर्भावः प्रसिद्ध इत्याह– **यथेति** ॥ सहजशक्त्या वर्तमानमात्रविषयाण्यपीत्यर्थः । **कालान्तरसम्बन्धिता**मतीतकालसम्बन्धितां गोचरयन्ति । अतस्तद्विषयकज्ञानं[४] जनयन्ति । **प्रत्यभिज्ञासाधनानि** इन्द्रियाणीति शेषः ।

मनसो यथार्थज्ञानसाधनत्वमुपपाद्य तदतिरिक्तप्राकृतेन्द्रियाणां यथार्थज्ञानसाधनत्वमुपपादयति– **प्राकृतेन्द्रियाणीति** ॥

*(विषयसन्निकर्षरूपव्यापारविशिष्टं निर्दुष्टमिन्द्रियं प्रत्यक्षमिति सिद्धान्तकथनं, प्रत्यक्षे चातुर्विध्यनिरूपणम् च)*

**(प्र.प.) ननु प्रत्यक्षं करणविशेषः । करणस्य चावान्तरव्यापारेण भवितव्यम्[५] । यथा [६]छिदाकरणस्य परशोर्दारुसंयोगोऽवान्तरव्यापारः ॥**

---

१.'**स्मृतिकारणत्वे**'– ख.ग.पाठः । २.'**स्मर्यमाणार्थं सन्निकर्षमनसैव**' ग.
३. '**कारणानाम्**' ग. ४. '**तद्विषयकं ज्ञानं**' ग.
५. '**भाव्यम्**' त. ६.'**छिदासाधनस्य**' त.

सत्यम् । [1]अत्रापीन्द्रियं करणधर्मि[2] । तस्यार्थसन्निकर्षोऽवान्तरव्यापारः । तत्रावान्तरव्यापारप्राधान्यविवक्षयाऽर्थेन्द्रियसन्निकर्षः प्रत्यक्षमित्युच्यते । क्वचित्तु[3] धर्मिप्राधान्यविवक्षया स्वस्वविषयसन्निकृष्टमिन्द्रियं प्रत्यक्षमित्युच्यते । स्वरूपेन्द्रियस्यापि आत्मतद्धर्मैः विशेषशक्त्या[4] सन्निकर्षोऽस्त्येव ।

ईश्वरप्रत्यक्षं लक्ष्मीप्रत्यक्षं योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति चतुर्विधं प्रत्यक्षम् । तत्राऽद्यद्वयं स्वरूपेन्द्रियात्मकमेव । उत्तरद्वयं तु द्विविधेन्द्रियात्मकम्[5] । विषयस्तु तत्तज्ज्ञानविषयवद्[6] विवेक्तव्यः ॥

**(भा.च.)** निर्दोषार्थेन्द्रियसन्निकर्षस्य प्रत्यक्षरूपानुप्रमाणत्वं न

---

१. भावचन्द्रिकारीत्या **'तत्रापि'** इति पाठः ।

२. **वेदे.–** ननु सन्निकृष्टेन्द्रियव्यापारत्वं न तत्सन्निकर्षस्य सम्भवति । आत्माश्रयप्रसङ्गादित्यत आह– करणधर्मीति । तथा च धर्मीभूतमिन्द्रियमेव करणं न तु सन्निकृष्टेन्द्रियमित्यर्थः । एवं चात्रापीन्द्रियमेव करणं विवक्षितम् । तद्धर्मभूतः सन्निकर्षोऽवान्तरव्यापारत्वेन विवक्षितोऽतो नानुपपत्तिरिति भावः । पृ.सं- १७९.

३. त. पाठे **'तु'** शब्दो नास्ति ।

४. **राघ.–** विशेषशक्त्येति । वस्तुसामर्थ्यबलेनेत्यर्थः । पदार्था एवाभिन्नाः सन्तोऽपि भेदकार्यनिर्वहणसामर्थ्योपेताः प्रमाणप्रमिता इति तादृशपदार्थसामर्थ्यमेव भेदकार्यकारितयाऽन्योन्यविशेषकत्वेन भेदप्रतिनिधिर्विशेषोऽस्ति । वस्तुषु प्रत्यक्षादिप्रमाणप्रमित इति शास्त्रे प्रतिपादित इति ज्ञेयम् । पृ.सं - १७८.

५. भावचन्द्रिकारीत्या **'द्विविधमिन्द्रियात्मकम्'** इति मूलपाठः ।

६. भावचन्द्रिकारीत्या **'तत्तद्विषयवत्'** इति मूलपाठः ।

सम्भवतीति शङ्कते- **नन्विति** ॥ **तत्रापीति**[१] ॥ प्रत्यक्षरूपकरण-विशेषेऽपि[२] । करणं च तत् धर्मि चेति विग्रहः । तथाचेन्द्रियं धर्मिरूपकरणम्[३] । कारणभूतसन्निकर्षाश्रयत्वात् । यद् धर्मिभूतं करणं तस्यैवावान्तरापेक्षा । न तु धर्मभूतकरणस्येति भावः ॥

ननु धर्मिसन्निकर्षयोः प्रत्यक्षरूपकरणविशेषत्वे इन्द्रियसन्निकर्षस्यैवेह प्रत्यक्षरूपकरणत्वेन कथने को हेतुरित्यत आह- **तत्रावान्तरव्यापार-प्राधान्यविवक्षयेति** ॥ सन्निकर्षस्य कार्यं प्रत्यन्तरङ्गत्वादिति भावः ।

तर्हि **'अदुष्टमिन्द्रियं त्वक्षम्**[४]**'** इत्यादौ इन्द्रियमेव प्रत्यक्षरूप-करणत्वेन कस्मादुच्यत इत्यत आह- **क्वचिदिति** ॥

ननु उक्तरीत्याऽर्थेन्द्रियसन्निकर्षः प्रत्यक्षं चेत् तर्हि प्रमातृस्व-रूपेन्द्रियस्य प्रमात्रादिभिः सन्निकर्षाभावात् प्रमात्रादिज्ञानस्य[५] प्रत्यक्षफलत्वं न स्यादित्यत आह- **स्वरूपेन्द्रियस्यापीति** ॥ **तद्धर्मैरिति** ॥ आत्मस्वरूपभूताः सुखेच्छादयो धर्मास्तैरित्यर्थः । **विशेषशक्त्या** भेदप्रतिनिधिविशेषसामर्थ्येन । **द्विविधम् इन्द्रियात्मकं** स्वरूपं बाह्यं चेति द्विविधम् इन्द्रियात्मकमित्यर्थः ॥

**तत्तद्विषयवदिति** ॥ तत्तज्ज्ञानविषयवदित्यर्थः । तथा चेशलक्ष्मी-योग्ययोगिज्ञानेषु यस्य यस्य ज्ञानस्य यो यो विशेषः स एव तत्तदीय-प्रत्यक्षविषय इति ज्ञातव्यमित्यर्थः । तथा बाह्येन्द्रियाणामपि यदिन्द्रिय-जन्यज्ञानस्य यो विषयः स एव तस्येन्द्रियस्यापीति द्रष्टव्यम् ॥

---

१.प्रचलितमूलपाठे **'अत्रापीति'** मूलपाठो दृश्यते ।

२.**'कारणविशेषेऽपि'** ख.ग.पाठः । ३.**'धर्मिरूपि करणम्'** ग.

४.**'-त्वक्षं तर्कोऽदुष्टस्तथाऽनुमा'** (वि.त.वि.उदा.ब्रह्मतर्कस्मृतिः,प-१.)

५.**'प्रमातृज्ञानस्य'** ग.

*(प्रकारान्तरेणेन्द्रियविभागः)*

**(प्र.प.) बाह्येन्द्रियं त्रिविधम् । दैवमासुरं मध्यममिति । तत्र [१]यथार्थज्ञानप्रचुरं दैवम्[२] । अयथार्थज्ञानप्रचुरमासुरम्[३] । समज्ञानसाधनं तु[४] मध्यमम्[५] ।**

**स्वरूपेन्द्रियमप्युत्तमानां विषयस्वरूपे प्रकारे च यथार्थमेव । अधममध्यमानां तु स्वरूपमात्रे यथार्थमेव । प्रकारे त्वयथार्थं मिश्रं चेति ।**

*(तार्किकोक्तषड्विधसन्निकर्षनिरासः)*

**[६]इन्द्रियार्थयोस्तु सन्निकर्षोऽपरोक्षज्ञानहेतुः षोढा भिद्यत इत्येके । तद्यथा । संयोगः, संयुक्तसमवायः, संयुक्तसमवेत-समवायः, समवायः, समवेतसमवायो विशेषणविशेष्य-भावश्चेति । तत्र चक्षुःस्पर्शनयोः घटादिद्रव्यैर्मनसश्चाऽत्मना**

---

१. राघ.– यथार्थज्ञानप्रचुरमिति । बाहुल्येन यथार्थज्ञानजनकमित्यर्थः । पृ.सं- १८२.
**श्रीनि.**– यथार्थज्ञानप्रचुरमिति । ऋजुज्ञाने स्वविरोध्यल्पत्वाभावेऽपि रवेः प्रचुरप्रकाशवद्यथार्थप्राचुर्यं द्रष्टव्यम् । पृ.सं- १८५.

२.स्वाधिकरणायथार्थज्ञानविषयगतसङ्ख्यापेक्षयाऽधिकसङ्ख्यावद्वस्तुविषयकयथार्थ-ज्ञानजनकत्वं दैवप्रत्यक्षत्वम् ।

३.स्वसमानाधिकरणयथार्थज्ञानविषयगतसङ्ख्याधिकसङ्ख्यावद्वस्तुविषयका-यथार्थज्ञानजनकत्वमासुरप्रत्यक्षत्वम् ।

४. त. पाठे 'तु' शब्दो नास्ति ।

५. स्वसमानाधिकरणसङ्ख्यावद्वस्तुविषयकसमज्ञानसाधनत्वं मध्यमप्रत्यक्षत्वम् इति त्रिविधप्रत्यक्षलक्षणपरिष्कारः ।

६.'**इन्द्रियार्थसन्निकर्षो**-' त.

**संयोगः[१] । तेषां स्वविषयगतगुणकर्मसामान्यैः संयुक्त-समवायः । तथा घ्राणरसनयोर्गन्धरसाभ्याम् । एतेषां स्व-विषयगुणकर्मगतसामान्यैः संयुक्तसमवेतसमवायः ।**

**श्रोत्रस्य शब्देन समवायः । तद्गतसामान्यैः समवेतसमवायः । [२]एतेषामेतत्पञ्चविधसम्बन्धसम्बद्धार्थस्थाभावसमवायाभ्यां पञ्चविधो विशेषणविशेष्यभाव इति ।**

**तदसत् । गुणादीनां गुण्यादिभिरभेदेन[३] समवायाभावात् । आत्मनस्तद्धर्माणां च साक्षिविषयत्वेन मनोविषयत्वा-भावात् । वर्णात्मकस्य शब्दस्य द्रव्यत्वेनाऽऽकाशविशेष-गुणत्वाभावात्[४] । अतः सर्वेन्द्रियाणां स्वस्वविषयैः स्वस्वविषयप्रतियोगिकाभावेन च साक्षादेव रश्मिद्वारा सन्निकर्षः ॥**

**(भा.च.) दैवमिति** ॥ अत्र देवपदं मुक्तियोग्यमात्रपरम् । तत्सम्बन्धि दैवम् **'विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः'** इति वाक्य इव ॥ **तत्रेति** ॥ प्रचुरं यथार्थज्ञानं यस्येति विग्रहः । सम्बन्धस्तु करणत्वरूपः । तथा च प्रचुरयथार्थज्ञानकरणप्रत्यक्षत्वं (दैव) प्रत्यक्षस्य लक्षणमिति भावः । एवम् उत्तरत्रापि ज्ञातव्यम् । स्वरूपे स्वस्वविषयस्वरूपे ॥

**प्रकारे त्विति** ॥ अधमानां स्वरूपप्रत्यक्षमयथार्थम् । मध्यमानां तु मिश्रमिति यथायोग्यं सम्बन्धः । इन्द्रियाणां स्वस्वविषयैः साक्षादेव

---

१. **'सह संयोगः'** त.
२. **'एतेषां चैतत्-'** त.
३. **'गुण्यादेरभेदेन'** प.
४. **'-भावाच्च'** त.

सम्बन्ध इति वक्तुं साक्षात्परम्पराभेदेन सम्बन्धषाड्विध्यं दूषयितुमनुवदति – **इन्द्रियार्थयोस्त्वित्यादिना** ॥ संयोग इत्यनन्तरं सन्निकर्षपदानुकर्षः । एवं तत्सम्बन्धस्थले सन्निकर्षपदानुकर्षो द्रष्टव्यः ॥

संयुक्तसमवायस्य स्थलान्तरं चाऽऽह– **तथेति** ॥ एतेषामिन्द्रियाणाम् एते च ते संयोगादिरूपपञ्चविधसम्बन्धास्त एतत्पञ्चविधसम्बन्धास्तैः सम्बद्धा[१] अर्थाः, तेषु गृह्यमाणाभ्यामभावसमवायाभ्यां संयुक्तविशेषणत्वादिरूपेण पञ्चविधो विशेषण-विशेष्यभावश्चेत्यर्थः । **गुणत्वाभावादिति** ॥ तथा च शब्दाकाशयोः समवायो न युक्त इति भावः । भिन्नदेशस्थयोर्विषयेन्द्रिययोः कथं साक्षादेव सन्निकर्ष इत्यत उक्तम्– **रश्मिद्वारेति** ॥

*(नैयायिकोक्तनिर्विकल्पकप्रत्यक्षनिराकरणम्)*

**(प्र.प.) निर्विकल्पकसविकल्पकभेदेन द्विविधं प्रत्यक्षमित्याचक्षते[२] । तत्र [३]वस्तुस्वरूपमात्रावभासकं निर्विकल्पकम् । विशिष्टाकारगोचरं सविकल्पकम् ।**

**तदष्टविधम् । तत्र द्रव्यविकल्पो यथा दण्डीति ।**

**गुणविकल्पो यथा शुक्ल इति ।**

**क्रियाविकल्पो यथा गच्छतीति ।**

**जातिविकल्पो यथा गौरिति ।**

**विशेषविकल्पो यथा विशिष्टः परमाणुरिति ।**

---

१. '**संयोगादिरूपपञ्चविधसम्बन्धाध्यस्तैतत्पञ्चविधसम्बन्धास्तैः सम्बद्धाः**' -क.ग.

२. **राघ.**– आचक्षत इति । तार्किकाः । तत्र तयोर्मध्ये । वस्तुमात्रेति । गुणगुण्यादिसम्बन्धमगृहीत्वा द्रव्यस्वरूपं गुणकर्मादिस्वरूपमात्रं वा गृह्णाति यज्ज्ञानं तदित्यर्थः । पृ.सं - १८८.

३. '**स्वरूपमात्रा-**' त.

समवायविकल्पो यथा पटसमवायवन्तस्तन्तव इति ।
नामविकल्पो यथा देवदत्त इति ।
अभावविकल्पो यथा घटाभाववद्भूतलमिति ।

एतदप्यसत् । विशेषसमवाययोरप्रामाणिकत्वात् । नाम्नः पश्चात् स्मरणेनाभावस्य च [1]प्रतियोगिस्मरणाधीनज्ञानत्वेन तद्विकल्पस्य [2]प्रथमाक्षिसन्निकर्षानन्तरमेवोत्पत्त्यभावेऽपि द्रव्यादिविकल्पानां प्रथममेवोत्पत्तौ बाधकाभावेन निर्विकल्पकानुपपत्तेः ॥

*(अपरोक्षप्रमाफलनिरूपणम्)*

हानोपादानोपेक्षाबुद्धयः प्रत्यक्षस्य फलमिति केचिदाहुः । तदप्यसत् । तासामनुमानफलत्वात् । तथा हि । कण्टकादिस्वरूपमात्रं[3] प्रदर्श्य प्रत्यक्षं निवर्तते । अथेदानीं पूर्वानुभूतस्य कण्टकादेरनिष्टसाधनत्वमनुभूतं स्मृत्वाऽस्य च कण्टकादित्वेन तदनुमिमानस्य हानबुद्धिरुपजायते ।

एवं कदलीफलादाविष्टसाधनत्वानुमानानन्तरमुपादानबुद्धिरुत्पद्यते । तृणादौ चौदासीन्यमनुमायोपेक्षाबुद्धिः प्रतिपद्यते । अतो विशिष्टविषयसाक्षात्कार एव प्रत्यक्षस्य फलमिति ॥

॥ इति श्रीमज्जयतीर्थपूज्यचरणविरचितप्रमाणपद्धतौ
प्रत्यक्षपरिच्छेदः समाप्तः ॥ १ ॥

---

१.'प्रतियोगिज्ञानाधीन-' त. २. 'प्रथमाक्ष-' त.
३.'-स्वरूपं प्रदर्श्य' त.

**(भा.च.) द्विविधं प्रत्यक्षमिति** ॥ अपरोक्षप्रमा द्विविधेत्याचक्षत इत्यर्थः । **वस्तुस्वरूपमात्रावभासकमिति** ॥ मात्रशब्देन विशेषण-विशेष्यभावादिसम्बन्धो व्यावर्त्यते । **विशेषसमवाययोरिति** ॥ अत्र विशेषशब्देन नित्यद्रव्यमात्रवृत्तित्वेन पराभ्युपगतो विशेषो गृह्यते ॥ **द्रव्यादिविकल्पानामिति** ॥ चतुर्णां द्रव्यगुणक्रियाजातिविकल्पा-नामित्यर्थः । अष्टसु विकल्पेषु विशेषसमवायविकल्पयोरनङ्गीकारेणैव दूषितत्वात् । नामसविकल्पकाभावसविकल्पकयोः प्रथमाक्षिसन्निकर्षा-नन्तरमनुत्पत्तिकथनात् ॥

तथा च विशिष्टज्ञानस्य विशेषणज्ञानसाध्यत्वनियमेति[१] विशेषण-ज्ञानतया निर्विकल्पकमङ्गीकर्तव्यम् । दण्डीत्यादिविशिष्टज्ञानं तु विशेषणविशेष्योभयसन्निकर्षजन्यमेव । तर्हि घटाद्यभाववति भूतले भूतलाभावाभ्यां[२] युगपदेव सन्निकर्षस्य सत्त्वाद् घटाद्यभाववैशिष्ट्यं नियमेन प्रथमं गृह्येतेति चेद्, न गृह्यत इत्येवोत्तरम् ॥

अभावस्य प्रतियोगिज्ञानाधीनज्ञानत्वेनाभावसविकल्पके विशेषण-विशेष्योभयसन्निकर्षातिरिक्तप्रतियोगिस्मरणलक्षणकारणान्तरा-पेक्षणात्[३] । तथा च भूतलाभावाभ्यां[४] सन्निकर्षे सत्यपि प्राथमिकाक्ष-सन्निकर्षानन्तरं भूतलमात्रं[५] गृह्यते । ततः परं घटोऽस्ति नवेति विमर्शे सति प्रतियोगिस्मरणसद्भावाद् भूतले[६] घटाभावज्ञानं जायते । तच्चाऽनुमानिकमेव ॥

---

१. **'नियमेन'** इति पाठः स्वरसः । २.**'भूतळे भूतळाभावाभ्यां'**ग.पाठः
३.**'प्रकारान्तरानपेक्षणात्'** क.ग.पाठः । ४.**'भूतळाभावाभ्यां '** ग.पाठः ।
५.**'भूतळमात्रं'** ग.पाठः । ६.**'भूतळे'** ग. पाठः ।

यत्राधिकरणाभावाभ्यां सन्निकर्षात् प्रागेवात्र घटोऽस्ति नवेति विमर्शस्तत्र प्रतियोगिस्मरणसहितभूतलाभावसन्निकृष्टेन्द्रियेण[१] प्रथममेव 'घटाभाववद् [२]भूतलम्' इति ज्ञानं जायत इत्यभिप्रेत्य [३]**प्रथमाक्ष-सन्निकर्षानन्तरमेवोत्पत्त्यभावेऽपीत्युक्तम्** । तथा च [४]**प्रथमाक्ष-सन्निकर्षानन्तरमेव** नियमेन [५]प्रथमाक्षसन्निकर्षानन्तरमित्यर्थः ।

नामसविकल्पकस्थले[६] तु विशेष्येण देवदत्तेन विशेषणेन नाम्ना युगपत् सन्निकर्ष एव नास्ति विशेषणांशे नामस्मृतेरेव सन्निकर्षत्वात् । नामस्मृतिस्तु देवदत्तेन्द्रिययोः प्राथमिकसन्निकर्षानन्तरं देवदत्तज्ञाने जाते तदनन्तरमेव जायते । सम्बन्धिदर्शनात् सम्बन्ध्यन्तरे स्मृतिरुत्पद्यत इति न्यायात् ॥

अत एव नामसविकल्पकस्थले [७]युगपद्विशेषणविशेष्यसन्निकर्ष एव नास्तीति वक्तुं नाम्नः पश्चात् स्मरणेनेत्युक्तम् । यदा तु दूरगतपुत्रादौ नामानुस्मृतिकाल एव पुत्रागमनं तदा पुत्राक्षयोः प्रथमसन्निकर्षकाल एव विशेषणसन्निकर्षस्यापि सत्त्वात् प्रथममेव नामसविकल्पकं जायत इति [८]प्रथमाक्षिसन्निकर्षानन्तरमेवेति नियमपक्ष एव निराकृत इति ॥

---

१. **'भूतळाभावसन्निकृष्टेन्द्रियेण'** ग.पाठः

२. **'भूतळम्'** ग. पाठः

३. **'प्रथमाक्षि'** ग. पाठः

४. **'प्रथमाक्षि'** ग. पाठः

५. **'प्रथमाक्षि'** ग. पाठः

६. **'-स्थळे'** ग. पाठः

७. **'-स्थळे'** ग. पाठः

८. **'प्रथमाक्ष-'** ग. पाठः

**प्रत्यक्षफलमिति** ॥ सविकल्पकरूपापरोक्षप्रमाफलमाचक्षत इत्यर्थः ।

हानोपादानोपेक्षाबुद्धीनामनिष्टसाधनत्वेनेष्टसाधनत्वतदुभयाभाव-गोचरज्ञानसाध्यत्वाद् अनिष्टसाधनत्वादीनामानुमानिकत्वाद्धानादिबुद्धी-नामनुमितिफलत्वमेव; न तु सविकल्पकरूपापरोक्षप्रमाफलत्वमित्याह- **हानोपादानोपेक्षाबुद्धय इत्यादिना** ॥ **अनुमानफलत्वादिति** ॥ अनुमिति-फलत्वादित्यर्थः । **औदासीन्यम्** इष्टसाधनत्वानिष्टसाधनत्वयोरभावम् ॥

**॥ इति श्रीमद्रामचन्द्रतीर्थपूज्यपादानां शिष्येण उपेन्द्रभट्टसूनुना वानिवालनरसिंहेन[1] कृतायां प्रमाणपद्धतिवाक्यविवृतौ भावचन्द्रिकायां प्रथमपरिच्छेदः ॥**

**॥ श्रीकृष्णाय मङ्गलम् ॥**

**॥ श्रीरस्तु ॥**

---

१.'वानिवालनृसिंहेन' ग. पाठः ।

## अथ अनुमानपरिच्छेदः

*(अनुमानलक्षणम्)*

**(प्र.प.) [1]निर्दोषोपपत्तिरनुमानम् । उपपत्तिर्व्याप्यं युक्तिर्लिङ्गमिति पर्यायः । अविनाभावो व्याप्तिः । [2]साहचर्य-नियम इति यावत् । [3]व्याप्तेः कर्म व्याप्यम् । तस्याः कर्तृ व्यापकम् । यथा धूमस्याग्निना व्याप्तिरव्यभिचरितः सम्बन्धः । यत्र धूमस्तत्राग्निरिति नियमात् । तत्र धूमो व्याप्यः । अग्निर्व्यापकः ॥**

---

१. **जना.–** निर्दोषेति । बाधादिदोषरहितेत्यर्थः । उपपत्तिर्व्याप्यमित्यर्थः । एवं च निर्दोषपदं बाधितसाध्यके स्वरूपासिद्धे च ह्रदो वह्निमान् धूमादित्यादावतिव्याप्तिवारणाय । उपपत्तिपदं तु प्रत्यक्षादावतिव्याप्तिवारणाय । निर्दोषपदेन स्वोचितदोषरहितत्वस्य विवक्षितत्वात् । **पृ.सं- १९५.**

२. **वेद.–** साहचर्येति । अत्र साहचर्यं स्वदेशकालविशेषगतस्य हेतोः स्वदेशकालविशेषगतेन साध्येन सम्बन्धमात्रं विवक्षितम् । न तु सामानाधिकरण्यमेव । अधोदेशे नदीपूरादावव्याप्तेः । सम्बन्धमात्रं तु तत्राप्यस्ति । वृष्टिमदूर्ध्वदेशनिरूपिताधोदेशगतत्वात् पूरस्य । एवमन्यत्रापि कृत्तिकोदयादौ हेतुसाध्यसम्बन्धमात्रमुपपादनीयम् । असतश्चोक्तरूपत्वाभावान्नातिव्याप्तिः । व्यभिचारिसम्बन्धव्यावर्तनाय नियम इत्युक्तम् । नन्वेवं नियमस्य व्याप्तिरूपतयाऽऽत्माश्रय इति चेन्न । नियमपदेनाव्यभिचारस्य विवक्षितत्वात् । तथा चाव्यभिचरितसाध्यसम्बन्धो व्याप्तिरित्युक्तं भवति । **पृ.सं- १९८.**

३. **राघ.–** इदानीं व्याप्यस्वरूपमाह ॥ व्याप्तेः कर्मेति । व्याप्तिर्नाम व्यापनक्रिया तां प्रति कर्मकारकं यत्तद्व्याप्यते कात्स्न्र्येन सम्बध्यतेऽनेनेति व्युत्पत्त्या व्याप्यमित्यर्थः ॥ कर्तृ व्यापकमिति । व्याप्नोति कात्स्न्र्येन सम्बध्नातीति व्यापकम् । **पृ.सं- १९७.**

चतुष्टयी खलु धर्माणां गतिः[1]। केचित् समवृत्तयो यथा निषिद्धत्वपापसाधनत्वे। यत्र निषिद्धत्वं तत्र पापसाधनत्वं, यत्र पापसाधनत्वं तत्र निषिद्धत्वमिति नियमात्। तत्र द्वयोरप्यन्योन्यं व्याप्यव्यापकभावः[2]॥

केचिन्न्यूनाधिकवृत्तयः। यथा धूमवत्त्वाग्निमत्त्वे। तत्र न्यून-वृत्तिधूमवत्त्वं व्याप्यमेव। अधिकवृत्त्यग्निमत्त्वं व्यापकमेव।

केचित् परस्परपरिहारेणैव वर्तन्ते। यथा गोत्वाश्वत्वे। यतो यत्र गोत्वं न तत्र सर्वथाऽश्वत्वम्। यत्र चाश्वत्वं न तत्र सर्वथा गोत्वम्। तेषां नान्योन्यं व्याप्यव्यापकभावः। सम्बन्ध-स्यैवाभावात्॥

केचित् क्वचित् समाविष्टा अपि क्वचित् परस्परपरिहारेणैव वर्तन्ते। यथा पाचकत्वपुरुषत्वे। तयोः पुरुषविशेषे समावेशेऽपि पाचकत्वं पुरुषत्वपरिहारेण[3] स्त्रीषु वर्तते। पुरुषत्वमपि [4]पाचकत्वपरिहारेणापचति पुरुषे वर्तते। तेऽपि नान्योन्यं व्याप्यव्यापकभाववन्तः। सत्यपि सम्बन्धे परस्पर-व्यभिचारित्वात्॥

तत्र व्याप्यो धर्मो व्यापकप्रमितिसाधनं भवन्ननुमानमित्युच्यते। व्यापकश्चानुमेय इति[5]॥

---

१. 'अस्ति' इत्यधिकः पाठः, च. पुस्तके॥
२. '-न्योन्यव्यापकभावः' त.
३. 'पुरुषत्वं विहाय' त.
४. 'पाचकत्वं विहायापचति' त.
५. 'इत्युच्यते' त.

**(भा.च.)** ॥ श्रीरस्तु[1] ॥ अनुमानं लक्षयति - **निर्दोषेति** ॥ उपपत्तिशब्दार्थजिज्ञासायामाह- **उपपत्तिरिति** ॥ ननु उपपत्ति-शब्दार्थकथनाय उपपत्तिर्व्याप्यमित्येव[2] वक्तव्यम् । नतु युक्ति-लिङ्गशब्दयोः पर्यायत्वं वक्तव्यम्[3] इति चेद् उच्यते । उपपत्ति-र्व्याप्यमित्येव कथने तु भगवत्पादैः **'अनुमा युक्तिरेवोक्ता'** इत्यनुव्याख्याने युक्तेरेवानुमानत्वोक्तेर्मिथ्यात्वानुमानं[4] ॥

न च निर्दोषस्वस्वविषयसन्निकृष्टेन्द्रियाणामपि निर्दोषत्वे सति स्वस्वविषयव्याप्यत्वस्य सत्त्वादतिव्याप्तिरिति वाच्यम् । निर्दोष-व्याप्त्याऽर्थगमकमनुमानमिति विवक्षितत्वात् । नहि स्वस्वविषय-सन्निकृष्टेन्द्रियाणां व्याप्तिमपेक्ष्यार्थगमकत्वम् ॥

एवमपि स्वरूपसत्या व्याप्त्याऽर्थगमकत्वस्यानुमाने कुत्राप्यभावा-न्निर्दोषग्रहणम् । निर्दोषग्रहणेन व्याप्त्याद्यननुसन्धानलक्षणदोषराहित्य -स्यापि विवक्षितत्वात् । तथा च प्रमितया व्याप्त्या समुचितदेश-वृत्तित्वज्ञानेन चार्थगमकत्वमनुमानलक्षणमित्युक्तं भवति ॥

ननु साध्येन विना साधनस्याभावो ह्यविनाभावशब्दार्थः । स च साध्यापेक्षया समानाधिकरणव्यधिकरणहेतुसाधारणः । अयं चाविना-भावोऽव्यभिचरितसाध्यसामानाधिकरण्यरूपव्याप्त्यर्थकसाहचर्य-नियमशब्दार्थतया कथमुच्यत इति चेद्, उच्यते ॥

१. **'शुभमस्तु'**– क.पाठः । २.**'इत्येवं'** – क.पाठः ।

३.**'वक्तव्यम्'**– *इति क.पाठे नास्ति ।*

४. *इत्येतावानेव सर्वमातृकापाठः । इतः परं* **'मिथ्यात्वानुमानखण्डने च लिङ्गं हेतुरिति चोक्तेर्विरोधः स्यात् । तदविरोधाय युक्तिलिङ्गयोः पर्यायत्वमुक्तम्'** *इति पाठः स्वरस इति भाति ।*

यद्देशकालीनेन येन विना यद्देशकालीनस्य यस्यानुपपत्तिः सैव व्याप्तिः । न तु सामानाधिकरण्यगर्भिणी । तस्या व्यधिकरण-स्थलेऽभावात्[१] । अविनाभावरूपा तु सामानाधिकरण्यगर्भव्याप्ति-स्थलेऽप्यनुगता । न केवलमनुगता । किन्तु[२] सामाधिकरण्यगर्भव्याप्ति-वाचकशब्दार्थान्तरगता चेति भावेनाऽह- **नियम इति यावदिति** ॥ साहचर्यनियम इत्यत्र नियमशब्दस्य **यावत्** = यावानर्थः स एवाविनाभावशब्दस्याप्यर्थ इत्यर्थः ॥

व्याप्तिरूपार्थस्य व्याप्यव्यापकोभयसापेक्षत्वाद् व्याप्यव्यापक-शब्दार्थमाह- **व्याप्तेः कर्मेति** ॥ **'आप्लृ व्याप्तौ'** इति धातुव्याख्यानाद् व्याप्तिरूपधात्वर्थलक्षणक्रियापेक्षया यत् कर्म तद् व्याप्यमित्यर्थः । विपूर्वाद् व्याप्त्यर्थकाद् आप् इति धातोः कर्मणि यत्प्रत्यये यणादेशे **'अनचि च'** (पा.सू-८-४-४७)इति द्वित्वे च निष्पन्नं व्याप्यमिति शब्दरूपं व्याप्तिकर्मत्वार्थकमिति भावः । **तस्या इति** ॥ तथा च विपूर्वाद् आप् इति धातोः कर्तरि णुल्प्रत्यये **'युवोरनाकौ'** (पा.सू- ७-१-१) इत्यकादेशे पूर्ववद् यणादेशे च निष्पन्नं व्यापकमिति शब्दरूपं व्याप्तिकर्तृत्वार्थकमिति भावः ॥

वह्निः धूमत्वावच्छिन्नं धूमं सम्बध्नातीतिवद् धूमः वह्नित्वावच्छिन्नं सर्वं सम्बध्नातीत्यस्यासम्भवात् । व्याप्त्यपेक्षया कर्तृकर्मभावस्तूक्तरीत्या नियम इति ज्ञेयम् । व्याप्तिरविनाभाव इत्युक्त्वा साहचर्यनियम इति

---

१. *'ऊर्ध्वदेशः वृष्टिमान् अधोदेशे नदीपूरात्' इत्यादावित्यर्थः । न ह्यत्र हेतुसाध्ययोः सामानाधिकरण्यमस्ति । किन्तु सम्बन्धमात्रम् । वृष्टिमदूर्ध्वदेशनिरूपिताधोदेशगतत्वं नदीपूररूपहेतोः विद्यमानः सम्बन्धः ।*

२. **'सामानाधिकरण्य'** *इत्यारभ्य 'किन्तु' पर्यन्तो भागः क.पाठे नास्ति ।*

यावदित्यनेन प्रसङ्गादुक्तामव्यभिचरितसामानाधिकरण्यरूपां व्याप्तिं धूमनिष्ठतया दर्शयति- **धूमस्येति** ॥ धूमनिष्ठा अग्निनिरूपिता व्याप्तिरव्यभिचरितः सम्बन्धः । साध्याभाववदवृत्तित्वे सति साध्यवद्वृत्तित्वलक्षणसम्बन्धरूप इत्यर्थः ।

सामानाधिकरण्यगर्भव्याप्तिनिरूपणस्य [१]धर्मचातुर्विध्यनिरूपणाधीनत्वात् तदर्थं धर्माणां चातुर्विध्यं निरूपयति- **चतुष्टयी खल्वित्यादिना** ॥ **गतिः** स्थितिः । **तेषामिति** ॥ परस्परपरिहारेण वर्तमानधर्मेषु कुत्रापि व्याप्यव्यापकभावो नेति[२] निषेधस्तु सामानाधिकरण्यगर्भव्याप्तिमपेक्ष्येति ज्ञेयम् । परस्परपरिहारेण वर्तमानयोरप्यूर्ध्वदेशीयवृष्ट्यधोदेशीयनदीपूरयोर्व्याप्यव्यापकभावस्य सत्त्वादिति । **पुरुषविशेषे** पाचकपुरुषे । **अपचति** पाकाकर्तरि ।

ननूक्तरीत्या व्याप्तिरूपक्रियायाः व्याप्यव्यापकोभयसापेक्षत्वाविशेषे व्याप्यमनुमानमिति कस्मादुच्यत इत्यत आह– **तत्रेति** ॥ तथा च व्याप्त्याऽर्थगमकत्वलक्षणस्य व्याप्यत्वात्[३] तदनुमानमित्युच्यत इति भावः ।

नन्वनुमेयप्रमितिसाधनं ह्यनुमानम् । व्यापकप्रमितिसाधनस्य कथमनुमानत्वमित्यत आह- **व्यापकश्चेति** ॥

*(व्याप्तिस्मरणं व्याप्यज्ञानं वाऽनुमितिसामग्रीत्युपपादनम्)*

**(प्र.प.) ननु पर्वते वर्तमानो धूमो गृहान्तर्वर्तिनः पुरुषस्य[४] किमित्यग्निप्रमां न जनयति ? उच्यते । न प्रत्यक्ष-**

---

१. 'धर्माचातु-' ख.
२. 'व्याप्यव्यापकभावे नेति' ख.
३. 'व्याप्यतात्वात्' ख.
४. 'पुंसः' त.

वदनुमानमज्ञातकरणम्[१] । किन्तु सम्यग्ज्ञातमेव । तथाऽपि नारिकेलद्वीपवासिनो देशान्तरं गतस्य[२] धूमप्रमितावपि कस्मान्नाग्निप्रमोदयः ?

उच्यते । तस्य [३]धूमस्वरूपज्ञानेऽप्यग्निव्याप्ततया तज्ज्ञानाभावात् । ज्ञातव्याप्तिकस्यापि कुतः कदाचिदग्निप्रमाऽनुत्पत्तिः[४] । व्याप्तिस्मरणाभावात् । व्याप्तिस्मरणवतः पर्वते धूमं दृष्टवतोऽपि कथं पर्वतादन्यत्राग्निप्रमाऽनुद्भवः । व्याप्तिप्रकारमपेक्ष्य लिङ्गज्ञानस्य लिङ्गिज्ञानजनकत्वनियमात् ।

तथाहि । कयोश्चित् समानदेशकालयोर्व्याप्तिः । यथा रसस्य रूपेण[५] । कयोश्चित् समानदेशत्वेऽपि भिन्नकालयोः । यथा धूमस्याग्निना । कयोश्चित् समानकालत्वेऽपि भिन्नदेशयोः । यथा [६]कृत्तिकोदयस्य रोहिण्युदयासत्त्या[७] । कयोश्चिद् भिन्नदेशकालयोः । यथाऽधोदेशे नदीपूरस्योर्ध्वदेशवृष्ट्या ।

कस्यचित् कादाचित्कस्य समानदेशत्वेऽपि सार्वकालीनेन । यथा पतनस्य गुरुत्वेन । कस्यचित् समानदेशत्वेऽपि सार्वकालिकस्य कादाचित्केन । यथा शरीरत्वस्य

---

१.'अज्ञातं करणम्' त. २.'देशान्तरगतस्य' त.

३.'धूमस्वरूपे ज्ञातेऽप्य-' त. ४.'-प्रमाऽनुद्भवः' त.

५.*यत्र रसस्तत्र रूपम्, यदा रसस्तदा रूपमिति पृथिवीजलयोः व्याप्तिः ।*

६. जना.– यथा कृत्तिकेति । कृत्तिकोदयस्य रोहिण्युदयेन समानकालत्वाभावादासत्तिग्रहणम् । आसत्तिर्नाम सन्निधिः । पृ.सं- २२२.

७.*यदा कृत्तिकोदयः, तदा रोहिण्युदयसान्निध्यम् इति समानकालिकयोर्व्याप्तिः ।*

विनाशेन[१] । कस्यचित् प्रदेशवर्तिनो व्याप्यवर्तिना । यथा संयोगस्य द्रव्यत्वेन[२] ।

कस्यचिद् व्याप्यवर्तिनः प्रदेशवर्तिना । यथा रूपस्य संयोगेन[३] । कयोश्चिदेकावयवविवर्तिनोरप्यवयवभेदेन । यथा तुलोन्नमनावनमनयोरित्यादि ।

तथा च व्याप्तिज्ञानतत्स्मरणसहितं लिङ्गस्य सम्यग्ज्ञानं सम्यग्ज्ञातं वा लिङ्गं व्याप्तिप्रकारानुसारेण समुचितदेशादौ लिङ्गिप्रमां जनयदनुमानमित्युक्तं भवति ।

अत एव लिङ्गिस्वरूपस्य ज्ञातत्वेऽपि देशविशेषादिसंसृष्टतया ज्ञापकत्वान्नानुमानस्य [४]वैयर्थ्यम् । [५]ततश्चानुमानस्य द्वयं सामर्थ्यम् । व्याप्तिः समुचितदेशादौ सिद्धिश्चेति । न तु पक्षधर्मतानियमः ॥

---

१. *यच्छरीरं तद्विनाशीति व्याप्तिः ।*

२. *यत्र संयोगस्तत्र द्रव्यत्वमिति व्याप्तिः ।*

३. *'यत्र रूपं तत्र संयोगः' इति पृथिव्यादित्रिषु व्याप्तेः ।*

४. **'वैफल्यम्'** त.

५. **वेदे.** – ततश्चेति । नन्वधोदेशगतनदीपूरकत्वादित्यादिप्रयोगेण सर्वत्र पक्षधर्मता सम्पादयितुं शक्या । अतः कथं तदनियम इति चेत् । किमेवं प्रयोगविपरिणामो लौकिकरीतिमाश्रित्योत स्वक्रियासंरक्षणार्थः । नाऽद्यः । लौकिका ह्यूर्ध्वदेशे वृष्टिः कुत इति पृष्टा अधोदेशे नदीपूरादित्येव वदन्ति । न द्वितीयः । सिद्धे प्रयोगपरिणामे व्यभिचाराभावेन प्रक्रियाप्रामाण्यसिद्धिस्तत्सिद्धौ च प्रयोगपरिणामसिद्धिरित्यन्योन्याश्रयात् । **पृ.सं- २२५.**

**(भा.च.)** यदुक्तं निर्दोषं व्याप्यमनुमानमित्यत्र निर्दोषग्रहणेन व्याप्त्याद्यननुसन्धानलक्षणदोषराहित्यं विवक्षित्वा व्याप्त्यादिज्ञान-स्यानुमितिसाधनत्वं तदुपपादयितुं शङ्कामुत्थापयति – **नन्विति** ॥ तत्र समुचितदेशे लिङ्गज्ञानस्य करणत्वमुपपादयति- **उच्यत** इत्यादिना ॥ **सम्यगिति** ॥ धूलीपटले धूमभ्रमे सति वह्निप्रमानुदयात् सम्यगि-त्युक्तम् । कदाचिद् विस्मरणदशायां **व्याप्तिप्रकारमपेक्ष्येति** ॥ [१]अविनाभावरूपायाः व्याप्तेः प्रकारं स्वरूपविशेषरूपं प्रकारम-पेक्ष्येत्यर्थः ॥

ननु पर्वतादन्यत्राग्निप्रमानुद्भवः कुत इति शङ्कायां व्याप्ति-प्रकारमपेक्ष्येति न वक्तव्यम् । किन्तु पक्षधर्मताप्रकारमपेक्ष्येत्येव । अत एवोक्तं– पक्षधर्मताबलात् पक्षीयत्वविशेषः सिध्यतीति ॥

व्याप्यो धर्मः स्वाश्रय एव व्यापकमनुमापयतीत्युक्तेऽनुमेयस्य देशविशेषनियमसम्भवेन पर्वतादन्यत्राग्निप्रमानुद्भवः कुत इति शङ्कानवकाशादिति चेत्, उच्यते ॥

नोक्तरीत्या अनुमेयस्य देशविशेषनियमसिद्धिः । अधोदेशस्थ-नदीपूरेणोर्ध्वदेशस्थवृष्ट्यनुमित्यभावप्रसङ्गात् ॥ अव्याप्यवृत्तिसंयोगेन व्याप्यवृत्तिद्रव्यत्वाद्यसिद्धिप्रसङ्गाच्च । तथा चानुमेयस्य देशविशेष-नियमसिद्ध्यर्थमविनाभावरूपव्याप्तेः प्रकार एवापेक्षणीयः ॥

तथा हि । धूमनिष्ठा वह्निव्याप्तिः यादृशेन धूमात् पूर्वकालीनेन

१. **'अविनाभाव-'** *इत्यत आरभ्य* **'व्याप्तिप्रकारमपेक्ष्येति'** *इत्येतावान् भागः क. पुस्तके नास्ति ।*

धूमसमानाधिकरणेन च वह्निना विनाऽनुपपत्तिरूपा[१] तादृशव्याप्ति-स्वरूपमपेक्ष्य वह्न्यनुमितिजनको धूमः स्वापेक्षया पूर्वभाविनं स्वसमानाधिकरणमेव वह्निमनुमापयति । एवमधोदेशनदीप्रवाहगता व्याप्तिः नदीपूरापेक्षया यादृशेन पूर्वदेशीयकालीनामेव वृष्टिम्[२] अनुमापयतीति देशादिनियमेन अनुमेयप्रवृत्त्युपपत्तेः[३] प्रकार एवानुसर्तव्य इति भावः ॥

व्याप्तिप्रकारमपेक्ष्यैव लिङ्गस्य लिङ्गिज्ञानजनकत्वपक्षे कथं देशविशेष एवानुमेयप्रमितिरित्याशङ्क्य तदुपपादनाय अविनाभावरूपव्याप्तिः[४] बहुप्रकारा[५] इत्याह– **तथाहीत्यादिना** ॥ समानौ देशकालौ ययो-रित्यर्थः । **भिन्नकालयोरिति** ॥ यद्यपि धूमादधिकदेशवर्तिनो वह्नेर्धूमसमानदेशवत्त्ववद् धूमसमानकालत्वमप्यस्ति । तथाऽपि भिन्न-कालत्वेन ग्रहणं तु धूमनिष्ठाविनाभावरूपव्याप्तेर्धूमपूर्वकालीनेन धूम-समानाधिकरणेन च वह्निना विना अनुपपत्तिरूपत्वाद् व्याप्ति-प्रकारविशेषकथनार्थमिति ज्ञेयम् ॥

एवमुत्तरत्रापि देशकालादिविशेषग्रहणं व्याप्तिप्रकारविशेषनिरूपणेना-नुमेयवैचित्र्यसिद्ध्यर्थमिति ज्ञेयम् । **आसत्त्या** प्रसक्त्या । **कादाचित्कस्य** अयावद्द्रव्यभाविनः । **सार्वकालीनेन** यावद्द्रव्यभाविना । अवयवभेदेन

---

१. **'अनुत्पत्तिरूपा'** – क. ख.
२. **'-कालीनवृष्टिं-'** – क.
३. **'-प्रमित्युपपत्तेः'** – क.
४. **'अविनाभावरूपा व्याप्तिः'** – क.
५. **'बहुविधा'** – क.पाठः ।

एकावयविवर्तिनोरिति सम्बन्धः । **तूलोन्नमनावनमनयोरिति** ॥ तथा च पूर्वोदाहृतेष्विवान्यतरस्यान्यतरेण व्याप्तिरिति न मन्तव्यः[१] । किन्तु तूलोन्नमनावनमनयोः परस्परं व्याप्तिरिति ज्ञेयम् ।

अत एवान्यसाम्येन व्याप्तिरित्यनुक्त्वा **उन्नमनावनमनयो**रित्युक्तम् । आदिशब्दादवयविभेदेन भिन्नावयववृत्तिनोः छायाछायावच्छिन्नशिर-श्चलनयोः छायिशिरश्चलनेन छायाशिरश्चलनस्य व्याप्तिरुदाहर्तव्या । **तत्स्मरण**सहितमनुभवरूपज्ञानजन्यस्मरणसहितम् ।

ननु व्याप्यो धर्मो व्यापकप्रमितिसाधनं भवन्ननुमानमित्युच्यत इत्युक्तमयुक्तम् । व्याप्तिग्राहकप्रत्यक्षादिनैव धूमादिलिङ्गवति सर्वत्र वह्न्यादिव्यापकस्वरूपस्य निश्चितत्वादिति चोद्यमप्यत एव निरस्त-मित्याह– **अत एवेति** ॥ लिङ्गस्य समुचितदेशादिविशेषे लिङ्गि-प्रमाजनकत्वादेव[२] देशविशेषे कालविशेषरूपाधिकरणसम्बन्धतया व्यापकप्रमितिर्न प्रमाणान्तरसाध्येति भावः ॥

ननु व्याप्तिप्रकारमपेक्ष्य व्याप्यं व्यापकप्रमितिसाधनमित्युक्त्या व्याप्तिरेवानुमितौ प्रयोजिकेति प्राप्तम् । न च तद् युक्तम् । व्याप्यस्य समुचितदेशवृत्तित्वज्ञानाभावे व्यापकप्रमानुदयाद् इत्यत आह– **ततश्चेति** ॥ तस्मादेवेत्यर्थः । **अनुमानस्य** व्याप्यस्य । **सामर्थ्यं** सहकारिव्याप्तिः । **व्याप्तिर्ज्ञानं**[३] **सिद्धिर्ज्ञानम्** ॥

---

१. **'न मन्तव्यम्'** - क.

२. **'लिङ्गिप्रमितिजनकत्वादेव'** - क.

३. **'व्याप्तिज्ञानं'** - क.

*(व्याप्तिग्राहकप्रमाणोपन्यासः)*

**(प्र.प.)** ननु व्याप्तिज्ञानं केन प्रमाणेन जायते । यथायथं प्रत्यक्षानुमानागमैरिति ब्रूमः । तत्र तावद् धूमस्याग्निना व्याप्तिः प्रत्यक्षगम्या । तथाहि । महानसादौ धूमाग्न्योः साहचर्यं पश्यतः पुरुषस्यैष विमर्शो जायते ॥

किमत्रैवैतौ धूमाग्नी सहचरितावन्यत्र देशान्तरे कालान्तरे चैतज्जातीयौ परस्परपरिहारेण वर्तेते उतान्यतर एवान्यतर-परिहारेण[१] ? किंवा सकलदेशकालयोः सहचरितावेवेति । ततो भूयोभूयो धूमं पश्यन्नग्निं पश्यति । अग्न्यभावे च धूमाभावम् । तथा धूमाभावेऽपि क्वचिदग्निसद्भावम् ॥

[२]ततः पुनरेष विचारो भवति[३] । यथा बहुषु स्थलेषु धूमेन सहचरितोऽप्यग्निः क्वचित् तं परित्यज्य वर्तते । तथा धूमो[४] मत्परिचितस्थलेष्वग्निना सह वर्तमानोऽपि क्वचित् तं परित्यज्य[५] वर्तते । किं वा सर्वत्र तत्सहचरित एवेति ॥

ततः पुनरेषा बुद्धिरुत्पद्यते । अग्नेर्धूमसम्बन्धेऽस्त्यार्द्रेन्धन-संयोग उपाधिः । स च धूमव्यापकः[६] स्वयं व्यावर्तमानस्तं

---

१. '-परिहारेण वर्तेते' त.
२. 'तथा' ज.
३. 'जायते' त.
४. 'धूमोऽपि' त.
५. 'वर्तमानोऽपि किमन्यत्रैनं परित्यज्य' त.
६. 'धूमस्य व्यापकः' त.

व्यावर्तितवान् । न पुनरग्निम् । तदव्यापकत्वात् । तथा धूमस्याग्निसम्बन्धे यदि कश्चिदुपाधिः[१] स्यात् तदा सोऽप्यग्निं व्यभिचरिष्यति ॥

नचेन्निर्निमित्तस्य सम्बन्धस्य [२]धूमस्वभावत्वेन न क्वापि तदभावो भविष्यतीत्येवं निश्चित्य महानसादावुपाधिगवेषणे प्रवर्तते ॥

तत्र केचिद् धर्मा उभयव्यापकाः । यथा प्रमेयत्वम्[३] । नैतत् सम्बन्धं विघटयितुमीशते । केचिदुभयाव्यापकाः । यथा महानसत्वम्[४] । तेऽपि नैतत्सम्बन्धविघटनाय समर्थाः । केचिद् धूमव्यापका अग्न्यव्यापकाः । यथाऽऽर्द्रेन्धनसंयोगः[५] । तेऽप्यग्नेर्धूमवियोजने शक्ता अपि [६]न धूमस्याग्निवियोजने[७] ।

यस्त्वग्नेर्व्यापको धूमस्य त्वव्यापकः स स्वयं व्यावर्तमानः शक्ष्यत्येतत्सम्बन्धं[८] विघटयितुम् । स तु नास्त्येव । अनुपलम्भात् । अतीन्द्रियोऽपि प्रमाणान्तरवेद्यः स्यात् । न च

---

१. '-दुपाधिः प्रमितः स्यात्' त.
२.'धूमस्वभावत्वम्' च.
३.'प्रमेयत्वादयः' च.
४.'महानसत्वादयः' च.
५.'आर्द्रेन्धनसंयोगादयः' च.
६. राघ.– न धूमस्याग्निवियोजन इति । शक्ता इत्यनुषङ्गः । धूमव्यापकः स्वयं व्यावर्तमानः स्वव्याप्यं धूममेव व्यावर्तयति । न तु धूमं स्थापयित्वा तस्याग्निसम्बन्धं व्यावर्तयतीत्यर्थः । पृ.सं- २३१.
७. '-वियोजने शक्ताः' त.
८. 'शक्ष्यत्यग्निसम्बन्धम्' त.

**तत्प्रमाणमुपलभ्यते[1] । न चाप्रामाणिकः शङ्कामप्यधिरोहति । अतो नात्रोपाधिरस्तीति [2]निर्णीतवतोऽविनाभाव[3]प्रमिति-रुत्पद्यते ॥**

**(भा.च.)** ननु व्याप्तिज्ञानं चेदङ्गं तर्हि तत् केन प्रमाणेन जायत इति शङ्कते– **नन्विति** ॥ **यथायथं** स्वस्वयोग्यतामनतिक्रम्य, व्याप्तिज्ञानं जायत इति शेषः । **विमर्शः** मनोवृत्तिविशेषो विचारः । **न चेदिति** ॥ **उपाधिरिति** अनुवर्तते ॥ **निर्निमित्तस्येति** ॥ निर्गतम् उपाधिरूपं निमित्तं यस्मादिति विग्रहः । निरुपाधिकसम्बन्धस्येति यावत् । **न क्वापीति** ॥ **क्वापि** कस्मिंश्चिदपि । धूमे तदभावः वह्निसम्बन्धाभावो न भविष्यतीत्येवं निश्चित्येत्यर्थः ॥

**नैत इति** ॥ एते धूमाग्न्योरुभयोरपि व्यापकाः सतो धूम-स्याग्निसम्बन्धविघटनाय समर्था न भवन्ति । उभयव्यापकनिवृत्त्या उभयोरपि निवृत्तिप्रसङ्गेनाग्निमात्रं वियुज्य धूमस्याग्निसम्बन्धनिवृत्ति-

---

१. **'प्रमाणमस्ति'** त. २. **'विनिर्णीतवतो-'** त.

३. **राघ.–** अविनाभावेति । साध्यत्वाभिमतवस्तुसाहित्येनैव सत्त्वरूपा-व्यभिचरितसम्बन्धप्रमितिरित्यर्थः । नन्वत्र धूमस्याग्निसम्बन्धे उपाधिरैन्द्रियकश्चेदुपलभ्येत नोपलभ्यते । अतोऽनुपलम्भान्नास्तीति । अतीन्द्रियश्चेत्प्रमाणान्तरवेद्यः स्यात् । न च तत्प्रमाणमुपलभ्यते । अप्रामाणिकं न शङ्कार्हम् । अतोऽत्र नास्त्युपाधिरिति तर्केणोपाध्यभावं निश्चित्य तेन तदधीनव्यभिचाराभावनिश्चयेन व्याप्तिनिश्चये तर्कस्यापि व्याप्तिधीसापेक्षत्वा-दनवस्था स्यादिति चेन्न । उपाधिसन्देहे सत्येव तदपनयेन तदभावनिर्णयाय तर्कस्यावतारात् । अत एव प्रागुपाधिसन्देह एव प्रदर्शितः । यत्र तु नोपाधिसन्देहो न तत्र तर्कावतार इति नानवस्थेति तात्पर्यात् । वक्ष्यति चान्ततः प्रत्यक्षागममूलत्वादिति । पृ.सं- २३२.

सम्पादनायोगादिति भावः । **सम्बन्धं विघटयितुमिति** ॥ वह्निव्यापकत्वेन स्वव्यावृत्त्या वह्निव्यावृत्तिं सम्पाद्य स्वस्य धूमव्याप्यतया स्वनिवृत्तावपि धूमसम्भवेन अतो धूमस्य वह्निना सम्बन्धं विघटयितुं शक्ष्यते, शक्तो भवतीत्यर्थः ॥

**(प्र.प.) नन्वेवं सति न प्रत्यक्षं व्याप्तिग्राहकम् । मैवम् । यतः साहचर्यग्राहिणः प्रत्यक्षस्य भूयोदर्शनव्यभिचारादर्शनोपाध्यभावनिश्चयाः सहकारिणः । न च सहकारिभेदेऽपि प्रत्यभिज्ञायामिव प्रमाणान्तरत्वम् । वर्तमानसन्निकृष्टमात्रग्राहिप्रत्यक्षं[१] कथमतीताद्यास्पदां व्याप्तिं गृह्णीयादिति चेन्न । सहकारिसामर्थ्येन करणानां[२] शक्त्यन्तराविर्भावस्य बहुलमुपलम्भात्[३] ।**

१. **'-मात्रावगाहिप्रत्यक्षं'** त. २. **'कारणानां'** तं.

३. **राघ.–** बहुलमुपलम्भादिति । संस्काररूपसहकारिसामर्थ्याहितशक्तिकस्य चक्षुषोऽतीतवर्तमानविषयप्रत्यभिज्ञाजनकत्वदर्शनात् । तथा गन्धानुभवजन्यसंस्काराहितशक्तिकस्य चक्षुषश्चन्दनखण्डे 'सुरभिश्चन्दनखण्डः' इति साक्षात्कारजनकत्वदर्शनाद्दोषाहितशक्तिकस्य चक्षुष इदं रूप्यमित्यसद्रूप्यविषयकधीजनकत्वदर्शनात् । दावदग्धवेत्रबीजस्य कदलीकाण्डजनकत्वदर्शनादित्यर्थः । तथा च भूयोदर्शनव्यभिचाराभावनिश्चयोपाध्यभावनिश्चयजन्यसंस्काराविर्भूतशक्तिकस्य चक्षुषोऽतीतादिधूमनिष्ठव्याप्तिविषयकत्वोपपत्तिरिति भावः । न चैवं धूमवह्निगोचरभूयोदर्शनसहकार्याहितशक्तिकं चक्षू रूपरसादिविजातीयगतव्याप्तिं गृह्णीयादिति शङ्क्यम् । 'इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यते' इत्यनुव्याख्यानसुधोक्तरीत्या भूयोदर्शनजनितसंस्काराविर्भूतशक्तिकं चक्षुः स्वसन्निकृष्टव्यक्तिनिष्ठसादृश्यप्रतियोग्यतीतादिग्राहकमित्यत्र तात्पर्यात् । पृ.सं- २३३.

किञ्च[1] प्रतीतस्य धूमस्याग्निसम्बन्धे स्वाभाविकतया निश्चिते[2] यद्यन्यत्रापि धूमः स्यात् तर्हि तस्याप्येवमित्येवं व्याप्तिग्रहो भवतीत्यतः काऽत्रानुपपत्तिः ।

एतेन प्रमेयत्वाभिधेयत्वयोर्व्याप्तिं गृह्णतः सार्वज्ञ्यप्रसङ्ग इत्यपि परास्तम्[3] ।

कुत एतत्सर्वं कल्प्यत इति चेत् । कार्यदर्शनादेव । अस्ति तावद् धूमदर्शनानन्तरमग्निज्ञानम् । न च तदयथार्थम् । संवादित्वात् । नचान्यदर्शनेनान्यज्ञानं निर्निमित्तं भवितुमर्हति । अति-

१. वेदे.– किञ्चेति । माऽस्तु प्रत्यक्षेणातीतादिधूमे व्याप्तिग्रहः । वर्तमानधूमनिष्ठव्याप्तौ प्रत्यक्षेण निश्चितायां तद्धूमदृष्टान्तेन विप्रतिपन्नो धूमोऽग्निव्याप्तो भवितुमर्हति धूमत्वात्परिदृश्यमानधूमवदिति धूमवत्त्वादिहेतुना तत्रापि व्याप्तिग्रह इति स्वीकारे बाधकाभावात् । न चैवमनुमानगम्यां त्वित्युत्तरग्रन्थविरोधः । अतीतादाविव वर्तमानेऽपि लिङ्गे व्याप्तेः केवलानुमानगम्यत्वस्य तदर्थत्वादिति भावः । यद्वा 'यद्यतिथिरागच्छेत्तर्हि स भोजयितव्यः' इत्यादौ वाक्यजन्यज्ञानस्य निमित्तांशे सम्भावनारूपत्वं तस्मिन् सति नैमित्तिकं कार्यमित्यंशे तु निश्चयरूपत्वमित्येवं नरसिंहाकारत्वं तथा प्रकृतेऽपि व्याप्यांशे सम्भावनारूपं व्याप्त्यंशे तु निश्चयरूपमिति नरसिंहाकारमतीतादिलिङ्गे व्याप्तिज्ञानमित्याह ।। किञ्चेति । पृ.सं- २४१.

२. राघ.– निश्चित इति । प्रागुक्तदिशा प्रत्यक्षेणाप्तोपदेशेन वा निश्चिते सति तस्याप्येवं व्याप्यत्वम् । पुरोवृत्तिधूमनिष्ठस्वरूपतत्सादृश्यप्रतियोगित्वेन व्यवहितधूमव्यक्त्युपस्थितौ सत्यां यद्यन्यत्र धूमः स्यात्तर्हि सोऽपि वह्निव्याप्यो धूमत्वादेतद्धूमवदित्यनुमानेन, यद्यन्यत्रापि धूमः स्यात् सोऽपि वह्निव्याप्यः स्यान्न चेद्वह्निव्याप्यस्तर्ह्येतत्सदृशो न स्यात् । एतन्निष्ठसादृश्यप्रतियोगी वा न स्यात् । भवति च तथा । अतो वह्निव्याप्य इति तर्केण वा तद्ग्रह इति न काऽप्यनुपपत्तिरित्यर्थः । -पृ.सं - २४०.

३.'निरस्तम्' त.

**प्रसङ्गात् । न च व्याप्तिप्रमां समुचितदेशत्वप्रमां[१] चापहाय निमित्तान्तरमस्तीति कार्यमेवैतत् कल्पयति । यथा खलु शिलाशकलादावनुपलब्धामपि क्षितिसलिलादिसहकारि-समुद्भूतां बीजस्य शक्तिमङ्कुरदर्शनं कल्पयतीति । अनुमान-गम्यां तु व्याप्तिमुत्तरत्रोदाहरिष्यामः ।**

**न च तस्याप्यनुमानस्य [२]व्याप्त्यपेक्षायामनवस्था । अन्ततः प्रत्यक्षागममूलत्वात् । ब्राह्मणो न हन्तव्यो, गौर्न पदा स्प्रष्टव्येत्यागमगम्या[३] व्याप्तिः । न चात्र कश्चित् क्षुद्रोपद्रवो नापि दृष्टान्तापेक्षेति ॥**

**(भा.च.) एवं सतीति** ॥ उपाध्यभावनिश्चयादीनां व्याप्ति-प्रमाहेतुत्वे सतीत्यर्थः । तथा च सत्यपि धूमाग्निसम्बन्धसन्निकृष्टप्रत्यक्षे मनसाऽप्यधिष्ठिते च सति व्याप्तिविषयकप्रमाऽनुत्पत्तौ तत्र प्रत्यक्षान्तर-स्यापि[४] अप्रत्यक्षं व्याप्तिग्राहकमिति भावः । [५]सहकार्यन्तरविरहादेव तेन प्रत्यक्षेन तदा व्याप्तिप्रमाजनकत्वेऽनुदयः[६] । न तु प्रत्यक्षस्य व्याप्तिप्रमां प्रत्यहेतुत्वाद् इत्याह– **मैवमिति** ॥

ननु घटेन्द्रियसन्निकर्षानन्तरमेव घटज्ञानोत्पत्तिवद् इह धूमनिष्ठ-व्याप्तिप्रमानुदयाद् उपाध्यभावादिनिश्चयसहकृतस्य व्याप्तिप्रमाजनक-त्वेनेदं प्रत्यक्षप्रमाणत्वेन गणनीयम् । घटादिग्राहकप्रत्यक्षसमानयोग-

---

१. **'समुचितदेशवृत्तित्वप्रमाम्'** ज. २. **'व्याप्त्यपेक्षया'** त.
३. **'-त्याद्यागमगम्या'** त. ४. **'प्रत्यक्षस्याऽन्तरस्यापि'** क.
५. **'सहकार्यान्तरविरहादेव'** ख. ६. **'व्याप्तिप्रमानुदयः'** क.

क्षेमत्वाभावात् । किन्तु प्रत्यक्षानुमानागमेभ्यः प्रमाणान्तरत्वेनैव । अतो न प्रत्यक्षं व्याप्तिग्राहकमित्यत आह– **नचेति** ॥ व्याप्तिग्राहक-प्रत्यक्षस्येतरप्रत्यक्षापेक्षया सहकारिभेदे सत्यपि प्रत्यभिज्ञायां प्रत्यभिज्ञालक्षणकार्ये संस्कारलक्षणसहकारियुक्तप्रत्यक्षस्यैव न प्रमाणान्तरत्वमित्यर्थः ॥

तथा च 'सोऽयं देवदत्तः' इति प्रत्यभिज्ञा जनकसंस्कारलक्षण-सहकारियुक्ताऽपि न प्रत्यक्षादिभ्योऽतिरिक्ता । किन्तु प्रत्यक्ष एवा-न्तर्गता । एवं व्याप्तिग्राहकप्रत्यक्षमपीत्यर्थः । **सहकारिसामर्थ्येनेति** ॥ तथा च सहजशक्त्या सन्निकृष्टवर्तमानमात्रग्राहकमपि प्रत्यक्षं सहकारि-सामर्थ्येन शक्त्यन्तराविर्भावे सति अतीतादिसकलधूमनिष्ठां व्याप्तिं गृह्णातीति भावः । दावदग्धवेत्रबीजात् कदलीकाण्डोत्पत्तिदर्शनादिति ।

**किञ्च प्रतीतस्येति** ॥ प्रत्यक्षेण प्रतीतस्येत्यर्थः । **तस्याप्येव-मिति** ॥ **तस्यापि** देशान्तरस्थधूमस्यापि । **एवम**ग्निसम्बन्धोऽस्तीत्यनेन प्रकारेणेत्यर्थः । **काऽत्रानुपपत्तिरिति** ॥ किंशब्द आक्षेपे । अत्र प्रत्यक्षस्य अतीताद्यास्पदव्याप्तिनिश्चायकत्व इत्यर्थः । एतादृशव्याप्ति- ज्ञानस्य[1] अतीतानागतविप्रकृष्टव्याप्त्यंशे[2] सम्भावनारूपत्वान्निश्चयहेतु-प्रत्यक्षस्य वर्तमानसन्निकृष्टमात्रग्राहित्वेऽपि सम्भावनारूपज्ञानस्य मानसिकत्वेन तत्रेन्द्रियसन्निकर्षानपेक्षणान्नोक्तदोष इति भावः ॥

**एतेनेति** ॥ व्याप्तिज्ञानस्य अतीतानागतविप्रकृष्टव्याप्त्यंशे[3] निश्चय-रूपत्वाभावेनेत्यर्थः ।

---

१. **'तादृशव्याप्तिज्ञानस्य'** क.
२. **'व्याप्यांशे'** - ख.
३. **'व्याप्यांशे'** - ख.

ननु व्याप्यांशे[1] सन्देहरूपस्य तत्सम्बन्धरूपव्याप्त्यंशे निश्चयरूपत्वमनुपपन्नमिति चेत्, न। 'यद्यतिथिरागच्छेत् स पूजयितव्यः[2]' इत्यादाविव निमित्तांशे सम्भावनारूपत्वेऽपि तस्मिन् सति इदमिति नैमित्तिकांशे निश्चयरूपत्वोपपत्तेरिति ॥ **एतत् सर्वमिति** ॥ व्याप्तिप्रमितेरनुमितिहेतुत्वं, भूयोदर्शनादिनाऽविर्भावश्चेत्येतत् सर्वमित्यर्थः । **कार्येति** ॥ अनुमितिरूपकार्यदर्शनादेवेत्यर्थः । **संवादित्वादिति** ॥ बाधकप्रमाणशून्यत्वलक्षणसंवादादित्यर्थः । यद्वा, अर्थक्रियालक्षणसंवादयुक्तत्वादिति भावः ।

**यथेति** ॥ यथा शिलायां बीजादङ्कुरलक्षणं कार्यं क्षितिसलिलादिसहकार्यभावे न दृश्यते । क्षितिसलिलादिसहकारिणि सति दृश्यमानं त्वङ्कुरलक्षणं कार्यं क्षितिसलिलादिसहकारिभिः समुद्भूतामङ्कुरलक्षणकार्योन्मुखत्वेन जातां शक्तिं कल्पयति । तथा व्याप्तिप्रमाराहित्यस्थले अन्यज्ञानादजायमानमनुमितिलक्षणं कार्यं व्याप्तिज्ञाने सति जायमानं तस्य ज्ञानस्य कारणत्वं कल्पयति । तथा व्यभिचारादर्शनसहचारदर्शनाद्यभावदशायां प्रत्यक्षेण जायमानं व्यभिचारादर्शनादिसहकारिसमवधाने सति जायमानं व्याप्तिज्ञानलक्षणं कार्यं व्यभिचारादर्शनादिसहकारिभिः समुद्भूतां व्याप्तिज्ञानजननानुकूलां शक्तिं प्रत्यक्षस्य कल्पयतीति भावः ॥

**अत्रानुपलब्धामिति** ॥ अङ्कुरलक्षणकार्यादर्शनादिति भावः । **उत्तरत्रेति** ॥ ततोऽनुमानेन तां साधयितुं व्यतिरेकव्याप्तिरुपन्यस्यत इत्युत्तरग्रन्थ इत्यर्थः । **अन्तत इति** ॥ कियद्दूरं गत्वा व्याप्तिग्राहकानुमानगतव्याप्तेः प्रत्यक्षागमगम्यत्वान्नानवस्थितिरिति सम्बन्धः ।

---

१. **'व्याप्त्यंशे'** - क.   २. **'पूजितव्यः'** इति सर्वमातृकापाठः ।

व्याप्तेः यथायथं प्रत्यक्षादिप्रमाणत्रयगम्यत्वमुक्तम् । तदुपपादनायाऽगमगम्यां व्याप्तिमुदाहरति – **ब्राह्मण इति** ॥ अनेन यो यो ब्राह्मणः स स सर्वोऽपि न हन्तव्यः, या या गौः सा सा सर्वाऽपि पदा न स्पृष्टव्या इति व्याप्तिरवगम्यते । तथा चाऽभ्यामागमाभ्यां ज्ञेया व्याप्तिरागमगम्येत्यर्थः । आगमेन व्याप्तौ गम्यमानायां प्रत्यक्षेणासन्निकृष्टधूमगतव्याप्तिग्रहणमनुपपन्नमित्यादिदोषवद् दोषो न प्रसज्यत इति भावेनाऽह- **न चात्रेति** ॥ दृष्टान्ताभावात् कथं व्याप्तिग्रह इति शङ्कायामाह- **नापीति** ॥ तथाचाऽगमस्याऽप्तवाक्यतया व्याप्तिबोधकत्वान्न दृष्टान्तापेक्षेति भावः ।

*(अनुमानविभागः)*

**(प्र.प.) त्रिविधमनुमानम् । कार्यानुमानं कारणानुमानमकार्यकारणानुमानं[1] चेति[2] । तत्राऽद्यं यथा । धूमोऽग्नेः । द्वितीयं यथा । [3]विशिष्टमेघोन्नतिर्वृष्टेः । इयांस्तु विशेषः । कार्यं कारणमात्रमनुमापयति । कारणं तु समग्रमेव कार्यमिति ।**

**तृतीयं यथा । रसो रूपस्येति । पुनर्द्विविधम् । दृष्टं सामान्यतो दृष्टं चेति । तत्र प्रत्यक्षयोग्यार्थानुमापकं दृष्टम् । यथा धूमोऽग्नेः । प्रत्यक्षायोग्यार्थानुमापकं सामान्यतो दृष्टम् । यथा**

---

१. **‘अकार्यकारणानुमानं कार्यकारणभिन्नानुमानम्’**
*(वेदेशीयटिप्पणी पृ.२४६)*

२. **‘-नुमानमिति’** त.

३. **वि.–** विशिष्टमेघोन्नतिरिति । निबिडावयवविशिष्टानां मेघानां समूहविशेषरूप उत्कर्ष इत्यर्थः । पृ.सं- २४७.

रूपादिज्ञानं चक्षुरादेः । अथवा यथाभूतयोर्व्याप्तिग्रहणं तथाभूतयोरेव लिङ्गलिङ्गिभावे दृष्टम् । यथा धूमाग्न्योः[1] । व्याप्यव्यापकयोरन्यादृशत्वेऽपि[2] तत्सामान्याकारानुगमेन लिङ्गलिङ्गिभावे सामान्यतो दृष्टम् । यथा कृषीवलस्य कर्षणादिप्रवृत्तेर्धान्यादिफलवत्त्वदर्शनेन [3]यज्ञादेः[4] स्वर्गादिफलानुमानम्[5] । प्रेक्षावत्प्रवृत्तित्वफलवत्त्वसामान्यानुगमात् ।।[6]

---

१. **'धूमोऽग्नेः'** त.

२. **जना.–** अन्यादृश्यत्वेऽपीति ।। अनुमितिहेतुभूतसमुचितदेशवृत्तिताज्ञाने विशेषरूपेण विषयत्वेऽपीत्यर्थः ।। लिङ्गलिङ्गिभाव इति । व्याप्यव्यापाकभाव इत्यर्थः । **पृ.सं- २४५.**

३. **रा.टि.–** यज्ञादेरिति । यज्ञादिप्रवृत्तेरित्यर्थः । यज्ञादिप्रवृत्तिः स्वर्गादिफलवती प्रवृत्तित्वात् । कृषीवलस्य धान्यादिफलकर्षणादिप्रवृत्तिवदिति प्रयोगे कृषीवलस्य कर्षणादिप्रवृत्तेर्धान्यादिफलत्वेऽपि यज्ञादिप्रवृत्तेस्तत्कुत इति चोदिते प्रेक्षावत्प्रवृत्तित्वाविशेषादित्युक्त्वा यत्र प्रेक्षावत्प्रवृत्तित्वं तत्र फलवत्त्वमिति नियमादिति व्याप्यव्यापकभाव इत्युच्यते । तत्र यज्ञादिप्रवृत्तित्वस्वर्गादिफलवत्त्वयोर्लिङ्गलिङ्गिशब्दितज्ञाप्यज्ञापकभावः प्रेक्षावत्प्रवृत्ति -त्वफलवत्त्वयोर्व्याप्यव्यापकभाव इत्यादिरूपमपि सामान्यतो दृष्टानुमानमित्यर्थः । **पृ.सं- २४५.**

४. **'यागादिप्रवृत्तेः'** त.

५. 'अत्रेत्थं प्रयोगः । यज्ञादिकं स्वर्गफलवत् प्रेक्षावद्यजमानप्रवृत्तिमत्त्वात् । यत् प्रेक्षावत्प्रवृत्तिमत् तत् फलवत् । यथा कर्षणादिकमिति ।' *(वेदेशीयटिप्पणी. पृ- २४७)*

६. **'प्रेक्षावत्प्रवृत्तिफलरूपसामान्यानुगमात्'** च.

**पुनर्द्विविधम् । साधनानुमानं दूषणानुमानं चेति । तत्राऽद्यं यथा । [१]धूमप्रमित्याऽग्निप्रमितिसाधनम् । दूषणानुमानमपि द्वेधा । [२]दुष्टिप्रमितिसाधनं तर्कश्चेति । [३]तत्राऽद्यं यथा । नेदं स्वसाध्यसाधनसमर्थम्[४] । प्रमाणबाधितत्वादित्यादि । कस्यचिद् [५]धर्मस्याङ्गीकारेऽर्थान्तरस्याऽपादनं तर्कः ।**

**(भा.च.)** अनुमीयते येनेति व्युत्पत्त्या अनुमानपदमनुमापकपरम् । यत्तु स्वानुमेयकार्यं सदनुमापकं तत् कार्यानुमानम् । यत्तु स्वानुमेयकारणं सदनुमानं तत् कारणानुमानम् ।

यत्तु स्वानुमेयस्य कार्यकारणबहिर्भूतं सदनुमापकं तदकार्य-कारणानुमानमित्यभिप्रेत्य तान्युदाहरति- **यथेत्यादिना** ॥ अग्नेः धूमः कार्यः सन्ननुमापक इत्यर्थः । **विशिष्टेति** ॥ वृष्टेरनुमापिका विशिष्ट-मेघोन्नतिः कारणानुमानमित्यर्थः ।

---

१. **'धूमप्रमितेरग्निप्रमितिसाधनम्'** त.

२. **वेद.–** दुष्टीति । यद्यपि दुष्टिप्रमितिसाधनत्वं तर्केऽप्यस्ति । तर्कादपि परपक्षा-युक्तताप्रमितिः । तथाऽप्यापादनरूपेण तस्य तथात्वमस्य तु साधनरूपेणेति भेदः । अत एवाऽह– दुष्टिप्रमितिसाधनमिति । परपक्षायुक्तताप्रमितौ साधन-रूपमित्यर्थः । इत्यादीत्यादिपदेन प्रमाणलक्षणटीकाद्युदाहृतं नायं निरग्निक-मित्यादिकमपि सङ्गृहीतमिति ध्येयम् । इयांस्तु विशेषः । हेत्वयुक्तता-प्रमिति-साधनरूपमेकमपरं साध्यायुक्तताप्रमितिसाधनरूपमिति । दुष्टि-रसाधकतेति क्वचित् । तदसत् । प्रमाणलक्षणटीकादिगतोदाहरणाव्याप्तेः । **पृ.सं- २४९.**

३. *त.पाठे* **'तत्र'** *इति पदं नास्ति ।*

४. **'-साधने समर्थम्'** त.

५. **'अर्थस्या-'** त. *अयमेव भा.च.अनुसारी पाठः ।*

ननु कारणं नानुमानम् । अनुमापयद्धि अनुमानम् । अनुमापकं च व्याप्यमेव । नहि कारणं कार्यस्य व्याप्यम् । स्वेतरसहकार्य-समवधानदशायां सत्यपि कारणे कार्यानुदयेन, येन विना यस्या-नुपपत्तिरित्युक्तव्याप्तेरभावात् । कार्यं हि कारणेन विनाऽनुपपन्नं सत् कारणमनुमापयति, इत्येतद्धि सत्यमित्यत आह- **कार्यं हीति** ॥ **कारणमात्रमिति** ॥ मात्रशब्दः कार्त्स्न्यपरः, स्वकारणं सर्वमित्यर्थः । **कारणं त्विति** ॥ समग्रमेव कारणं सकलसहकारिसम्पन्नमेवेत्यर्थः । अत एव विशिष्टमेघोन्नतिरित्युक्तम् । सान्द्रत्वविशेषविशिष्टस्य[1] विवक्षित-त्वात् । समग्रं कारणं स्वव्यवहितोत्तरभाविकार्येण[2] विनाऽनुपपन्नं सत् कार्यमनुमापयतीति भावः ।

**रूपादिज्ञानमिति** ॥ चक्षुरादेरनुमापकं रूपादिज्ञानं सामान्यतो दृष्टमित्यर्थः । **यथाभूतयोरिति** ॥ यद्धर्मावच्छिन्नयोर्व्याप्यव्यापक-योर्व्याप्तिग्रहः तद्धर्मावच्छिन्नयोरेवानुमापकानुमेयभाव इत्यर्थः । **व्याप्य-व्यापकयोरिति** ॥ लिङ्गलिङ्गिनोरन्यादृशत्वेऽपि यथाभूतयोर्व्याप्ति-ग्रहस्तथाविधत्वाभावेऽपि **तत्सामान्याकारानुगमेन** तदपेक्षया लिङ्ग-लिङ्ग्यपेक्षया यः सामान्याकारः तत्सामान्याकारः सामान्यधर्मः व्याप्यव्यापकतावच्छेदकरूपस्तेन आकारेण दृष्टान्तेऽनुगत्या लिङ्ग-लिङ्गिभाव इत्यर्थः ।

**यज्ञादेरिति** ॥ यज्ञादिप्रवृत्तेरित्यर्थः । तथा च, यागप्रवृत्तिः स्वर्गफला प्रेक्षावद्यजमानप्रवृत्तित्वादित्यत्र प्रेक्षावद्यजमानप्रवृत्तित्वस्वर्गफलत्वा-पेक्षया यः सामान्याकारः प्रेक्षावत्प्रवृत्तित्वसफलत्वलक्षणसामान्या-

---

१. **'सान्द्रत्वविशेषवैशिष्ट्यस्य'**- ख.पाठः ।

२. **'स्वाव्यवहितोत्तरभाविकार्येण'** इति पाठेन भाव्यमिति भाति ।

कारः । तेन कृषीवलप्रवृत्तिलक्षणदृष्टान्तेऽनुगत्या [१]प्रेक्षावद्यजमान-प्रवृत्तित्वस्वर्गफलत्वयोर्लिङ्गलिङ्गिभावस्त्वनुभवसिद्ध इति भावः ॥

**साधनानुमानमिति** ॥ साध्यतेऽनेनेति व्युत्पत्त्या .स्वपक्षसाधक-मनुमानं साधनानुमानमित्यर्थः । दूष्यतेऽनेनेति व्युत्पत्त्या परपक्षा-साधुत्वप्रमितिसाधकमनुमानं दूषणानुमानमित्यर्थः । **धूमप्रमित्येति** ॥ अग्निप्रमितेः अग्न्यनुमितिरूपप्रमितेः, साधनमुत्पत्तिरित्यर्थः । **नेदमिति** ॥ 'अग्निरनुष्णः पदार्थत्वात्' इत्यभिहिते प्रतिवादिनो बाधितविषयत्वं वदत इदमभिप्रेतम् । इदं पदार्थत्वानुमानं स्वसाध्या-साधकं बाधितविषयत्वादिति ॥

इदं तु दोषप्रमितिसाधनरूपं दूषणानुमानमित्युच्यत इति ज्ञेयम् । आदिशब्दात् **'नेदं स्वसाध्यसाधकं विरुद्धत्वात्'** इत्यादि ज्ञेयम् ।

**कस्यचिदर्थस्येति** ॥ व्याप्यस्याङ्गीकारेऽर्थान्तरस्यानिष्टव्यापक-स्याऽऽपादनमङ्गीकार्यताज्ञापनमित्यर्थः । यद्ययं पर्वतोऽग्निमान् स्यात् प्रमेयः स्यादितीष्टापादनव्यवच्छेदायानिष्टपदोपादानम् । यद्ययं निरग्निः स्यात् तर्हि वृक्षरहितः स्यादित्यनिष्टापादनव्यवच्छेदाय व्यापक-पदोपादानम् । एवमपि न तद्व्यवच्छेदः । वृक्षराहित्यस्यापि कस्यचिद् व्यापकत्वात् । अतः व्याप्याङ्गीकार इत्युक्तम् । तथा च व्याप्याङ्गीकारे व्यापकप्रसञ्जनमित्युक्त्या प्रसञ्जनीयापेक्षया व्याप्यत्वलाभात् पर्वतो यदि निरग्निस्तर्हि वृक्षरहितः स्यादित्यापादने तु नातिप्रसङ्गः । अनिष्टपदं परित्यज्य सर्वस्योक्तौ, यद्ययं निर्वह्निः स्यात् तर्हि प्रमेयः स्यादित्यापादनेऽतिव्याप्तिः । तद्व्यवच्छेदायानिष्टपदम् ॥

---

१. *अत्र सर्वत्र* **'यागप्रवृत्तित्व'** *इति सर्वमातृकापाठः ।*

*(पञ्चाङ्गानि तर्कस्य)*

**(प्र.प.)तस्य पञ्चाङ्गानि । आपादकस्याऽपाद्येन व्याप्तिः [1]प्रतितर्केणाप्रतिघात [2]आपाद्यस्यानिष्टत्वम् । तद् द्विविधम् । प्रामाणिकहानमप्रामाणिककल्पनं चेति । तत्राऽद्यं त्रेधा । दृष्टानुमितश्रुतहानभेदात् । द्वितीयमप्यदृष्टाननुमिताश्रुत-कल्पनाभेदात् त्रिविधम् । एतदेव कल्प्यानेकत्वे कल्पनागौरव-**

---

१. **श्रीनि.–** प्रतितर्केणाप्रतिघात इति । यथाऽऽह बौद्धः । यदि जगतः क्षणिकत्वं न स्यात्तर्ह्यर्थक्रियाकारित्वरूपं सत्त्वं न स्यात् । तथा हि । स्थायिनो घटादेः किं युगपदर्थक्रियाकारित्वमुत क्रमेण । नाऽद्यः । एकक्षणे सर्वकारणप्रसङ्गात्। द्वितीये प्रथमक्षणे द्वितीयादिक्षणीयकार्यकारणशक्तिरस्ति न वा । आद्ये प्रथमक्षणे एव सर्वं कुर्यात् । समर्थस्य विलम्बायोगात् । द्वितीये द्वितीयादिक्षणेऽपि न कुर्यादिति । तदेतस्य तर्कस्य, यदि क्षणिकं स्यात्तर्हि तदेवेदमिति प्रत्यभिज्ञाविरोधः स्यादिति प्रतितर्केण विरोधोऽस्ति । सत्तर्के तु नैवम् । यद्यग्निः स्यात्तर्हि धूमोऽपि स्यादित्यभावात् ॥ **पृ.सं- २५७.**

२. **श्रीनि.–** आपाद्यस्यानिष्टत्वमिति । अङ्गीकर्तव्यताविरोधिधर्मवत्त्वमित्यर्थः ॥ आपाद्यस्य विपर्ययपर्यवसानमिति । आपाद्यव्यतिरेकस्य पक्षधर्मताप्रदर्शन-पूर्वकमापादकव्यतिरेकस्य पक्षसम्बन्धकथनमित्यर्थः । यथा वर्तते च धूमस्तस्मादग्निमानेवेति । बौद्धतर्के तु नैवम् । प्रत्यभिज्ञादिप्रमाणबाधितत्वेन क्षणिकमेवेति वक्तुमयोगात् ॥ परस्याननुकूलत्वं चेति । दृश्यत्वादि-प्रकरणसमवत् प्रतिपक्षसाधकत्वमित्यर्थः । यथा बौद्धतर्कस्य परानुकूलत्वम् । यदि क्षणिकं स्यात्तर्हि सत्त्वं न स्यादित्यापादनसम्भवात् । तथा हि । कारणस्य हि कार्यक्षणवर्तन एव जनकत्वम् । अन्यथाऽतिप्रसङ्गात् । न चैतत्क्षणिकस्य सम्भवति । एकक्षणमात्रावस्थायिनस्तस्य कार्यक्षणेऽभावात् । अतः क्षणिकत्वेऽर्थक्रियाकारित्वरूपं सत्त्वं न सम्भवतीति न तथा सत्तर्कस्य, व्याप्त्यभावेन यद्यग्निः स्यात्तर्हि धूमोऽपि न स्यादित्यापादनायोगादिति ॥ पृ.सं- २५७.

मित्युच्यते । आपाद्यस्य विपर्यये पर्यवसानं परस्याननुकूलत्वं चेति ।

आपाद्यमनिष्टं पुनः पञ्चधा भिद्यते । आत्माश्रयत्व-मन्योन्याश्रयत्वं चक्रकाश्रयत्वमनवस्था केवलानिष्टं चेति । तद्भेदात् तदापादनरूपस्तर्कोऽपि पञ्चविधः । तत्र तस्यैवोत्पत्तिज्ञप्त्यर्थं तदुत्पत्तिज्ञप्त्यपेक्षाङ्गीकारे[1] स्वापेक्षया[2] पूर्वभावित्वरूपमात्माश्रयत्वमापाद्यते[3] ।

यदि घटोऽयमस्यैव घटस्योत्पादकः स्यात् तर्हि स्वतोऽपि पूर्वभावी स्यात् । यद् यस्य कारणं तत् ततोऽपि[4] पूर्वभावि दृष्टम् । यथा पटकारणं तन्तवस्तदपेक्षया पूर्वभाविनः ।

नचात्र प्रतिकूलस्तर्कोऽस्ति । यदि घटस्य घट एव कारणं न स्यात्[5] तर्हीदमापद्यत इति । अनिष्टं चेदम् । स्वापेक्षया पूर्वभावित्वस्याप्रामाणिकत्वात् । व्याहतत्वेनाङ्गीकर्तु-मनुचितत्वाच्च । पूर्वभावित्वं हि तदभाववति काले भावः ।

न च स्वाभाववति काले स्वयं भवतीति न व्याहतम् । न चेत् पूर्वभावित्वमङ्गीक्रियते[6] तदा न स्वस्य स्वयं कारणम् । नचैवमेवाऽपादकं प्रत्यापादयितुं शक्यत इति पञ्चाङ्गानि[7] । एवं ज्ञप्तावपि तज्ज्ञानस्य तज्ज्ञानं प्रति पूर्वभावित्वमापाद्यम् ।

१.'ज्ञप्त्यपेक्षायां' त.
२.'स्वापेक्षया स्वस्य पूर्व-' च.
३.'-श्रयत्वमापाद्यम्' त.
४. त.पाठे 'अपि' पदं नास्ति ।
५.'कारणं स्यात्' च.
६. '-मङ्गीक्रियेत' त.
७. 'पञ्चाङ्गानीति' ज.

**द्वयोरितरेतरकारणत्वाङ्गीकारे त्वन्योन्यापेक्षया पूर्वभावित्व-रूपमन्योन्याश्रयत्वमापाद्यम् । बहूनां चक्रवत् कार्यकारण-भावाभ्युपगमे पूर्वभावित्वलक्षणं चक्रकाश्रयत्वम् । अनवस्थितासिद्धकारणापेक्षायां मूलक्षयापरनामकप्रतीत-कार्यविलोपलक्षणानवस्था ॥**

**केवलानिष्टापादनमपि त्रेधा । दृष्टानुमितश्रुतहानापादन-भेदात् । अदृष्टाननुमिताश्रुतकल्पनापादनभेदाच्च । एतदेव कल्प्यानेकत्वे[१] कल्पनागौरवमित्युच्यते । दृष्टहानं यथा । यदि पर्वतो [२]निरग्निकस्तर्हि निर्धूमः स्यादिति । एवमन्य-स्याप्युदाहरणं शास्त्रे द्रष्टव्यम् ॥**

**(भा.च.)** अङ्गपञ्चकयुक्तस्यैव तर्कस्य प्रमाणत्वात् तदुपपादनाय तर्काङ्गान्याह- **तस्य चेति** ॥ आपाद्यस्यानिष्टत्वमप्रामाणिकत्वं तर्कस्याङ्गमिति शेषः । **तद् द्विविधमिति** ॥ तद् आपाद्यमनिष्टं द्विविधमित्यर्थः । आपाद्यमनिष्टं द्विप्रकारमित्युक्त्या तदापादन-रूपस्तर्कोऽपि द्विविध इति प्राप्तम् । न च तद्युक्तम् । कल्पना-गौरवापादनस्य तर्कान्तरस्य सत्त्वादित्यत आह– **एतदेवेति** ॥ अदृष्टादिकल्पनमेवेत्यर्थः[३] । अदृष्टादेः कल्पनस्यानेकत्व इत्यर्थः । तथा च कल्पनागौरवापादनमपि अप्रामाणिककल्पनारूपानिष्टस्यापादन-रूपतर्क एवान्तर्भावः[४] । **विपर्यये पर्यवसानं** परिसमाप्तिः ।

**परस्येति** ॥ परस्य प्रतिवादिनो यदनुकूलं तदसाधकत्वं परस्या-

१.**'कल्पानेकत्वे'** च. २.**'निरग्निकः स्यात्तर्हि'** त.
३.**'अनिष्टापादनकल्पनमेवेत्यर्थः'** क. ४.**'अन्तर्भाव इति भावः'**- क.

ननुकूलत्वमित्यर्थः । आत्माश्रयत्वरूपं यदनिष्टं तदापादनतर्कस्य पश्चाङ्गानि दर्शयति– **यद्यस्य कारणमित्यादिना** ॥

यदि घटस्येति तर्करूपप्रमाणेन साध्यस्य प्रमेयस्य प्रतितर्केण प्रतिघाताभावः तर्काप्रतिहतिशब्देनोच्यते । यथा ह्रदो वह्निमान् प्रकाशाश्रयत्वात्- इत्युक्ते, हेतुरस्तु साध्यं माऽस्त्विति शङ्किते तर्कः प्रवर्तते । यदि ह्रदो वह्निमान् न स्यात् । तर्हि प्रकाशाश्रयो न स्यात् । भवति च प्रकाशाश्रयः । तस्माद् वह्निमानिति ॥

अनेन च तर्केण ह्रदस्य वह्निमत्त्वे साधिते प्रतितर्कः प्रवर्तते यदि ह्रदो वह्निमान् स्यात् तदा जलस्य सकलानुभवसिद्धं वह्निप्रशामकत्वं न स्यादिति ॥

न च तथाऽत्र । आत्माश्रयत्वरूपतर्कवादिना तस्माद् घटः स्वात्मानं प्रति कारणं नेत्युक्ते घटो यदि घटं प्रति कारणं नेत्यङ्गीक्रियते तदा इदं बाधकमापाद्यत इति । अस्ति तथा चैतदभावात् प्रतितर्कप्रतिघातो नेत्यर्थः । इदमात्माश्रयत्वमनिष्टमप्रामाणिककल्पनारूपमनिष्टमित्यर्थः ।

व्याहतिमेवोपपादयति– **पूर्वभावित्वं हीति** ॥ विपर्यये पर्यवसान-मुपपादयति- **न चेदिति** ॥ अननुकूलत्वमुपपादयति– **नचैवमेवेति** ॥ आपाद्यविपर्ययस्य [१]तर्कप्रतिवाद्यनुकूलार्थासाधकत्वमननुकूलत्वं यथा पर्वतो धूमवान् निर्वह्नित्वादिति प्रयुक्ते निर्वह्नित्वमस्तु, धूमो माऽस्त्विति शङ्किते वादिनोच्यते । यदि धूमो न स्यात् निर्वह्नित्वं न स्यात्, वह्निरेव भवेदिति यावत् । न चात्र वह्निरस्तीत्युक्ते आपाद्यविपर्यययोः निर्वह्नित्वं तर्कवाक्यापेक्षया प्रतिवाद्यनुकूलं निर्धूमत्वमेव साधयति । यद्ययं निर्वह्निः स्यात्, निर्धूमः स्यादिति ।

१. **'तर्के'** *इति पाठः स्वरस्य इति भाति ।*

नचाऽत्माश्रयत्वापादनतर्के आपाद्यविपर्ययस्य स्वापेक्षया स्वस्य पूर्वभावित्वाभावस्य प्रतिवाद्यभिमतं यद् घटस्यैव घटकारणत्वं तत्साधकत्वमस्ति। घटो यदि घटं प्रति कारणं स्यात् तर्हि स्वापेक्षया स्वयं पूर्वभावी स्यादित्यापादकं प्रति यदि पूर्वभावी न स्यात् तदा स्वात्मानं प्रति कारणं भवेदेवेत्येवमेवाऽपादयितुमशक्यत्वात्। तथा चाऽपाद्यविपर्ययस्य स्वापेक्षया स्वस्य पूर्वभावित्वाभावस्य प्रतिवाद्यभिमतघटगतस्वकारणत्वासाधकत्वात् परानुकूलत्वमप्यस्तीति[1] भावः ॥

**एवं ज्ञप्तावपीति ॥** घटः स्वात्मानं प्रति कारणमित्युक्ते[2] स्वापेक्षया पूर्वभावित्वं यथाऽऽपाद्यते तथा घटज्ञप्तौ घटज्ञप्तिः कारण-मित्युक्तेऽपि घटज्ञप्त्यपेक्षया घटज्ञप्तेः पूर्वभावित्वमापाद्यमित्यर्थः। **पूर्वभावित्व-लक्षणमिति ॥** बहूनां परस्परपूर्वभावित्वलक्षणचक्रकाश्रयत्व-मापाद्यमिति शेषः। **अनवस्थितासिद्धेति ॥** अनवस्थितानि अपर्यवसितानि असिद्धानि अप्रामाणिकानि यानि कारणानि तदपेक्षायामित्यर्थः। बीजादङ्कुरमङ्कुराद् बीजमिति अनवस्थित-बीजाङ्कुरादिकारणाङ्गीकारेऽनवस्थाभावादसिद्धेत्युक्तम् ॥

तथा च धूमनिष्ठा व्याप्तिरनुमानगम्या। तत्रापि व्याप्तिरनुमान-गम्येत्यनुमानलक्षणकारणपरम्परायामङ्गीकृतायां प्रतीतधूमनिष्ठव्याप्ति-ज्ञानलक्षणकार्यविलोप एवानवस्थाशब्देनोच्यत इति ज्ञेयम्। **'मूलक्षयकरीं प्राहुरनवस्थां हि दूषणम्'** इति परोक्तमूलक्षयोऽपि प्रतीति[3]कार्यविलोपरूप एवेत्याहुः ॥

---

१. **'-ननुकूलत्वमस्तीति'** - क.

२. **'-मित्युक्तेः'** ख.

३. **'प्रतीत'** - क.

**मूलक्षयापरनामकेति** ॥ आत्माश्रयत्वान्योन्याश्रयत्वचक्रकाश्रयत्वानवस्थानलक्षणचतुःस्वरूपभिन्नमनिष्टं केवलानिष्टं, तदापादनं त्रिविधमित्यर्थः । **हानोपादानभेदादिति** ॥ केवलानिष्टस्य दृष्टहानानुमिति[1]हानश्रुतहानभेदेन त्रैविद्यात् तदापादनरूपतर्कस्त्रिविधमिति[2] भावः । **एवमन्यस्यापीति** ॥ अयं चक्षुष्मान् रूपज्ञानवत्त्वात्– इत्यत्र रूपज्ञानानङ्गीकारे चक्षुष्मान् न स्यादित्यनुमितहानोपादानम् । तथा – (यदि) ईश्वरः सर्वज्ञः न स्यात् तर्हि जगत्कर्ता न स्यादिति श्रुतहानापादनं द्रष्टव्यम् । एवं पीतमुदकं परमन्तरधक्ष्यत् तदा मामपि दहेदिति अदृष्टकल्पनापादनम् । तथा शरीरं यद्यभौतिकं स्यान्नित्यं स्यादित्यननुमितकल्पनापादनम् । तथा, ईश्वरो यद्यसर्वज्ञः स्याद् दुःखी स्यादित्यश्रुतकल्पनापादनं च द्रष्टव्यम् ॥

*(असिद्धिविरोधयोः तर्केऽदूषणत्वम्)*

**(प्र.प.) [3]अनुमानत्वेऽपि तर्कस्याऽपादकासिद्धिरदूषणम् ।**

---

१. **'अनुमित'** क.पाठः ।

२. **'तर्कस्त्रिविधः'** इति पाठेन भाव्यमिति भाति ।

३. **वेदे.**– ननु तर्कस्यानुमानत्वे आपादकं निरग्निकत्वं लिङ्गम् । आपाद्यं निधूर्मत्वं साध्यमित्यङ्गीकर्तव्यम् । न चेदं युक्तम् । लिङ्गस्यासिद्धत्वाल्लिङ्गिनश्च प्रत्यक्षबाधात् । धूमस्यैव तत्राङ्गीकृतत्वेन तदभावसाधनेऽपसिद्धान्तापत्तेश्चेत्याशङ्क्य निराकरोति अनुमानत्वेऽपीति ॥ आपादकासिद्धिरिति । स्वमत इति शेषः । तर्हि कथं तर्कप्रवृत्तिरित्यत आह ॥ परेति । पराभ्युपगमेनैव तर्कः प्रवर्तते । परन्यायैश्च दूषणमित्युक्तत्वात् । अतः स्वमतेऽसिद्धिरदूषणमिति भावः । असाधनादित्यनन्तरमनिष्टरूपे चानुमाननिष्ठतोपपादकतया भूषणमेवेति वाक्यशेषः ।

इदमुक्तं भवति । साधनानुमानेऽसिद्ध्यादिकदोषो, नानिष्टप्रसञ्जनरूपे

**पराभ्युपगममात्रस्य[1] तत्र सिद्धिपदार्थत्वात् । एवमापाद्यस्य प्रमाणविरोधोऽपसिद्धान्तश्च[2] न दूषणम्[3] । निर्धूमो भवतीत्यसाधनात् । यथा साधनानुमाने न व्याप्तिमात्रं, नापि पक्षधर्मतामात्रं साध्यप्रमितिसाधनं, किन्तु मिलितमेव ।**

**एवमनिष्टापादनं विपर्यये पर्यवसानं चोभयं मिलितमेवानु-**

दूषणानुमाने । तत्र ह्यापादकस्य स्वमतेऽसिद्धिर्भूषणमेव, पराभ्युपगमेनैव प्रवृत्तत्वात् तर्कस्य । एवमापाद्यस्य बाधितत्वादिकमपि न दोषः । तस्यापि साधनानुमाने एव दोषत्वात् । अस्माभिश्च निर्धूमो भवतीत्यसाधनात् । आपादनरूपे च दूषणानुमाने बाधादेरनिष्टतोपपादकत्वेन भूषणतैवेति ।

यद्वा नात्र निरग्निकत्वरूपापादकस्य पक्षेऽसिद्धिः । यत्सर्वथा पक्षे न सम्बद्धं तदसिद्धमिति लोके प्रसिद्धम् । निरग्निकत्वं च पक्षे परेणाभ्युपगतम् । ततश्च पराभ्युपगमस्यैव यक्षानुरूपबलिन्यायेन सम्बद्धतया सिद्धिपदार्थत्वान्नासिद्ध-मित्याह- परेति । **पृ.सं- २६०.**

१. **'पराङ्गीकारमात्रस्यैव'** इति भावचन्द्रिकानुगतः स्वरसः पाठः ।

२. **आद.–** विरोधो विपरीतार्थविषयकत्वम् । अपसिद्धान्तः प्रमाणत्वेन स्वाङ्गीकृतविपरीतार्थविषयकत्वम् । **पृ.सं- २६५.**

३. **जना.–** न दूषणमिति । अयं भावः । साध्यरूपस्यैव लिङ्गिनो बाधो दोषो न त्वापाद्यरूपस्य । आपाद्यत्वव्याघातात् । यदापाद्यं तत्प्रमाणबाधितमेव । अनिष्टं ह्यापाद्यम् । प्रमाणबाध एवानिष्टत्वम् । न चात्र निर्धूमत्वं साध्यम् । तथात्वे यदि तर्हीति च न स्यात् । किन्तु निर्धूमोऽयमिति स्यात् । न च निर्धूमोऽयमिति ज्ञानस्य यावान् विषयस्तावानेव तर्हि निर्धूमः स्यादित्यस्यापि विषयः । अधिकस्य तर्हि स्यादिति शब्दयोरर्थ-स्याप्युल्लेखात् । अत एव नापसिद्धान्तोऽपि । स हि सिद्धान्तविरुद्धस्य साधने स्यात् । न त्वापादनेन । तस्मात् साधनानुमान एव बाधापसिद्धान्तयो-र्दूषणत्वम् । न प्रसङ्गानुमानरूपतर्के । प्रत्युत तयोर्भूषणत्व-मेवेतीत्याशयवानाह– निर्धूमो भवतीत्यसाधनादिति । **पृ.सं- २६२.**

**मितिसाधनं भवतीति[1] तर्कस्य प्रामाण्यमुपपद्यते । सोऽयं क्वचिद् विपरीतशङ्कानिरसनद्वारेण प्रमाणानामनुग्राहकोऽपि भवतीति ॥**

**(भा.च.)** ननु तर्कस्यानुमानत्वे व्याप्यस्य वह्न्यभावस्य समुचितदेशे सिद्धिर्वाच्या । न च वह्न्यभावस्य पक्षे सिद्धिरस्ति । तथा व्यापकश्च धूमाभावः[2] प्रमाणविरुद्धमपसिद्धान्तश्च । एवं दूषणग्रस्तेऽपि कथमनुमानरूपं प्रमाणमित्याशङ्क्याऽऽह– **तर्कस्यानुमानत्वेऽपीति** ॥ दूषणानुमाने समुचितदेशे व्याप्यस्य सिद्धिशब्दार्थस्त्वन्य एवेत्याह– **पराङ्गीकारमात्रस्यैवेति**[3] ॥ तथा च वह्न्यभावे स्वीकृते धूमाभावोऽपि स्वीकार्य इत्यग्न्यभाववति धूमस्यानङ्गीकार्यत्वमात्रकथनात्[4] तस्य च प्रामाणिकत्वाद् व्यापकस्य धूमाभावस्य प्रमाणविरोधादिर्न दूषणमिति भावः । अत एवाऽऽह- **निर्धूमो भवतीत्यसाधनादिति** ॥

नन्वेवमनिष्टापादनरूपतर्कस्यानुमानत्वेन प्रामाण्यार्थं विपर्यये एव पर्यवसानं कस्मादङ्गीकार्यमित्याशङ्क्य तर्कस्थले विपर्ययपर्यवसानाभावे परपक्षासाधुत्वप्रमाऽनुदयात् तथाऽनिष्टप्रसञ्जनाभावे चोक्तप्रमाऽनुदयाद् उभयमिलितमेव परमिष्टार्थसाधनद्वारा परपक्षासाधुत्वप्रमाजनक-मित्याह- **यथा साधनानुमान इति** ॥ मिलितमेव ज्ञातमिति शेषः । **अनुमितिसाधनमिति** ॥ परानभ्युपगतार्थसाधनद्वारा परपक्षासाधुत्व-

---

१. **'भविष्यतीति'** त.

२. **'धूमाभावः पक्षेऽसिद्धः । तथाच हेतोरसिद्धिर्लिङ्गिनो धूमाभावस्य पक्षे सत्त्वं प्रमाणविरुद्धम्'** *इति समुचितः पाठः सम्भाव्यते ।*

३. **'पराभ्युपगममात्रस्य'** *इति प्रचलितमूलपाठः ।*

४. *इयं पङ्क्तिः क.पाठे नास्ति ।*

गोचरप्रमारूपानुमितिसाधनमित्यर्थः । तर्हि परपक्षासाधुत्वप्रमितावेव तर्कस्योपयोग इति शङ्कायामाह- **सोऽयमिति** ॥ क्वचिदनुग्राहक इति सम्बन्धः । यत्र विपरीतशङ्का तत्रैव, नत्वन्यत्रेति भावेन क्वचिदित्युक्तम् । प्रमाणान्तरस्याऽगमस्य आगमार्थनिर्णायकश्रुतिलिङ्गादेश्चानुग्राहक इत्यर्थः ॥

*(तार्किकोक्तानुमानत्रैविध्यनिरासः)*

**(प्र.प.) केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् त्रिविधमनुमानमित्येके । [१]साध्यधर्मविशिष्टो धर्मी पक्षः[२] । तत्र व्याप्त्या वर्तमानम् । निश्चितसाध्यसमानधर्मा धर्मी सपक्षः । तत्र सर्वस्मिन्नेकदेशे वा वर्तमानम् । साध्यतत्समानधर्मरहितो धर्मी विपक्षः । तद्रहितं केवलान्वयि ।**

---

१. **राघ.–** साध्येति । यत्प्रतीतिर्लिङ्गेन जनयितव्या स साध्यधर्मः । सपक्षादिव्यावृत्तये धर्मेत्युक्तिः । वस्तुतोऽग्निविशिष्टपर्वतस्य साध्यत्वादन्यस्य पक्षत्वव्यावृत्तये धर्मेत्युक्तिः । धर्ममात्रस्य प्रागेव सिद्धेः साध्यत्वायोगाद् विशिष्ट इत्युक्तिः । तथा च धर्मस्य साध्यत्वं तत्सम्बन्धितयैव सिध्यति । साधनसाध्यधर्मेण वैशिष्ट्यसम्बन्धोऽस्तीति धर्मीत्युक्तिः । निश्चितेति । निश्चितो यः साध्यसमानधर्मो व्यापकताच्छेदकेन सदृशो यो धर्मः स यस्येति बहुव्रीहिः । इमौ पर्वतावग्निमन्तावित्यत्र व्यापकतावच्छेदकाग्नित्वधर्मेण साध्यसमानधर्मवत्त्वमन्योन्यं द्वयोरप्यस्तीति तद्व्युदासाय निश्चितेति धर्मविशेषणम् । असम्भवनिरासाय समानेति । व्याप्तिरूपप्रत्यासत्त्या निश्चितसाध्यसमानधर्मवतः साधनस्य निरासाय धर्मीति । तादृशधर्मं प्रत्याधारभूतेत्यर्थः । **पृ.सं- २६८.**

२. **'पक्षः साध्यान्वितो धर्मी, साध्यजातीयधर्मवान् । सपक्षोऽथ, विपक्षस्तु साध्यधर्मनिवृत्तिमान् ॥'** इति नैयायिकानां कारिका ॥

तद् द्विविधम् । सर्वसपक्षतदेकदेशवृत्तिभेदात् । शब्दोऽभिधेयः प्रमेयत्वादिति सपक्षव्यापकम् । सर्वस्मिन्नभिधेयतया सम्प्रतिपन्ने प्रमेयत्वस्य वृत्तेः । गुणत्वादिति[1] सपक्षैकदेशवृत्ति । रूपादौ वृत्तेर्घटादाववृत्तेः ॥

**(भा.च.)**

'सर्वेषु केषुचिद् वाऽपि सपक्षेषु समन्वयि ।[2]
विपक्षशून्यं पक्षस्य व्यापकं केवलान्वयि ॥

असपक्ष[3] विपक्षेभ्यो व्यावृत्तं पक्षभूमिषु ।
सर्वासु वर्तमानं यत् केवलव्यतिरेकि तत् ॥

व्यावृत्तं यद् विपक्षेभ्यः सपक्षेषु कृतान्वयि ।
व्याप्त्या पक्षे वर्तमानमन्वयव्यतिरेकि तत् ॥'

इति [4]परोक्तकेवलान्वय्यादिलक्षणानि वदन् तस्य पक्षसपक्षविपक्ष-घटितत्वात् तेषामपि लक्षणान्याह– **साध्यधर्मविशिष्ट** इत्यादिना ॥

*(केवलान्वयिनिरूपणम्)*

**(प्र.प.) द्विविधा किल व्याप्तिः । अन्वयतो व्यतिरेकतश्चेति[5]। साधनस्य साध्येन[6] व्याप्तिरन्वयः । साध्याभावस्य साधना-**

---

१.'**गुणत्वाच्चेति**' च ।

२.'**कृतान्वयि**' इति मुद्रितान्यटिप्पणीगतः पाठः ।

३.'**असपक्षं विपक्षेभ्यः**' इति मुद्रितान्यटिप्पणीगतः पाठः ।

४. तार्किकरक्षायां वरदराजेनोक्तानीमानि लक्षणानि ।

५.'**अन्वयो व्यतिरेकश्चेति**' च. त.

६.'**साध्येन सह**' त.

भावेन व्याप्तिर्व्यतिरेकः। तत्रास्य केवलमन्वय एवास्ति। यत् प्रमेयं तदभिधेयं यथा घट इति। न तत्र व्यतिरेकः। यदभिधेयं न भवति तत् प्रमेयं न भवतीति निदर्शनाभावात्। सर्वस्याप्यभिधेयत्वेनानभिधेयासम्भवात्। तेनैतत् केवलान्वयीत्युच्यते॥

*(केवलव्यतिरेकिनिरूपणम्)*

[१]पक्षव्यापकमविद्यमानसपक्षं सर्वस्माद् विपक्षाद् व्यावृत्तं केवलव्यतिरेकि। यथा जीवच्छरीरजातं सात्मकं प्राणादिमत्त्वादिति। अस्य हि यत् सात्मकं न भवति तत् प्राणादिमन्न

---

१. जना.– सर्वपक्षवृत्तित्वे सत्यविद्यमानसपक्षत्वे सति सर्वविपक्षव्यावृत्तत्वं केवलव्यतिरेकिणो लक्षणमिति निष्कर्षः। तदुक्तं वरदराजेन-

असपक्षं विपक्षेभ्यो व्यावृत्तं पक्षभूमिषु।
सर्वासु वर्तमानं यत्केवलव्यतिरेकि तत्॥ इति।

आद्यविशेषणमात्रोपादाने केवलान्वय्यन्वयव्यतिरेकिणोरतिव्याप्तिः। अतोऽविद्यमानेति द्वितीयविशेषणम्। पक्षव्यापकत्वे सत्यविद्यमानसपक्षत्वमेव लक्षणमित्युक्ते सर्वमभिधेयं प्रमेयत्वादित्यनुपसंहारिणि गतम्। अतस्तृतीयं विशेषणम्। विपक्षविशेषणसर्वपदानुपादाने त्वाकाशकालातिरिक्तं सर्वमनित्यम्। आकाशान्यत्वादित्यत्रातिव्याप्तिः। तस्यापि सर्वपक्षवृत्तित्वादविद्यमानसपक्षत्वाद्यत्किञ्चिदाकाशादिव्यावृत्तत्वाच्च। अतः सर्वेति विपक्षविशेषणम्। एवं च नातिव्याप्तिः। कालरूपविपक्षव्यावृत्तत्वाभावात्। आद्यविशेषणे पक्षविशेषणसर्वपदानुपादाने आकाशपटातिरिक्तं सर्वमनित्यम्। अकाशपटान्यत्वादित्यत्र गतम्। अतः सर्वेति पक्षविशेषणम् इति क्रमेण व्यावर्त्यानि। पृ.सं- २७३.

भवति यथा घट इति व्यतिरेक एवास्ति । न तु यत् प्राणादि-मत् तत् सात्मकमित्यन्वयः । सर्वस्यापि जीवच्छरीरस्य पक्षत्वात् । अन्यस्य सर्वस्य निरात्मकत्वात् । तेनैतत् केवल-व्यतिरेकीत्युच्यते ॥

*(अन्वयव्यतिरेकिनिरूपणम्)*

[१]पक्षव्यापकं सपक्षवृत्ति सर्वविपक्षव्यावृत्तमन्वयव्यतिरेकीति[२] । तदपि द्विविधम् । सर्वसपक्षतदेकदेशवृत्तिभेदात् । शब्दोऽनित्यः कृतकत्वादिति सपक्षव्यापकम् । सर्वस्मिन्ननित्ये कृतकत्वस्य वृत्तेः । पर्वतोऽग्निमान् धूमवत्त्वादिति सपक्षैकदेशवृत्ति । अग्निमत्यपि क्वचिद् वृत्तेः । क्वचिच्चावृत्तेः । इदं हि यद् धूमवत् तदग्निमद् यथा महानसः । यदग्निमन्न भवति तद् धूमवन्न भवति यथा ह्रद इति व्याप्तिद्वयसद्भावादन्वयव्यतिरेकी-त्युच्यते[३] ॥

**(भा.च.)** अन्वयत इति सार्वविभक्तिकस्तसिः । तथाचान्वयतः

---

१. जना.– सर्वपक्षवृत्तित्वे सति सपक्षवृत्तित्वे सति सर्वविपक्षव्यावृत्तत्व-मन्वयव्यतिरेकिणो लक्षणमिति निष्कर्षः । एतदेवाऽह वरदराजोऽपि

व्यावृत्तं यद्विपक्षेभ्यः सपक्षेषु कृतान्वयम् ।
व्याप्त्या पक्षे वर्तमानमन्वयव्यतिरेकि तत् ॥ इति ।

आद्यविशेषणोपादाने केवलव्यतिरेकिणि गतम् । अतो द्वितीयम् । प्रथमद्वितीयमात्रोपादानेन तृतीयविशेषणपरित्यागे केवलान्वयिनि गतम् । अतस्तृतीयं विशेषणमिति क्रमेण व्यावर्त्यानि । पृ.सं- २७५.

२. '-व्यतिरेकि' ज.त.

३. '-त्युच्यत इति' त.

समम्, अन्वयेन[1] साध्येनेति यावत् । व्यतिरेकतः व्यतिरेकेण हेत्वभावेनेति यावत् । एवं च साध्यनिरूपिता हेत्वभावनिरूपिता चेति द्विविधा व्याप्तिरित्यर्थः । क्रमेणोदाहरति – **साधनस्येति** ॥ अन्वयतः अन्वयनिरूपितेत्यर्थः । यद्वा, अन्वयतः अन्वययोर्व्याप्तिः, व्यतिरेकयोर्व्याप्तिश्चेति द्विविधेत्यर्थः । **अन्वय इति** ॥ अन्वययोर्व्याप्तिरित्यर्थः । **व्यतिरेक इति** ॥ व्यतिरेकयोर्व्यतिरेकव्याप्तिरित्यर्थः[2] ॥

**प्राणादिमत्त्वादिति** ॥ प्राणापानादिवायुयुक्तत्वादित्यर्थः ॥

*(तार्किकोक्तत्रिविधानुमानप्रकारनिरासः)*

**(प्र.प.) तदिदमसत् । व्यतिरेकव्याप्तेः प्रकृतसाध्यसिद्धावनुपयोगात् । नहि भावेन भावसाधनेऽ[3]भावस्याभावेन व्याप्तिरुपयुज्यते । व्याप्तिपक्षधर्मतयोः वैय्यधिकरण्यं[4] चैवं सति स्यात् । कथं तर्हि केवलव्यतिरेकिणः शास्त्रे संव्यवहारः । इत्थम् ।**

**तत्रापि यत् प्राणादिमत् । तत् सात्मकमित्येव व्याप्तिः । किन्तु व्याप्तिग्रहणस्थानस्यैव विप्रतिपत्तिविषयत्वप्राप्त्या सा**

१. **'समन्वयेन'** क. २. **'व्यतिरेकयोर्व्याप्तिरित्यर्थः'** क.

३. च. पुस्तके **'अभावस्य'** इति पदं नास्ति ।

४. **वेदे.–** वैयधिकरण्यमिति । तथा च व्याप्तिविशिष्टपक्षधर्मताज्ञानलक्षणलिङ्गपरामर्शासम्भवादनुमितिर्न स्यात् । न चात्र साध्याभावव्यापकाभावप्रतियोगित्वज्ञानमेवानुमितिकारणम् । अत उक्तपरामर्शासम्भवो न दोष इति वाच्यम् । तृणारणिमणिजन्यवह्निष्विव लिङ्गपरामर्शादिरूपोक्तकारणद्वयजन्यानुमित्योरवान्तरविशेषस्याननुभवात् । तत्कल्पनस्यान्योन्याश्रयेण योग्यानुपलब्धिबोधेन चायुक्तत्वादिति भावः ॥ **पृ.सं- २७८.**

दर्शयितुमशक्याऽभूत् । ततोऽनुमानेन तां साधयितुं व्यतिरेकव्याप्तिरुपन्यस्यते । प्राणादिमत्त्वादिति प्रयुक्ते[१] कथमस्य व्याप्तिरित्याकाङ्क्षायां[२] प्राणादिमत्त्वं सात्मकत्वेन व्याप्तं, [३]तदभावव्यापकाभावप्रतियोगित्वात् । यद् यदभाव-[४]व्यापकाभावप्रतियोगि तत् तेन व्याप्तम् । यथा धूमवत्त्वमग्निमत्त्वेनेत्यस्यार्थस्य विवक्षितत्वात् ।

अन्वयव्यतिरेकिणि तु व्यतिरेकव्याप्तिरनुपयुक्तैव । विवक्षित-व्याप्तेः प्रत्यक्षादिनैव[५] सिद्धत्वात् । व्यभिचाराभावदर्शन-मुखेन[६] कथञ्चिदुपयुज्यते वेति[७] ॥

**(भा.च.) प्रकृतसाध्यसिद्धावनुपयोगादिति** ॥ अत्र साक्षा-दनुमित्युपयुक्त[८]व्याप्तीनां त्रैविध्यादनुमानत्रैविध्यं परस्याभिमतम् । तथा च धूमवत्त्वानुमाने तु अन्वयव्याप्तिवद् व्यतिरेकव्याप्तिरपि क्वचित् [९]साक्षादनुमित्यनुपयोगिनीत्यन्वयव्यतिरेक्यनुमानं धूमानुमानम् । प्राणादिमत्त्वादित्यनुमानं तु [१०]साक्षादनुमित्यनुपयुक्त[११] व्यतिरेक-

---

१. **'प्राणादिमत्त्वादित्युक्ते'** त.
२. **'-रिति शङ्कायां'** त.
३. **'तदभावव्यापकीभूताभाव-'** त.
४. **'-व्यापकीभूताभाव-'** त.
५. त. पाठे **'एव'** इति नास्ति ।
६. **'व्यभिचारशङ्कानिरसनद्वारा'** इति भावचन्द्रिकाटिप्पण्यनुसारी पाठः । **'व्यभिचाराभावप्रदर्शनमुखेन'** – त.
७. **'चेति'** त.
८. **'साक्षादनुपयुक्त'** क.
९. **'साक्षादनुमित्युपयोगिनी-'** इति पाठः सम्भाव्यते ।
१०. **'साक्षादनुमित्युपयुक्त-'** इति पाठः सम्भव्यते ।
११. **'साक्षादनुपयुक्त'** क.

व्याप्तिमात्रवत्त्वात् केवलव्यतिरेकीति वक्तव्यम् । न चैतद् युक्तम् । व्यतिरेकव्याप्तेः प्रकृतसाध्यसिद्धौ साक्षादुपयोगाभावादित्यर्थः ॥

**अभावस्याभावेनेति** ॥ तथा च धूमेन वह्निसाधने कृतकत्वानित्यत्वयोर्व्याप्तिरप्युपयुक्ता स्यादिति भावः ॥

किञ्च, इतोऽपि न व्यतिरेकव्याप्तिरनुमित्युपयोगिनीति वक्तुं शक्या । पक्षधर्मतासामानाधिकरण्यावच्छेदेन व्याप्तिविशिष्टज्ञानस्य[1] अनुमितिहेतुत्वाद्, व्यतिरेकव्याप्तेः साध्याभावगतत्वात् पक्षधर्मतायाश्च हेतुगतत्वादित्याह– **व्याप्तिपक्षधर्मतयोरिति** ॥

तर्हि भवन्मतेऽपि व्यतिरेक्यनुमानमिति संव्यवहारः कथमिति पृच्छति– **कथं तर्हीति** ॥ **विप्रतिपत्तिविषयत्वप्राप्त्येति** ॥ साध्यसन्देहविषयत्वप्राप्त्येत्यर्थः ॥

ननु प्राणादिमत्त्वरूपं हेतुं पक्षीकृत्य सात्मकत्वेन कथं सात्मकत्वाभावगता व्याप्तिरुपयुज्यते ? हेतोः पक्षावृत्तित्वाद् इत्यत आह– **प्राणादिमत्त्वादिति प्रयुक्त** इत्यादिना ॥

**प्रत्यक्षादिनैवेति** ॥ आगमादिरादिशब्दार्थः ॥

व्यतिरेकव्याप्तेः साक्षादनुमित्युपयोगस्य दूषितत्वाद् अन्वयव्याप्त्यनुमापकत्वेनैवोपयोगो वाच्यः । नहि प्रत्यक्षगम्येऽनुमानापेक्षेति भावः । तर्ह्यन्वयव्यतिरेकिणि व्यतिरेकव्याप्तेः सर्वथाऽनुपयोग एवेति शङ्कायामाह- **व्यभिचारशङ्कानिरसनद्वारेति** ॥ तथा च प्रत्यक्षेण व्याप्तौ गृह्यमाणायां प्रतिबन्धकीभूतव्यभिचारशङ्कानिरसनद्वाराऽन्वयव्याप्तिग्रहणे उपयुज्यते । यत्र तु व्यभिचारसन्देहः तत्रैव नत्वन्यत्रेति ज्ञापयितुं कथञ्चिदित्युक्तम् ॥

---

१. **'व्याप्तेर्विशिष्टज्ञानस्य'** ख.

[अ]अतोऽन्वयव्यतिरेकिणि व्यतिरेकव्याप्तेः परम्परया वोपयोगसद्भावाद् अन्वयव्यतिरेकित्वं युक्तमिति चोद्यमपास्तम् । यत्र व्यभिचारशङ्कानुदयस्तत्रोपयोगाभावेन तादृशान्वयव्यतिरेकिणोऽन्वयव्यतिरेकित्वानुपपत्तेरिति ॥

*(प्रकारान्तरेण अनुमानद्वैविध्यनिरूपणम्)*

**(प्र.प.) पुनरनुमानं द्विविधम् । स्वार्थं परार्थं चेति । तत्र परोपदेशमनपेक्ष्य यत् स्वयमेव व्याप्तिज्ञानतत्स्मरणसहितं[१] लिङ्गज्ञानमुत्पद्यते तत् स्वार्थानुमानम् । यत्तु[२] परोपदेशापेक्षमुत्पद्यते तत् परार्थानुमानम् । तज्जनकत्वात् [३]परोपदेशोऽपि परार्थानुमानमिति क्वचिदुपचर्यते ।**

**परोपदेशस्तु पञ्चावयववाक्यानीति[४] नैयायिकादयः[५] ।**

---

१. '-त्स्मरणलिङ्गज्ञानादिक-' त. २. 'यत् परोपदेशमपेक्ष्योत्पद्यते' त.

३. ससामर्थ्यलिङ्गप्रतिपादकं वाक्यं परोपदेशः । ४. '-वाक्यमिति' त.

५. **जना.**– नैयायिकादय इति । नवीननैयायिकादय इत्यर्थः । जरन्नैयायिकैर्जिज्ञासासंशयशक्यप्राप्तिप्रयोजनसंशयनिरासैः सह प्रतिज्ञादिदशावयवस्वीकारादिति द्रष्टव्यम् । जिज्ञासादिपञ्चकस्याशब्दरूपत्वस्य स्फुटत्वेनानवयवत्वात् तत्पक्षो न क्षोदक्षम इति नवीननैयायिकैरुपेक्षितः । के ते पञ्चावयवा इत्याकाङ्क्षायां न्यायसूत्रं प्रमाणयति ॥ प्रतिज्ञेति । अयं भावः । यावता व्याप्तिविशिष्टलिङ्गधीस्तावदाकाङ्क्षाक्रमेणाभिधेयम् । अन्यथा न्यूनत्वापत्तेः । तत्र साध्यानुपस्थितौ हेत्वाकाङ्क्षैव नोदेतीति तदुपस्थित्यर्थं प्रतिज्ञा । ततः कस्मात्प्रमाणादिदं ज्ञेयमित्याकाङ्क्षायां स्वरूपमात्रप्रतिपादकं धूमादिति हेतुवचनम् । ततोऽस्य सामर्थ्यजिज्ञासायां प्रथमं व्याप्तिदर्शनार्थमुदाहरणम् । पश्चात् पक्षधर्मताप्रदर्शनार्थमग्निव्याप्तधूमवांश्चायमित्युपनयः । ततः सर्वस्यैकबुद्ध्यारोहायैकवाक्यतामापादयितुं निगमनमिति पञ्चाप्यवयवा आवश्यका इति ॥

पृ.सं - २८३ **अ.** अतो नान्वय- इति सर्वमातृकापाठः ।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः । [1]एत एव वैशेषिकैः [2]प्रतिज्ञोपदेशनिदर्शनानुसन्धानप्रत्याम्नाया इत्युच्यन्ते । तत्र पक्षवचनं प्रतिज्ञा । यथा पर्वतोऽग्निमानिति । तत्र धर्मिणमुद्दिश्य पश्चाद् धर्मो विधातव्यः । साधनत्वख्यापकविभक्त्यन्तं लिङ्गवचनं हेतुः । यथा धूमवत्त्वादिति ।

व्याप्तिग्रहणस्थलं दृष्टान्तः । स द्विविधः । साधर्म्यदृष्टान्तो वैधर्म्यदृष्टान्तश्चेति । तत्रान्वयव्याप्तिग्रहणस्थलं साधर्म्यदृष्टान्तः । यथा धूमानुमाने महानसः । व्यतिरेकव्याप्तिग्रहणस्थलं वैधर्म्यदृष्टान्तः । यथा तत्रैव महाह्रद इति ।

सम्यग्व्याप्तिप्रदर्शनपूर्वकं दृष्टान्ताभिधानमुदाहरणम् । तद् द्विविधम् । साधर्म्योदाहरणं वैधर्म्योदाहरणं चेति । अन्वयव्याप्तिप्रदर्शनपूर्वकं साधर्म्यदृष्टान्ताभिधानं साधर्म्योदाहरणम् । यथा यो यो धूमवान् [3]सः सोऽग्निमान् यथा महानस इति । व्यतिरेकव्याप्तिप्रदर्शनपूर्वकं वैधर्म्यदृष्टान्ताभिधानं वैधर्म्योदाहरणम् । यथा योऽग्निमान्न भवति स धूमवान्न भवति । यथा महाह्रद इति ।

दृष्टान्ते प्रसिद्धाविनाभावस्य लिङ्गस्य पक्षे व्याप्तिख्यापकं वचनमुपनयः[4] । सोऽपि[5] दृष्टान्तानुसारेण द्विविधः । तत्र

---

१. 'य एव' च. २.'प्रतिज्ञापदेश-' ज.

३. 'असावसावग्निमान्' त.

४.'-ख्यापकवचनमुपनयः' त.

५. 'स च' त.

**महानस इव पर्वतो धूमवानिति साधर्म्योपनयः । न च ह्रद इवायं निर्धूमः पर्वत इति वैधर्म्योपनयः । पुनः सहेतुकं पक्षवचनं निगमनम् । यथा तस्मात् पर्वतोऽग्निमानिति ॥**

**(भा.च.)** नैय्यायिकादयः आदिशब्दाद् वैशेषिका आहुरिति शेषः । **पक्षवचनमिति** ॥ साध्यधर्मविशिष्टधर्मिवचनमित्यर्थः । **तत्रेति** ॥ प्रतिज्ञावाक्य इत्यर्थः । **साधनत्वेति** ॥ धूमवत्त्वमिति लिङ्गवचनस्य हेतुत्वशङ्कावारणाय साधनत्वख्यापकेत्युक्तम् ॥

उदाहरणस्य दृष्टान्तगर्भत्वात् प्रथमं दृष्टान्तस्वरूपं निरूपयति- **व्याप्तिग्रहस्थलमिति** ॥ **सम्यग्व्याप्तिप्रदर्शनपूर्वकमिति** ॥ व्याप्य-व्यापकयोर्व्यत्ययमकृत्वा '**व्याप्यस्य वचनं पूर्वम्**' इति न्यायेन व्याप्ति-प्रदर्शनपूर्वकं दृष्टान्तस्याभिधानं वचनमित्यर्थः ॥ **महानस इतीति** ॥ वचनमिति शेषः । प्रसिद्धः निश्चितः अविनाभावो यस्येति विग्रहः । व्याप्तो धूमः पक्षेऽस्तीति व्याप्तिख्यापकमित्यर्थः ॥

*(परार्थानुमानेऽवयवनियमनिरासः)*

**(प्र.प.)प्रतिज्ञाहेतूदाहरणान्युदाहरणोपनयनिगमनानि वा त्रय एवावयवा इति भाट्टाः । उदाहरणोपनयौ द्वावेवेति[१] बौद्धाः ।**

**तदेतदसत् । व्याप्तिद्वैविध्यनिराकरणेनोदाहरणोपनय-द्वैविध्यस्यापि निराकृतत्वात् । नियमानुपपत्तेश्च । नहीदं वाक्यमागमतया व्याप्त्यादिबोधकम् । येनाऽकाङ्क्षाद्यनुसारेण पञ्चावयवादिनियमः स्यात् । परस्य परस्मिन्व्याप्त्यनिश्चयात् । निश्चये वा प्रतिज्ञामात्रेण पूर्तेर्हेत्वाद्यभिधानवैय्यर्थ्यात् ।**

१. 'द्वाविति' – त.

किन्तु गृहीतव्याप्त्यादेः पुरुषस्य तत्स्मारकत्वादिनाऽगृहीतव्याप्त्यादेस्तु[1] तज्जिज्ञासाजनकत्वेनोपयुज्यते । व्याप्तिस्मरणादिकं चैतैश्चतुर्भिरपि प्रकारैर्भवदनुभूयते[2] । तत् किमनेन नियमेन ॥

[3]सम्भवन्ति चान्येऽपि प्रकाराः । पर्वतोऽग्निमान् धूमवत्त्वात् महानसवदिति वा । धूमवान् पर्वतोऽग्निमानिति हेतुगर्भं पक्षवचनं वा । विवादेनैव प्रतिज्ञासिद्धौ कुतः पर्वतोऽग्निमानिति प्रश्ने धूमवत्त्वादिति हेतुमात्रं वा ।

पर्वतस्याग्निमत्त्वे किं प्रमाणमिति पृष्टे[4] धूमवत्त्वमिति

---

१. '-व्याप्त्यादेश्च जिज्ञासा-' त.

२. वेदे.– अनुभूयत इति । अयं भावः । मीमांसकादीनां स्वस्वनियमानुसारेण त्र्यवयवद्व्यवयवप्रयोगे पञ्चावयवनियमवादिनां नैयायिकादीनां व्याप्त्यादिमल्लिङ्गोपस्थितिर्भवति न वा । नेति पक्षे नैयायिकादिर्मीमांसकादीन्न निराकुर्यात् । तदुक्तलिङ्गाबोधात् । एवं मीमांसकादयोऽपि न तान्निराकुर्युः । तदुक्तलिङ्गाबोधात् । प्रत्युत परस्परं स्वस्वावयवनियमसंरक्षणायैतेषां कथान्तरारम्भः स्यात् । तत्राप्युक्तरीत्या परस्परमबोधे स्वस्वावयवनियमसमर्थनानुपपत्तिरिति वादिप्रतिवादिनोर्मूकीभाव एवाऽपद्येत । तस्मात्समयबन्धानुसारेण स्वस्वरीत्या प्रयोगे परस्परं बोधो भवतीत्याद्य एव पक्षोऽङ्गीकार्यः । एवं तर्हि पञ्चावयवादिनियमाभावेऽपि व्याप्त्यादिमल्लिङ्गबोधोऽनुभूयत इति सर्वैरङ्गीकृतत्वान्न तन्नियमो युक्त इत्यर्थः । पृ.सं- २८८.

३. 'युक्तिः प्रतिज्ञारूपा च हेतुदृष्टान्तरूपिका । तथोपनयरूपा च परा निगमनात्मिका ॥'(राघ. कृतभावबोधोदाहृता ब्रह्मतर्कस्मृतिः पृ.सं- २८४)

४.'प्रश्ने' – त.

**लिङ्गोक्तिमात्रं वा । धूमवन्महानसवत् पर्वतोऽग्निमानिति सप्रतिज्ञं हेतुगर्भं दृष्टान्तवचनं वा[१] । अग्निव्याप्यो[२] धूमोऽत्र पर्वतेऽस्तीत्युपनयो वा । व्याप्त्यादिमद्धूमवत्त्वात् पर्वतोऽग्निमानिति निगमनं वेति । [३]सांव्यावहारिका[४]श्चैते प्रकाराः सर्वेषु शास्त्रेष्वित्येवंप्रकारमनुमानमिति ॥[५]**

**(भा.च.)** बौद्धा आहुरिति शेषः । उदाहरणोपनयद्वैविध्यस्यापि अनुमित्युपयोगिव्याप्तिद्वैविध्यावष्टम्भेनैवोदाहरणोपनयद्वैविध्यस्य पराभिप्रेतत्वादुक्तव्याप्तिद्वैविध्यनिराकरणेनैवोदाहरणोपनयद्वैविध्यं निराकृतमित्यर्थः । **नियमानुपपत्तेश्चेति** ॥ परस्य पक्षे व्याप्तिविशिष्टलिङ्गप्रतीत्यर्थं पञ्चाप्यवयवा अपेक्षिता इत्यवयवनियमानुपपत्तेश्चेत्यर्थः ॥

ननु कथं नियमानुपपत्तिः ? परस्य पर्वते वह्निसन्देहे तत्र वह्निप्रमासम्पादनाय पक्षे व्याप्तिविशिष्टलिङ्गज्ञानं सम्पादनीयम् । तत्र प्रथमं साध्योपस्थित्यभावे हेत्वाकाङ्क्षाया अनुदयात् साधनीयार्थोपस्थित्यर्थं प्रतिज्ञा तावदभ्युपेया । कस्माद् ज्ञापकादित्याकाङ्क्षायां धूमवत्त्वादिति हेतुवाक्यमुपेयम् ॥

---

१.**'प्रतिज्ञाहेतुगर्भं दृष्टान्तवाक्यं वा'** – त.

२.**'अग्निना व्याप्तो'**– त.

३.**'सांव्यावहारिकैः'**इति मुद्रितपुस्तकपाठः ।

४. **वेदे.**– सांव्यावहारिका इति । प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणमित्यादि तत्र तत्र शास्त्रे परीक्षकैर्व्यवहृताः सर्व एवैते प्रकारा इत्यर्थः । तथा च परीक्षकव्यवहारातिक्रम एव न्यूनाधिकमुद्भावनीयमिति भावः । **पृ.सं- २९१.**

५.**'इत्येवं प्रकरणानुमानम्'** ज.

कथमस्य ज्ञापकत्वमिति जिज्ञासायां ज्ञापकत्वोपयुक्त-व्याप्त्युपपादनायोदाहरणमुपेयम् । महानसे वह्निव्याप्तधूमसद्भावेऽपि किमित्याकाङ्क्षायामुपनयवाक्यमुपेयम् । बाधप्रतिरोधशङ्कायां निगमन-मिति पञ्चानामप्यवयवानां जिज्ञासाक्रमेणाभ्युपेयत्वादित्यत आह– **नहीदमिति** ॥ **आगमतयेति** ॥ आप्तवाक्यतयेत्यर्थः । **आकाङ्क्षा-द्यनुसारेणेति** ॥ आदिशब्दाद् बाधप्रतिरोधशङ्कानुसारेणेत्यर्थः । पञ्चावयवादिनियमः स्यादिति आदिशब्दादवयवानां पौर्वापर्यनियमो ग्राह्यः ॥

तथा च ज्ञापकादिजिज्ञासायाः ज्ञापकाद्युक्तिसाध्यतत्तदर्थनिश्चय-निवर्त्यत्वादर्थनिश्चायकत्वस्याऽऽप्तवाक्यतया बोधकत्व एवोपपत्तेराप्त-वाक्यतया बोधकत्वाभावे जिज्ञासानुसारेणावयवनियम इति पक्षो न युक्त इति भावः । **तत्स्मारकत्वादिनेति** ॥ आदिशब्दात् क्वचित् संस्कारोद्बोधकत्वं ग्राह्यम् ॥

**चतुर्भिरपि प्रकारैरिति** ॥ पञ्चावयवा इत्येकः प्रकारः[१] । उदाहरणान्तास्त्रय एवावयवा इत्यपरः । उदाहरणाद्या निगमनाद्यास्त्रय एवावयवा इति तृतीयः । उदाहरणोपनयौ द्वावेवेति बौद्धा इति चतुर्थः । इति चतुर्भिरपि प्रकारैरित्यर्थः । निगमनं चेत्यन्येऽपि प्रकाराः सम्भवन्तीति पूर्वेणान्वयः । एतेषां प्रकाराणां सकलशास्त्रीयव्यवहार-सिद्धत्वं चास्तीत्याह– **सांव्यावहारिकाश्चेति** ॥

नचावयवनियमाभावे न्यूनत्वादिदोषो न स्यादिति वाच्यम् । अवश्यवक्तव्यस्यैकदेशमात्रवचनमित्यनेन एतच्छङ्कानिरासादिति[२] ।

---

१.**'एकप्रकारः'** - ख. २.**'इत्यपिनैवैतच्छङ्कानिरासादिति'**- क.

**एवम्प्रकारमिति** ॥ एवं प्रकारो यस्य तद् एवम्प्रकारम् । निर्दोषो-पपत्तित्वकार्यानुमानत्वाद्यस्मदुक्तप्रकारोपेतं, न तु परोक्तप्रकारमिति भावः ॥

*(अनुमानदोषनिरूपणम्)*

**(प्र.प.)अथ निर्दोषोपपत्तिरनुमानमित्युक्तम् । के तत्रोप-पत्तिदोषाः । यत्सद्भावे लिङ्गाभिमतं ज्ञानमेव न जनयति[1], संशयविपर्ययौ वा करोति ते दोषाः ।**

**ते द्विविधाः अर्थवचनदोषभेदात् । तत्र [2]साक्षादुपपत्तेरेव दोषौ विरोधासङ्गती । तद्द्वारा वचनस्यापि । वचनदोषौ न्यूनाधिक्ये। वचनद्वारेणार्थस्यापि ।**

**तत्र योग्यताभावो विरोधः । आकाङ्क्षाविरहोऽसङ्गतिः । अवश्यवक्तव्यस्यैकदेशमात्रवचनं न्यूनं सन्निध्यभावविशेषः । [3]आकाङ्क्षितस्यैवान्येन कृतकार्यस्य वचनमाधिक्यम् ॥**

---

१. **आद.**–ज्ञानं न जनयतीति ॥ पूर्वमसिद्धं साध्यविषयकज्ञानं न जनयति । तथा च प्रकृतहेतुनिष्ठप्रकृतसाध्यविषयकसफलप्रमाजननानुकूलशक्त्यभावप्रयोजकत्व-मुपपत्तिदोषत्वमिति फलितम् । बाधितादावसदर्थविषयकत्वेन व्यभिचार्यादौ व्याप्त्यभावेनासिद्ध्यादौ समुचितदेशवृत्तित्वाभावेन सिद्धसाधकादौ सिद्धार्थ-विषयकत्वदोषेण साध्यविषयकसफलप्रमाजननानुकूलशक्त्यभावोऽस्ति । तत्प्रयोजकत्वं बाधादिदोषेष्वक्षतमिति लक्षणसमन्वयः । प्रयोजकत्वं च ज्ञापकत्वम् । नातो स्वरूपसम्बन्धप्रयोजकत्वाभावेऽपि न दोषः । पृ.सं- २९५.

२. **'साक्षादेवोपपत्तिदोषौ'** त.

३. **'आकाङ्क्षितस्याप्यन्येन'** इति भावचन्द्रिकाटिप्पण्यनुसारी पाठः शुद्ध इति सम्भाव्यते । तथैव ज. पुस्तकपाठोऽपि ।

*(अनुमानदोषविभागः)*

एते च विरोधादयो द्विविधाः । समयबन्धप्रश्नस्वपक्षसाधन-परपक्षनिराकरणात्मककथारूपसाधारणा अनुमाननिष्ठाश्च । तत्रानुमाननिष्ठास्तावदुच्यन्ते ।

त्रिविधोऽनुमानविरोधः । प्रतिज्ञाहेतुदृष्टान्तविरोधभेदेन । तत्र प्रमाणविरोधः स्ववचनविरोध इति द्विविधः प्रतिज्ञाविरोधः । प्रमाणविरोधोऽपि द्वेधा । प्रबलप्रमाणविरोधः समबलप्रमाण-विरोधश्चेति । हीनबलस्यानेनैव बाधितस्याकिञ्चित्करत्वात् । प्राबल्यं च[1] द्विविधम् । बहुत्वेन स्वभावेन च । स्वभावश्चोपजीव्यत्वं निरवकाशत्वमित्यादिरूपः ।

प्रत्यक्षादिविरोधभेदेन द्वावपि प्रत्येकं त्रिविधौ । समबलानुमानविरोधोऽपि द्वेधा । तेनैवानुमानेनानुमाना-न्तरेण चेति ।

स्ववचनविरोधोऽपि द्विविधः । अपसिद्धान्तो जातिरिति । तत्र पूर्वाचार्यैर्यत् प्रामाणिकतयाऽभ्युपगतं तद्विरुद्धाङ्गीकारोऽ-पसिद्धान्तः । पूर्वाचार्यवचनस्यापि स्वयमङ्गीकृतत्वेन स्ववचनत्वात् ॥

स्ववचन एव व्याहतिर्जातिः । सा त्रिविधा । [2]एककर्तृके वाक्ये पदयोरवान्तरवाक्ययोर्वा मिथो व्याघातः, स्वक्रियाविरोधः, स्वन्यायविरोधश्चेति ।

---

१. ज.पुस्तके 'च' शब्दो नास्ति ।  २. 'एकवक्तृके' ज.

**हेतुविरोधोऽपि द्विविधः। असिद्धिरव्याप्तिश्चेति। समुचितस्थले लिङ्गस्याप्रमितिरसिद्धिः। अव्याप्तिस्त्रिविधा। लिङ्गस्य साध्येन तदभावेन च सम्बन्धः। साध्यसम्बन्धाभावे[1] सति तदभावेनैव सम्बन्धः, उभयसम्बन्धाभावश्चेति।**

**दृष्टान्तविरोधोऽपि द्विविधः। साध्यवैकल्यं साधनवैकल्यं चेति।**

**हेत्वादौ स्ववचनविरोधोऽसिद्ध्यादिनैव सङ्गृहीत इति नोक्तः। एवमसङ्गतिन्यूनाधिक्यान्यपि प्रतिज्ञाहेतुदृष्टान्तसम्बन्धभेदेन प्रत्येकं त्रिविधानि। एतेषामुदाहरणानि कथारूपसाधारणान् विरोधादींश्च परोदीरितनिग्रहस्थानानामेतेष्वेवान्तर्भावं वदन्तो दर्शयिष्यामः।**

**(भा.च.)** इदानीमुपपत्तिदोषनिरूपणायासङ्गतिशङ्कां परिहरति- **अथेति** ॥ पृच्छति- **के तत्रेति** ॥ उत्तरमाह- **यत्सद्भाव इति** ॥ अत्र यत्सद्भावे लिङ्गज्ञानं[2] न जनयति तदुपपत्तिदोषा[3] इत्युक्ते पर्वतो अग्निमान् प्रमेयत्वादित्यादावनैकान्तिकस्थले व्यभिचारादिदोष-सद्भावेऽपि लिङ्गज्ञानं[4] न जनयतीति वक्तुमशक्यत्वादव्याप्तिर्भवत्येवेति [5]नाव्याप्तिः तेषामव्याप्तत्वेनालिङ्गत्वात्। तदर्थं लिङ्गत्वेनाभिमत-मित्युक्तम्। प्रमेयत्वादिकं तु व्याप्यत्वेनाभिमतम् ॥

---

१.'**-सम्बन्धाभावेऽपि**' च.

२.'**लिङ्गं ज्ञानम्**' इति पाठेन भाव्यमिति भाति।

३.'**ते उपपत्तिदोषाः**' इति पाठः सम्भाव्यते।

४.'**लिङ्गं ज्ञानम्**' इति पाठेन भाव्यमिति भाति।

५.'**न व्याप्तिस्तेषाम्, अव्याप्तत्वेनालिङ्गत्वात्**' इति पाठः सम्भाव्यते।

यत्सद्भावे ज्ञानं न जायते त उपपत्तिदोषा इत्युक्तेऽबोधकत्वादि-दोषसद्भावे शब्दाद् ज्ञानं न जायत इत्यबोधकत्वादीनामप्युपपत्तिदोषत्वं स्यात् । अतो लिङ्गाभिमतमित्युक्तम् ॥

धूलीपटले धूमभ्रमानन्तरम् अयं वह्निमान् धूमवत्त्वादित्यनुमाने स्वरूपासिद्धिदोषसद्भावेऽपि लिङ्गत्वेनाभिमतमनुमेयज्ञानं जनयतीत्यव्याप्तिवारणाय ज्ञानपदं प्रमापरं व्याख्येयम् ॥

यत्सद्भावे लिङ्गाभिमतस्य प्रमानुत्पादकत्वं तत्त्वमुपपत्ति-दोषत्वमित्येव लक्षणम् । प्रमानुत्पादकत्वं च क्वचिद् ज्ञानस्यैवानुत्पत्ति-मादाय क्वचित् संशयादिजनकत्वमादाय पर्यवस्यतीति भावेन ज्ञानमेव जनयति[1], संशयविपर्ययौ वा करोतीत्युक्तम् । अन्यथा संशयादि-जनकत्वस्य लक्षणानुप्रवेशेऽव्याप्तिप्रसङ्गः स्यादिति ज्ञेयम्[2] । दृष्टान्तासिद्धिसाध्यवैकल्यादिदोषसङ्ग्रहायोपपत्तिसम्बन्धित्वमेव लक्ष्यतावच्छेदकमिह विवक्षितम् । न तूपपत्तिनिष्ठदोषत्वमिति ज्ञेयम् ।

**दोषा इति** ॥ उपपत्तिसम्बन्धिन इति शेषः । **अर्थेति** ॥ अर्थाश्च वचनानि च तद्दोषाणां भेदस्तस्मादित्यर्थः । तथा चार्थनिष्ठदोषवचन-निष्ठदोषा इति द्विप्रकारा इत्यर्थः ॥

अर्थवचनदोषाणामर्थवचननिष्ठत्वोक्त्या तत्तन्मात्रदोषत्वमेवेति शङ्का-यामाह— **तत्र साक्षादिति** ॥ **विरोधासङ्गती उपपत्तेरेव** उपपत्तिरूपार्थस्यैव **साक्षाद्** द्वारमनपेक्ष्य दोषावित्यर्थः । **तद्द्वारा** विरुद्धार्थद्वारा । **वचनदोषा-**

---

१. **'ज्ञानमेव न जनयति'** इति पाठः सम्भाव्यते ।

२. *प्रमाजनकत्वाभावश्च ज्ञानाजनके, संशयविपर्ययजनके च लिङ्गाभिमतेऽनुगतः। तेन नाननुगम इति भावः ।*

**विति** ॥ अत्र साक्षात्पदमनुषञ्जनीयम् । एवेत्यवधारणं च । तथा च न्यूनाधिक्ये साक्षाद् द्वारमनपेक्ष्य वचनयोरेव दोषौ वचनदोषावित्यर्थः ॥

**योग्यताभाव इति** ॥ श्रुतपदार्थानामन्वयाभाव इत्यर्थः ॥ **आकाङ्क्षाविरह इति** ॥ **आकाङ्क्षा** = जिज्ञासा, **तद्विरहः** तदविषयत्वमित्यर्थः । निर्दोषोपपत्तिरनुमानमित्यत्र निर्दोषोपपत्तिशब्देन स्वार्थपरार्थानुमानयोरुभयोरपि विवक्षितत्वाद् वचनदोषग्रहणं नासङ्गतमिति ध्येयम् ॥

**अवश्यवक्तव्यस्येति** ॥ एकदेशवचनं न्यूनमित्युक्ते वृक्षादियुक्तः पर्वतोऽग्निमान् इति प्रयोगापेक्षया पर्वतोऽग्निमानिति प्रयोगेऽप्येकदेशवचनमात्रसत्त्वान्न्यूनता स्यात् । अतस्तत्परिहारार्थमवश्यवक्तव्यस्येत्युक्तम् ॥

नन्वेवमपि पर्वतोऽग्निमान् इत्युक्त्वा यामानन्तरं धूमवत्त्वादिति प्रयुक्ते तत्र न्यूनता नाम वचनदोषो न स्यात् । एकदेशमात्रवचनस्य तत्राभावात् । नह्यसौ प्रयोगो निर्दोषः । असहोच्चारितस्यापि वचनदोषत्वात् । अतो वचनदोषौ द्वाविति कथमिष्यते ? इत्याशङ्क्यासहोच्चारितत्वमपि न्यून एवान्तर्गतमिति भावेनावचनशब्दार्थमाह-**सन्निध्यभावविशेष इति** ॥

तथा चैकदेशमात्रवचनं हि एकदेशस्यावचने सत्येकदेशवचनरूपम्, अवचनपदेन च सर्वथाऽवचनं सहावचनं चेत्युभयं विवक्षितम् । असहोच्चारणस्थले सर्वथाऽवचनस्याभावात् । किन्तु सहावचनरूपसन्निध्यभाव एव ॥

सहवचनं हि सन्निधिः । अयं चैकदेशावचनशब्दार्थभूतः सन्निध्यभावः ।

सर्वात्मनैकदेशावचनस्थलेऽनुगतः । सर्वथाऽवचनस्थलेऽपि सहावचनस्य सत्त्वात् । असहोच्चारणस्थले तु सहवचनाभावः सुप्रसिद्ध एव । एकदेशवचनं त्वस्त्येवेत्येकदेशमात्रवचनस्य विलम्बितसमग्रप्रयोगेऽपि सत्त्वात् तन्निष्ठसहावचनं न्यून एवान्तर्गतमिति भावः ।

अत्र सन्निध्यभावविशेष इति विशेषग्रहणं तु पवनव्याधिमता ईषदसहोच्चारितेऽपि समग्रप्रयोगेऽसहोच्चारणलक्षणसन्निध्यभावस्य सत्त्वान्न्यूनं नाम वचनदोषः स्यात् । [1]अतस्तद्व्यावृत्त्यर्थं सन्निध्यभावविशेष इत्युक्तमिति ज्ञेयम् ॥

**आकाङ्क्षितस्यापीति**[2] ॥ सङ्गतस्यापीत्यर्थः । सङ्गतस्य वचनमाधिक्यमित्युक्ते पर्वतोऽग्निमान् धूमवत्त्वादिति प्रयोगेऽप्याधिक्यं स्यादतस्तद्व्यावृत्त्यर्थमन्येन कृतकार्यस्येति विशेषणम् । शब्दोऽनित्यः कृतकत्वाद् घटवत् स चाभिधेयः, इति प्रयोगे अन्येन कृतकार्यत्वस्य सत्त्वादसङ्गतस्याऽप्याधिक्यं स्यादतः आकाङ्क्षितस्यापीत्युक्तम् ॥

**एते चेति** ॥ चत्वार्यङ्गानि तत्रापि अनुमानदोषत्वेनोक्ता इत्यर्थः । कथारूपसाधारणा इति कथाङ्गसाधारणा इत्यर्थः । तथा च वादजल्पवितण्डात्मककथानां समयबन्धः, प्रश्नः, स्वपक्षसाधनं, परपक्षनिराकरणं चेति चत्वार्यङ्गानि, तत्रापि विरोधादयश्चत्वारो दोषाः प्रवर्तन्त इति ज्ञापनाय कथारूपसाधारणा इत्युक्तम् । अनुमाननिष्ठाश्चेति द्विविधा इति सम्बन्धः । **तत्र** द्विविधविरोधादिषु मध्ये ।

अत्रानुमानशब्देन **'अनुमीयतेऽनेन'** इति व्युत्पत्त्या प्रतिज्ञाहेतुदृष्टान्ताः गृह्यन्ते । अनुमानदोषत्वेन परोक्तबाधानामसङ्ग्रह-

१. **'अतद्व्यावृत्त्यर्थम्'** ख. पाठः ।

२. मुद्रितमूलपुस्तके **'आकाङ्क्षितस्यैव'** इति मूलपाठो दृश्यते ।

शङ्कावारणाय विरोधादिष्वेवान्तर्भावं वक्तुं तद्विभागमाह– **त्रिविध इत्यादिना** ॥ अत्र प्रतिज्ञापदेन पक्षोऽपि गृह्यते । हेतुपदेन लिङ्गं च, दृष्टान्तपदेन तद्वचनं चेति ज्ञेयम् ॥

**विरोधादीनामुभयदोषत्वादिति** ॥ प्रतिज्ञायां विरोधः प्रतिज्ञाविरोधः । एवमुत्तरयोरप्यर्थोऽनुसन्धेयः ॥

ननु प्रतिज्ञायां हीनबलवत्प्रमाणविरोधः कुतो वाऽनुमानदोषत्वेन नोक्त इत्यत आह- **हीनबलस्येति** ॥ अकिञ्चित्करत्वादुपपत्तौ प्रमानुत्पादकत्वसंशयादिजनकत्वदोषकार्याणां मध्ये किञ्चित्कार्यकरत्वाभावाद् हीनबलविरोधस्त्वदोष एवेति शेषः ॥

प्रबलप्रमाणविरोधादिभेदेन विरोधद्वैविध्यम्[1] उक्तम् । तत्र प्रमाणानां प्राबल्यं नाम किमित्याकाङ्क्षायां विभागपूर्वकं तत्स्वरूपमाह– **प्राबल्यं चेत्यादिना** ॥ **बहुत्वेन** स्वरूपेण **स्वभावेन** स्वभावबलेन बहुत्वरूपं प्राबल्यं स्वभावरूपं प्राबल्यं चेति यावत् । **निरवकाशमित्यादीति** ॥ आदिशब्दाच्छुत्यादिकं ग्राह्यम् । **द्वावपीति** ॥ प्रबलप्रमाणविरोधः समबलप्रमाणविरोधश्चेति द्वावपि विरोधावित्यर्थः । **तेनैव हेतुना हेत्वन्तरेण चेति** ॥ शब्दः अनित्यः ऐन्द्रियकत्वाद् घटवत् । शब्दः नित्यः ऐन्द्रियकत्वाद् घटवद् इति तेनैव हेतुना, श्रावणत्वाच्छब्दत्ववदिति हेत्वन्तरेण चेत्यर्थः ॥

प्रमाणविरोधः स्ववचनविरोधश्चेति द्विविधः प्रतिज्ञाविरोध इत्यत्र स्ववचनविरोधशब्देन स्वेन प्रमाणतयाऽभ्युपगतं यद् वचनं तद्विरोध इति स्वाङ्गीकृतत्वमेव[2] वचनगतस्वीयत्वं विवक्षितम् ॥

---

१. **'विरोधे द्वैविध्यम्'** - क.    २. **'स्वीकृतत्वमेव'** - क.

विरोध इत्यत्रापि स्ववचनेन विरोधः, स्ववचन एव विरोध इत्यर्थद्वयं विवक्षितम् । उक्तस्वरूपं स्ववचनं तु पूर्वाचार्यकर्तृकं स्वकर्तृकं चेत्युभयरूपमिति भावेन स्ववचनविरोधविभागमाह– **स्ववचनविरोधोऽपि द्विविध इति ॥**

अनेन स्वकर्तृकवचनं स्ववचनमित्यप्यर्थो यदि तदा स्ववचनविरोधत्वस्यापसिद्धान्तेनानुगमः । तथा स्ववचनेन विरोध इत्येवार्थो यदि तदा स्वन्यायस्वक्रियाविरोधयोः स्ववचनविरोधानन्तर्भावः । स्ववचन एव विरोध इत्यर्थो यदि तदाऽपसिद्धान्ते स्ववचनविरोधत्याननुगम इत्यादि चोद्यमपास्तम् ॥

द्विरूपविरोधस्यासम्भवपरिहारायान्यतरत्वं विवक्षितमिति । एतदेवाभिप्रेत्य पूर्वाचार्यवचनस्यापि स्वाङ्गीकृतत्वेन स्ववचनत्वमुक्तमिति ज्ञेयम् ॥

**हेतुविरोधोऽपीति ॥** अत्र हेतुपदेन लिङ्गमात्रं विवक्षितम् । व्याप्तस्य हेतोः पक्षधर्मत्वप्रतीतिः सिद्धिस्तदभावोऽसिद्धिरिति परपक्षनिरासायाऽऽह- **समुचितस्थल इति ॥** अत्र प्रमित्यभावसङ्ग्रहाय प्रमितिः सिद्धिरित्युक्तम् । साधारणानैकान्तिकासाधारणानैकान्तिकानध्यवसितानामव्याप्तिलक्षणहेतुविरोध एवान्तर्भावं वक्तुमव्याप्तिविभागमाह- **अव्याप्तिस्त्रिविधेत्यादिना ॥**

**साध्येति ॥** तदभावेनैव सम्बन्ध इत्यवधारणार्थ एव साध्यसम्बन्धाभावे सतीत्यनेनोच्यत इति ज्ञेयम् । साध्यसम्बन्धे सति तदभावेन सम्बन्ध इत्यादिकं तु पक्षादन्यत्रेति ज्ञेयम् ॥

ननु प्रतिज्ञाहेतुदृष्टान्तभेदेन उक्तान् प्रतिज्ञादिगतविरोधानभिधाय

प्रतिज्ञायां स्ववचनविरोधं चाभिधाय हेतुरूपवचनदृष्टान्तवचनयोः स्ववचनविरोधः कस्मान्नोच्यत इत्यत आह- **हेत्वादाविति** ॥ हेतौ दृष्टान्तवचने वेत्यर्थः । **असिद्ध्यादिनैवेति** ॥ असिद्ध्यव्याप्तिसाध्य-वैकल्यसाधनवैकल्यदूषणैरित्यर्थः ॥

तथा च शब्दो नित्यश्चाक्षुषत्वादिति प्रयोगे चाक्षुषत्वं कथं स्वरूपासिद्धमिति प्रश्ने शब्दस्य श्रावणत्वात्, श्रावणं पक्षीकृत्य तत्र चाक्षुषत्वाङ्गीकारे स्वरूपासिद्धिरेवेत्युपपादनीयम् । एवमुपपादने तु श्रावणवाचकशब्दपदेन चक्षुर्जन्यज्ञानविषयत्वरूपचाक्षुषत्ववाचकहेतु-रूपवचनस्य च विरोधोऽप्युक्तो भवति ॥

तथा शब्दो नित्यः कार्यत्वादित्युक्ते व्याप्यत्वासिद्धोऽयं हेतुरित्युक्ते कथमत्र व्याप्त्यभाव इत्याशङ्कायां सकलकालवृत्तित्वं नित्यत्वं, कार्यत्वं नाम जन्यत्वं नित्यत्वाभावेनैव व्याप्तमिति वक्तव्यम् । तथा चाव्याप्त्युपपादनेनैव हेतुरूपवचनस्य विरोधोऽप्युक्तो भवति ॥

तथाऽनित्यो घटः द्रव्यत्वाद् यथा गगनमित्युक्ते दृष्टान्ते साध्यवैकल्ये चाभिहिते कथं साध्यवैकल्यमिति शङ्कायामाकाशस्य नित्यत्वादकार्यत्वमेवेत्युक्ते यथा गगनमिति दृष्टान्तवचने विरोधोऽ-प्युक्तो भवति । तथा शब्दो नित्यः कार्यत्वाद् यथा गगनमित्युक्ते दृष्टान्ते साधनवैकल्येऽभिहिते कथमिति शङ्कायामाकाशस्य नित्यत्वा-दकार्यत्वमेवेत्युक्ते यथा गगनमिति दृष्टान्तवचने विरोधोऽप्युक्तो भवतीति हेतुरूपवचने दृष्टान्तवचने च स्ववचनविरोधः ॥

लिङ्गेऽसिद्ध्यव्याप्तिलक्षणविरोधेन दृष्टान्ते साध्यवैकल्यसाधन-वैकल्यलक्षणविरोधेन सङ्गृहीतः असिद्ध्यादिदोषकथनेनैव वचन-विरोधोऽप्युक्त एवेति वचनविरोधः पृथङ् नोक्त इत्यर्थः ॥

नन्वनुमाननिष्ठत्वेनोक्तानां चतुर्णां विरोधादीनां मध्ये विरोध-स्वरूपविशेष एवोक्तः, न त्वसङ्गत्यादयो निरूपिताः । तत् कथमित्यत आह– **एवमिति** ॥ एतेषां विरोधादिचतुर्णां प्रतिज्ञाहेतुदृष्टान्त-गतानामुपपत्तिदोषाणामिति हेत्वाभासानामित्यर्थः ।

*(निग्रहस्थाननिरूपणम्)*

**(प्र.प.) न केवलमुपपत्तिदोषाणां विरोधादिभिः सङ्ग्रहः । किं नाम ? नैयायिकनिरूपिताशेषनिग्रहस्थानानां[१] वक्तृ-दोषाभ्यां संवादानुक्तिभ्यां युतानामेतेष्वेवान्तर्भावः[२] । ततश्च विरोधासङ्गती न्यूनाधिके संवादानुक्ती इति षडेव निग्रहस्थानानि । विप्रतिपन्नप्रमेयाङ्गीकारः संवादः । [३]परबोधनार्थस्यावश्यं वक्तव्यस्यावचनमनुक्तिः । [४]कथाया-मखण्डिताहङ्कारेण परेण परस्याहङ्कारखण्डनं [५]पराजयो निग्रह इति चोच्यते । तन्निमित्तं निग्रहस्थानम् ।**

---

१.**'-स्थानानामपि'** च.

२. च. पुस्तके **'एव'** इति नास्ति ।

३.**'परबोधार्थस्य'** इति भावचन्द्रिकानुसारी पाठः समीचीनः स्यात् ।

४. **राघ.–** निग्रहस्थानानीत्युक्तनिग्रहस्थानशब्दार्थमाह- कथायामिति । विचारगोचरानेककर्तृकवाक्यप्रबन्धः कथा, तस्यामित्यर्थः । **पृ.सं- ३११.**

५. **जना.–** पराजयहेतुर्निग्रहस्थानमिति नैयायिकग्रन्थान्तरविरोधपरिहारायाऽह । पराजयो निग्रह इति चेति । तथा च पराजयनिग्रहपदयोः पर्यायत्वान्न विरोध इति भावः । एतदेवोक्तं वरदराजेन ।

**'अखण्डिताहङ्कृतिना पराहङ्कारखण्डनम् ।**
**निग्रहस्तन्निमित्तस्य निग्रहस्थानतोच्यते ॥'** इति । **पृ.सं- ३१०.**

**अहङ्कारखण्डनं च स्वपक्षसाधनपरपक्षदूषणसङ्कल्पभ्रंशः । अत एव कथाबाह्यानि कथायामप्यपस्मारोन्मादादिदशापन्नानि [1]झटिति संवरणेन तिरोहितोद्भावनावसराणि पुरस्फूर्तिकानधिकृतोद्भावितानि च व्यवच्छिन्नानि । परोक्तस्ववक्तव्ययोरज्ञानं विपरीतज्ञानं वा निग्रहः । तल्लिङ्गं निग्रहस्थानमिति वा ॥**

---

१. **वेदे.**– झटिति संवरणेति । झटिति शीघ्रं संवरणं समीचीनाङ्गीकरणमित्यर्थ इत्याहुः । संवरणं स्वदोषाच्छादनमित्यप्याहुः । तिरोहितेति । तिरोहितो नाशित उद्भावनावसरो येषां तानीत्यर्थः । अयं भावः ।

**उक्तग्राह्याः केचिदन्येऽनुक्तग्राह्यास्तथा परे ।**
**उच्यमानदशा ग्राह्या इति कालस्त्रिधा मतः ॥**

इति परेण निग्रहस्थानोद्भावनकालस्त्रिविध उक्तः । तत्रोच्यमानकालोद्भावनीयमपशब्दादिकं प्रमादादुक्त्वा वादी झटिति संवरणं कुर्यात् तदा प्रतिवादिना तस्मिन् काले तन्निग्रहस्थानं न वाच्यम् । वादिकृतझटितिसंवरणेन तदुद्भावनावसरस्य नाशितत्वात् । दोषोक्तेः प्रागेव समाधानादिति । एवमुदयनोक्तं निग्रहस्थानशब्दप्रवृत्तिनिमित्तं लक्षणमुक्त्वाऽप्रतिपत्तिर्विप्रतिपत्तिर्वा निग्रहस्थानमिति गौतमसूत्रानुसारेण लक्षणान्तरमाह- परोक्तेति । अत्र तत्त्वाप्रतिपत्तिलिङ्गं निग्रहस्थानम् । तत्त्वाप्रतिपत्तिश्च द्विविधा । अज्ञानरूपाऽप्रतिपत्तिर्विपरीतज्ञानरूपा विप्रतिपत्तिश्चेत्यर्थो विवक्षितः । अन्यथाऽनुगताकारालाभात् । उभयानुगताप्रतिपत्तिस्ताभ्यां लक्ष्यत इति परोक्तेः । लिङ्गमित्येतत् कथं सूत्रलब्धमिति चेत् । 'सा च परबुद्धेरप्रत्यक्षत्वात् स्वरूपतो न निग्रहस्थानं भवतीति स्वज्ञापकं भवति' इति परैर्व्याकृतत्वात् । एवं सति प्रमाणलक्षणटीकाऽप्यनुकूलिता भवतीति द्रष्टव्यम् । **पृ.सं- ३१३.**

**(भा.च.)** संवादानुक्तिभ्यां युतेष्वित्युक्ते संवादानुक्ती किंलक्षणके इति जिज्ञासायामाह- **विप्रतिपन्नेति** ॥ अविप्रतिपन्नप्रमेयाङ्गीकारेऽतिप्रसङ्गवारणाय विप्रतिपन्नेत्युक्तम् । अवक्तव्यस्यावचनेऽतिप्रसङ्गवारणाय अवश्यवक्तव्यस्येत्युक्तम् । अवश्यवक्तव्यार्थकशब्दस्यापि पराबोधकत्वे तद्वचनेऽप्यनुक्तिरेवेति अवचनाभावादनुक्तिर्वेति शङ्कावारणाय परबोधार्थस्येत्युक्तम् ॥

संवादानुक्तियुतेषूपपत्तिदोषेष्वेव निग्रहस्थानानामन्तर्भाव इत्युक्तम्। कानि तानि परोदीरितनिग्रहस्थानानीति शङ्कायां तदवान्तरभेदमन्तर्भावं च वक्तुं निग्रहस्थानसामान्यलक्षणमाह– **कथायामिति** ॥ पराजयहेतुर्निग्रहस्थानमिति लक्षणमभिप्रेत्य पराजयशब्दार्थमाह– **कथायामित्यादिना** ॥ इदमेव निग्रहस्थानपदप्रवृत्तिनिमित्तमिति भावेनाऽह- **निग्रह इति चेति** ॥ स्थानपदस्य निमित्तत्वमर्थ इत्युक्तं भवति ॥

कथायामखण्डिताहङ्कारेणेत्यादिविशेषणप्रयोजनमाह- **अत एवेति** ॥ झटिति शीघ्रं संवरणेन आच्छादनेन तिरोहितः उद्भावनावसरो एषां तानि । पुरस्फूर्तिकाः आशुप्रतिभानवन्तः कथायामनधिकृताश्च तटस्था इत्यर्थः । परेणेत्युक्त्या तटस्थोक्तिर्व्यावर्त्यते ॥

[1]तत्त्वाप्रतिपत्तिलिङ्गं निग्रहस्थानमिति लक्षणान्तरमभिप्रेत्याऽह- **परोक्तेति** ॥

१. तत्त्वाप्रतिपत्तिलिङ्गनिग्रहेत्यादिमातृकापाठः ।

*(तार्किकोक्तनिग्रहस्थानप्रभेदनिरूपणम्)*

**(प्र.प.) तानि च ॥ १ ॥ प्रतिज्ञाहानिः ॥ २ ॥ प्रतिज्ञान्तरम् ॥ ३ ॥ प्रतिज्ञाविरोधः ॥ ४ ॥ प्रतिज्ञासन्न्यासः ॥ ५ ॥ हेत्वन्तरम् ॥ ६ ॥ अर्थान्तरम् ॥ ७ ॥ निरर्थकम् ॥ ८ ॥ अविज्ञातार्थम् ॥ ९ ॥ अपार्थकम् ॥ १० ॥ अप्राप्तकालम् ॥ ११ ॥ न्यूनम् ॥ १२ ॥ अधिकम् ॥ १३ ॥ पुनरुक्तम् ॥ १४ ॥ अननुभाषणम् ॥ १५ ॥ अज्ञानम् ॥ १६ ॥ अप्रतिभा ॥ १७ ॥ विक्षेपः ॥ १८ ॥ मतानुज्ञा ॥ १९ ॥ पर्यनुयोज्योपेक्षणम् ॥ २० ॥ निरनुयोज्यानुयोगः ॥ २१ ॥ अपसिद्धान्तः ॥ २२ ॥ हेत्वाभासश्चेति द्वाविंशतिः ॥**

**प्रतिज्ञाहानिः ॥ [१]तत्र येन यद् यथा साध्यत्वादिना[२] निर्दिष्टं तेन तस्य तथा परित्यागः प्रतिज्ञाहानिः । यथा पर्वतोऽग्निमान् प्रमेयत्वादित्युक्तेऽनैकान्तिकत्वेन च प्रत्युक्ते मा भूत् तर्हि पर्वतोऽग्निमानिति । अयं तु संवाद एव ॥**

**प्रतिज्ञान्तरम् ॥ प्रथममविशिष्टतयोक्ते[३] साध्यभागे पुनर्विशेषणप्रक्षेपः प्रतिज्ञान्तरम् ॥ प्रतिज्ञोदाहरणे प्रयोज्यभागो,**

---

१. **जना.**– तत्रेति ॥ तत्र कथायाम् । येन वादिना वा प्रतिवादिना वा यत् पक्षहेतुदृष्टान्तदूषणादीनामन्यतमं प्रथमनिर्दिष्टं तस्य दूषणसमुन्मेषणे कथानिर्वाहमपश्यता तेन वादिना परित्यागः प्रतिज्ञाहानिरित्यर्थः । एतदेवाऽह वरदराजोऽपि ।

**'कथायां यच्च पक्षादि येन निर्दिष्टमादितः ।**
**तस्य तेन पुनस्त्यागः प्रतिज्ञाहानिरिष्यते'** ॥ इति । पृ.सं-३२४.

२. च. पुस्तके **'साध्यत्वादिना'** इति पदं नास्ति ।

३. **'अविशेषितया'** इति भावचन्द्रिकानुसारी समीचीनः पाठः सम्भाव्यते ।

**निगमनं चेति साध्यभागः । यथा शब्दोऽनित्य इति प्रतिज्ञाते ध्वनिभिः सिद्धसाधनत्वोद्भावने वर्णात्मकः शब्दोऽनित्य इत्यादि ।**

**अत्र वक्तव्यम्[1] । किं पूर्वैव कथाऽनुवर्ततेऽथ कथान्तरम् । नाऽद्यः । एकस्य साधनस्य दूषणस्य वा स्थितौ भङ्गे वा कथायाः परिसमाप्तत्वात् । साधनान्तरोपन्यासस्यावसराभावाद् व्यर्थत्वात् । न चेदं पूर्वोक्तमेव । तथात्वे पूर्वदूषणेनैव दुष्टत्वप्रसङ्गात् । न द्वितीयः । तथा सति प्रथममेव विशिष्टस्योपात्तत्वेन प्रतिज्ञान्तराभावात् । वादे तु कथैक्येऽपि न निग्रहस्थानम् । शङ्कानिवृत्तिपर्यन्तं प्रतिवक्तव्यत्वात् ।**

**सत्यम् । निवृत्तयोरपि जल्पवितण्डयोः पुनर्विशेषणं प्रक्षिपतः को दोष इति चेत् । [2]असङ्गत्यादिकमिति ब्रूमः । तदपि कथाबाह्यत्वान्न निग्रहस्थानम् ॥**

**(भा.च.)** तेषु मध्ये उक्तविधपरित्यागः प्रतिज्ञाहानिः प्रतिज्ञाहानिशब्दाभिधेय इत्यर्थः । कथायां यच्च पक्षादि येन निर्दिष्टमादितः तस्य तेन परित्याग प्रतिज्ञाहानिरुच्यत इति परोक्तलक्षणवाक्यं व्याचष्टे– **कथायामिति** ॥ येन वादिना प्रतिवादिना वा यत् पक्षलिङ्गदृष्टान्तस्वरूपं येन साध्यत्वादिना, पक्षः येन साध्यत्वेन साधनार्हत्वेन रूपेण, लिङ्गं येन लिङ्गत्वेन प्रकारेण, दृष्टान्तः येन दृष्टान्तत्वेन प्रकारेण निर्दिष्टं तस्य निर्दिष्टस्य प्रकारस्य तेनैव परित्यागः अभावाभ्युपगमः प्रतिज्ञाहानिरित्यर्थः ।

१.**'प्रष्टव्यम्'** इति भावचन्द्रिकानुसारी समीचीनः पाठः सम्भाव्यते ।

२.**'असङ्गतत्वादिक-'** च.

अनेन पर्वतत्वप्रमेयत्वमहाह्रदत्वादिरूपाणां निर्दिष्टप्रकाराणाम् अपरित्यागात्[१] कथं प्रतिज्ञाहानिरिति चोद्यमपास्तम् । माऽस्त्वयं पर्वतोऽग्निमत्त्वेन साधनार्ह इति तटस्थकृतपरित्यागस्य प्रतिज्ञाहानित्व-वारणाय तेनेत्युक्तम् । अत्र तथाशब्दः परित्यागविवरणरूपः । यद्वा, तस्य पक्षादेः निर्दिष्टप्रकारवेषेण त्याग इत्यर्थः ।

**प्रमेयत्वादियुक्त इति ॥** प्रमेयत्वान्महाह्रदवदित्यर्थः[२]। **माभूदिति ॥** पर्वतः अग्निमान् माभूत् अग्निमत्त्वेन साध्यो माभूद् व्यभिचारित्वात् प्रमेयत्वलिङ्गं माभूत् । महाह्रदे साध्यसमानधर्माभावाद् दृष्टान्तो माभूदित्येतदादिशब्दार्थः । तथा च वह्निमानिति प्रतिज्ञायाः वह्निमत्त्वेन साधनार्हत्वमेवार्थ इति ज्ञेयम् ।

**'अविशेषितपूर्वोक्ते साध्यांशे दूषिते पुनः ।**
**तद्विशेषणनिक्षेपः प्रतिज्ञान्तरमिष्यते ॥'**

इति परोक्तलक्षणमनुवदति– **प्रथममिति ॥** प्रथममेवाविशेषण-विशिष्टोक्तेः प्रतिज्ञान्तरत्ववारणाय अविशेषितया[३] इत्युक्तम् ।

के ते साध्यभागाः ? इत्यत आह- **प्रतिज्ञेति ॥** व्यंशोऽनुमान-प्रयोगः । साध्यभागः साधनभागश्चेति । तत्र प्रतिज्ञा एकः साध्यभागः । उदाहरणे- प्रयोज्यभागो निगमनं चेत्येते साध्यभागा इत्यर्थः । वर्णात्मकः शब्दोऽनित्यः इत्यादीति ॥ पर्वतः कृष्णागरुवह्निमान् सुरभिधूमवत्त्वादिति प्रयोगे यत्र सुरभिधूमस्तत्र वह्निरित्युदाहरणकथने साध्यभागे तु न्यूनत्वेन प्रत्युक्ते[४], तर्हि यत्र

१.**'परित्यागात्'** क.पाठः । २. **'ह्रदवदित्युक्त इत्यर्थः ।'** क.
३.**'अविशिष्टतया'** इति प्र.प.मुद्रितमूलपुस्तकपाठः ।
४.**'प्रयुक्ते'** क.पाठः ।

सुरभिधूमस्तत्र कृष्णागरुवह्निरिति विशेषणप्रक्षेपः, तथा सुरभिधूमवत्त्वाद् वह्निमानिति निगमनकथने न्यूनत्वेन प्रत्युक्ते[1] कृष्णागरुवह्निमान् इति[2] विशेषणप्रक्षेपश्चाऽदिशब्दग्राह्यः ।

प्रतिज्ञान्तरं निग्रहस्थानमेव न भवतीति वक्तुं[3] पृच्छति- **अत्रेति** ॥ अत्र पूर्वप्रयोगे विशेषणप्रक्षेपे सति **प्रष्टव्यं**[4] प्रश्नः कर्तव्य इत्यर्थः ।

प्रश्नप्रकारमनुवदति– **किं पूर्वेवेति** ॥ **एकस्येति** ॥ अस्य दूषणस्येत्यनेनापि सम्बन्धः । तथा चैकस्य साधनस्य सपक्षसाधकानुमानस्य स्थितौ[5] अदूषिते भङ्गे दूषिते च सति तथा एकस्य दूषणस्य स्थितौ अपरिहारे भङ्गे च परिहारे चेत्यर्थः । तथा च जल्पवितण्डयोर्जयफलत्वात् । स्वोक्तानुमाने दूषिते सति जयपराजयविवेकसिद्धेः कृतकृत्या कथा नानुवर्तत इति भावः ।

ननु माऽस्तु कथानुवृत्तिः । तथाऽपि पूर्वानुमानाद् विशेषणविशिष्टमदुष्टमनुमानान्तरमेवोच्यत इत्यत आह- **साधनान्तरोपन्यासस्येति** ॥ अवसराभावात् कालप्रसक्त्यभावादित्यर्थः । तथा च पराजयानन्तरं किमनेन कृत्यमिति भावः । **न चेदमिति** ॥ विशेषणविशिष्टतयोक्तमिदं पूर्वोक्तं न चेदित्यर्थः ।

ननु जल्पवितण्डयोरननुवृत्तेः प्रतिज्ञान्तरस्य तत्र निग्रहस्थानत्वाभावेऽपि जयपराजयविवेकसाध्यप्रयोजनानुद्देश्यकवादकथायाः निवृत्त्य-

१. **'प्रयुक्ते'** क.पाठः ।

२. **'तथा'** इत्यारभ्य **'वह्निमान्'** इत्यन्तो भागः क. पाठे नास्ति ।

३. इदं पदं क. पाठे नास्ति ।

४. एतदनुसारेण प्र.प. मूलपाठे **वक्तव्य**मिति पदस्थाने **प्रष्टव्यमिति** पदेन भाव्यमिति भाति ।

५. **स्थिते** - क.पाठः ।

भावेन प्रतिज्ञान्तरं निग्रहस्थानं वादे भविष्यतीत्यत आह- **वादे त्विति ॥ न निग्रहस्थानमिति ॥** निग्रहस्थानत्वेन नोद्भाव्यमित्यर्थः।

तथा च प्रथममविशिष्टतयोक्त्यनन्तरं पुनर्विशेषणविशिष्टप्रयोक्तुः स्ववक्तव्ये तत्त्वाप्रतिपत्तिरनेन प्रतिज्ञान्तरेण ज्ञाप्यत एवेति कथं न निग्रहस्थानमिति चोद्यमपास्तम् ।

कुतो नोद्भावनीयम् इत्याशङ्क्य वादस्य तत्त्वनिर्णयफलकत्वेन जयपराजयविवेकाफलत्वात् । तत्त्वनिर्णयविरोधियावच्छङ्कानिवृत्ति-पर्यन्तं कथानुवृत्त्या कथाविच्छेदकत्वाभावाच्च प्रयोजनाभावान्नो-द्भावनीयं प्रतिज्ञान्तरमिति भावेनाऽऽह- **शङ्कानिवृत्तिपर्यन्तमिति ॥**

**सत्यमिति ॥** पूर्वैव कथाऽनुवर्तते न वेति पक्षद्वयेऽपि प्रतिज्ञान्तरं न निग्रहस्थानमित्येतत् सत्यमित्यर्थः ॥ **असङ्गत्यादिकमिति ॥** आदिशब्दात् कथासमाप्त्यनन्तरं विशिष्टप्रयोगस्यावक्तव्यतया वक्तव्य-स्यावचनमनुक्तिरित्यनुक्तिदोषो वा स्यादिति ज्ञेयम् ।

ननु कथायाः परिसमाप्तत्वात् पुनर्विशेषणप्रक्षेपेऽसङ्गत्यादिकं निग्रहस्थानं वा कथं स्यादित्यत आह- **तदपीति ॥**

**(प्र.प.) प्रतिज्ञाविरोधः ॥ एकवक्तृके वाक्ये पदाना-मवान्तरवाक्यानां वा मिथो व्याघातः प्रतिज्ञाविरोधः । यथा मे माता वन्ध्येति । द्रव्यं गुणव्यतिरिक्तमव्यतिरिक्तत्वादिति । अयं च प्रथमजातित्वात् स्ववचनविरोध एव ॥**

**प्रतिज्ञासन्न्यासः ॥ स्वोक्तापलापः प्रतिज्ञासन्न्यासः । यथा-ऽग्निरनुष्ण इत्युक्ते प्रत्यक्षविरोधे चाभिहिते ब्रवीति 'न मया-**

ऽग्निरनुष्ण इत्यभिहितः' इति । सोऽपि प्रमाणविरोध एव । उक्तेः प्रमितत्वात् ॥

हेत्वन्तरम् ॥ प्रथममविशिष्टतयोक्ते साधकांशे पुनरधिकप्रक्षेपो हेत्वन्तरम् । हेतुः, उदाहरणे प्रयोजकांशः, उपनयः, दूषणं चेति साधकांशः । यथा शब्दो नित्य ऐन्द्रियकत्वादित्युक्ते सामान्येनानैकान्त्येऽभिहिते सामान्यवत्त्वे सतीत्यादि ।

एतत् प्रतिज्ञान्तरनिरासेनैव निरस्तम् । प्रतिज्ञा-ग्रहणस्योक्तोपलक्षणत्वेन पृथङ् न वक्तव्यं च । अनुप-लक्षणत्वे तु उदाहरणान्तरादिकमपि पृथग् वाच्यं स्यात् । प्रतिज्ञापदेन साध्यांश एवोपलक्ष्यत इति चेन्न । वैयर्थ्यात् । अन्यथा प्रतिज्ञाहान्यादावपि किं विभागो न क्रियत इति ॥

**(भा.च.)**

'पदयोर्वाक्ययोर्वाऽपि[१] एकवक्तृकयोर्मिथः ।
व्याघातो निग्रहस्थानं स्यात् प्रतिज्ञाविरोधतः'[२]

इति [३]परोक्तलक्षणमनुवदति- **एकवक्तृक इति** ॥ पदयोर्मिथो विरोधस्योदाहरणमाह- **मे मातेति** ॥ अत्र स्ववाक्ये [४]अन्यवक्तृक-वाक्यविरोधस्य प्रतिज्ञाविरोधत्वशङ्कावारणाय एकवक्तृक इत्युक्तम् ।

**प्रथमजातित्वादिति** ॥ स्ववचन एव व्याहतिर्जातिः । सा त्रिविधा ।

---

१. **'वाऽयम्'** इति टिप्पण्यन्तरगतः पाठः ।

२. **'प्रतिज्ञाविरोधः' इति सर्वमातृकापाठः ।**

३. परोऽत्र वरदराजोऽभिप्रेतः ।

४. **'अन्यवक्तृकवाक्ये विरोधस्य'**घ.पाठः ।

एकवक्तृके वाक्ये पदानामवान्तरवाक्यानां वा मिथो विरोधः, स्वन्यायविरोधः, स्वक्रियाविरोध इति त्रैविध्येनोक्तजातीनां मध्ये प्रथम-जातित्वात् स्ववचनविरोधलक्षणप्रतिज्ञाविरोध एवान्तर्गत इत्यर्थः ।

**'स्वयमुक्तापलापेन प्रतिज्ञान्यासनिग्रहः'**

इति परोक्तं लक्षणमनुवदति– **स्वेति** ॥ स्वेनोक्तस्य प्रयोग-स्यापलापः अभाववचनमित्यर्थः । स्वेनानुक्तस्याभाववचनव्यवच्छेदाय स्वेनेत्युक्तम् । **अयमिति** ॥ प्रतिज्ञाविरोधविशेषप्रमाणविरोधे[अ]ऽन्तर्गत इत्यर्थः ।

ननु **'वह्निरनुष्णः'** इति प्रतिज्ञावाक्यं मया नोक्तमित्यभिधानात् प्रतिज्ञाविरोधविशेषप्रमाणविरोधे कथमस्यान्तर्भाव इत्यत आह-**उक्तेरिति** ॥ तथा च परेणापलापेऽप्युक्तेः प्रमितत्वात्[१] प्रमाणविरोधो लगत्येवेति भावः ।

**'हेत्वन्तरं साधकांशे दूषिते तद्विशेषणम्'**

इति परोक्तलक्षणमनुवदति- **प्रथममिति** ॥ प्रतिज्ञान्तरव्युदासाय साधकांश इत्युक्तम् । **सामान्यवत्त्वे सतीत्यादीति** ॥ पर्वतः कृष्णा-गरुवह्निमान् सुरभिधूमवत्त्वादिति प्रयोगे यो धूमवान् स कृष्णागरुवह्निमान् इत्युदाहरणकथने प्रयोजकांशे न्यूनतया प्रत्युक्ते[२] यः सुरभिधूमवान् सः कृष्णागरुवह्निमानिति प्रयोगः । तथा[३] तथाचायमित्यत्र कृष्णा-गरुवह्निव्याप्त[४]धूमवानयमिति कथने व्यभिचारेण च प्रत्युक्ते[५] कृष्णा-गरुवह्निव्याप्तसुरभिधूमवानयमिति प्रयोगश्चाऽदिशब्दार्थः ।

---

१.**'प्रतिमानत्वात्'** घ. पाठः । २.**'प्रयुक्ते'** घ. क. पाठः ।
३.**'तथा'** इति पदं घ. पाठे नास्ति । ४.**'व्याप्य'** घ. ।
५.**'प्रयुक्ते'** घ. क.। **अ.**'-प्रमाणविशेषे' इति सर्वमातृकापाठः।

**एतदिति** ॥ अत्र पूर्वैव कथाऽनुवर्तते, उत कथान्तर-मित्युक्तप्रतिज्ञान्तरनिरासन्यायेनेत्यर्थः । तथा च प्रतिज्ञान्तरवद् हेत्वन्तरं च निग्रहस्थानमेव न भवतीति भावः[१] ।

**प्रतिज्ञाग्रहणस्येति** ॥ प्रतिज्ञान्तरमित्यत्र पक्षवचनरूपप्रतिज्ञा-वाचकस्य प्रतिज्ञेति पदस्य उपलक्षणत्वेन हेतुवाक्योदाहरणवाक्यो-पनयवाक्यनिगमनवाक्यानामुपलक्षणत्वेनेत्यर्थः । तथा च प्रतिज्ञा-न्तराख्यनिग्रहस्थाने उदाहरणोपनयनिगमनान्तराख्यनिग्रहस्थाना-नामिव हेत्वन्तराख्यनिग्रहस्थानस्याप्यन्तर्भावाद्धेत्वन्तरं प्रतिज्ञा-न्तराख्यनिग्रहस्थानात् पृथङ् न वक्तव्यमित्यर्थः ।

ननु प्रतिज्ञान्तरमित्यत्र प्रतिज्ञेति पदं हेत्वाद्युपलक्षकं नाङ्गीक्रियत इत्यत आह- **अनुपलक्षणत्वे त्विति** ॥ **साध्यांश एवेति** ॥ न तु प्रयोजकभाग इत्यर्थः । **वैय्यर्थ्यादिति** ॥ साध्यभागः प्रयोजक-भागश्चेत्यंशद्वयमनुपलक्ष्य साध्यभाग एवोपलक्ष्यत इति नियमस्य निष्प्रयोजकत्वादित्यर्थः ।

प्रयोजनाभावेऽपि साध्यभाग एव लक्ष्यत इति वदन्तं प्रत्याह - **अन्यथेति** ॥ प्रतिज्ञाहानिः, प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यास इति त्रिषु निग्रहस्थानेषु प्रतिज्ञापदेन हेतूदाहरणोपनयनिगमनेषु साध्यभाग-मुपलक्ष्य प्रतिज्ञान्तरं हेत्वन्तरमिति विभागवत् प्रतिज्ञाहानिः हेतुहानिरिति रूपेण प्रतिज्ञाविरोधो हेतुविरोध इति रूपेण, प्रतिज्ञासन्न्यासो हेतुसन्न्यास इति रूपेण, विभागः कस्मान्न क्रियत इत्यर्थः ।

---

१. तस्मान्नास्य कुत्रचिदन्तर्भावो वाच्यः ।

तथा च प्रयोजनाभावेऽपि साध्यांश एवोपलक्ष्यत इति वदता प्रतिज्ञाहान्यादिस्थलेऽपि हेत्वादिसाध्यभागमेवोपलक्ष्य इत्थमेव विभागः कर्तव्य इति भावः ।

**(प्र.प.) अर्थान्तरम् ॥ प्रकृतानुपयुक्तान्वितोक्तिरर्थान्तरम् । यथा शब्दो नित्यः प्रमेयत्वादित्यत्र प्रमेयत्वं हेतुः । हेतुशब्दश्च हिनोतेर्धातोस्तुन्प्रत्यये कृते सति कृदन्तं पदमित्यादि । इदमनाकाङ्क्षितत्वादसङ्गतिरेवेति ॥**

**निरर्थकम् ॥ अवाचकपदप्रयोगो निरर्थकम् । यथा शब्दो नित्यः कचटतपानां जबगडदत्वादित्यादि[१] । इदं त्वनुक्तिरेव ॥**

---

१.जना.– इत्यादीत्यादिशब्देन लिङ्गविभक्तिविपर्यासः कृत्तद्धितसमासाख्यात-विपर्यासः संस्कृतभाषयोपक्रम्य भाषान्तरेण वचनमित्यादेर्ग्रहणम् । कथञ्चिदज्ञापकत्वात् कथमेतन्निग्रहस्थानमिति चेन्मैवम् । न हि कथञ्चिज्ज्ञापकत्वं शब्दधर्मः । प्रकरणादिनैव तत्र ज्ञानोदयात् । भाषान्तरसङ्करोऽपि समसमयत्वाभावे निग्रहस्थानम् । अन्यथा ज्ञानसङ्गूहनार्थं स्वभाषया प्रत्यवतिष्ठमानं प्रति तदनभिज्ञस्योत्तराभावप्रसङ्गात् । इत्याशङ्क्य समाहितं प्रमाणलक्षणटीकायाम् । वरदराजेनैवमाशङ्क्य मैवं मीमांसकादीनामपि वाचकावाचकविभागस्य सिद्धत्वात् । यस्याप्ययमसिद्धस्तस्यापि समानपदैर्वक्तव्यम् । अन्यथा स्वाज्ञानसंवरणार्थं स्वभाषया प्रत्यवतिष्ठमाने दाक्षिणात्ये तूष्णीम्भाववदाचरणमार्यस्येत्यज्ञानमेवावशिष्यत इति । न च दुर्ज्ञानं समानसमयत्वम् । परबुद्धेरप्रत्यक्षत्वादिति वाच्यम् । प्रथमत एवोभयसिद्धव्याकरणादिव्यवहाराङ्गीकारेण लिङ्गविपर्यासादीनां समान-समयत्वाभावनिश्चयोपपत्तेरिति समाहितम् ॥ पृ.सं - ३३६.

अविज्ञातार्थम् ।। [१]त्रिवारमुक्तेऽपि परिषत्प्रतिवादिभ्याममविज्ञातार्थवाचकपदमविज्ञातार्थम् । यथा काश्यपतनयाधृतिहेतुरयं त्रिणयनतनयासनसमाननामधेययुक्तः[२] । तदूध्वजवत्त्वादित्यादि । इदमप्यनुक्तिरेव ।।

अपार्थकम् ।। [३]अनन्वितवाचकपदादिप्रयोगोऽपार्थकम् । यथा कुण्डमजाजिनं दशदाडिमानि षडपूपा इत्यादि । इदं च स्फुटमसङ्गतम् ।।

अप्राप्तकालम् ।। क्रमविपर्यासोऽप्राप्तकालम् । यथा कृतकत्वादनित्यः शब्द इत्यादि । इदं किञ्चिन्न निग्रहस्थानम् ।

---

१. **जना.**– त्रिवारमिति । अत्र त्रिवारमिति लोकप्रमितमर्यादयोक्तम् । वस्तुतस्तु यावद्वारमुक्ते परिषत्प्रतिवादिनोरन्वयबोध उत्पत्तुमर्हति तावद्वारम् । तदपि न लक्षणशरीरानुप्रवेशेन । किन्तु सकृदुच्चारणमात्रेण विज्ञातार्थस्य कथं दोषत्वमिति शङ्कानिरासार्थम् । लक्षणं तु तत्काले परिषदविज्ञातमहावाक्यार्थसंसर्गबोधकपदप्रयोगोऽविज्ञातार्थमिति विवक्षितम् । तत्काले परिषदविज्ञातो यो महावाक्यार्थभूतः संसर्गस्तद्बोधकपदप्रयोगत्वमित्यर्थः । प्रतिवादीति विशेषणमपि न लक्षणशरीरान्तर्गतम् । परिषद्ग्रहणेनैव तत्प्रयोजनसिद्धेः । अत्र तत्काल इत्यनेन कालान्तरे कश्यपतनयेत्यादेरेव बहुपर्यालोचनया महावाक्यार्थबोधसम्भवेनासम्भवनिरासः । **पृ.सं- ३३८.**

२. एतदनन्तरं मुद्रितपुस्तके **'इत्यादि'** इति पठ्यते । तत् कुत्रापि कोशे नास्तीत्यतः परित्यक्तम् ।

३. **जना.**–अनन्वितेति । अनन्विता ये पदार्थास्तद्वाचकपदादिप्रयोग इत्यर्थः । आदिपदेन वाक्यपरिग्रहः । अत्रानन्वितवाचकपदाभ्यामर्थान्तरनिरर्थकयोर्निरासः । अर्थान्तरग्रस्तवाक्यस्य पदार्थवाचकत्वेनान्वितार्थवाचकत्वाभावात् । निरर्थकस्य च पदार्थवाचकत्वाभावात् । **पृ.सं-३४०.**

**प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणमित्यादिसंव्यवहारात् । [1]निग्रह-स्थानं त्वसङ्गतिरेव[2] ॥**

**(भा.च.)**

**'प्रकृतानुपयुक्तोक्तिरर्थान्तरमिति स्थितिः'**

इति परोक्तं लक्षणमनुवदति – **प्रकृतेति** ॥ **प्रकृतस्य** प्रसक्तस्य । साधनस्य[3] दूषणस्य वा अनुपयुक्तमसङ्गतमन्वितं च तस्योक्ति-रर्थान्तरमित्यर्थः । प्रकृतानुपयुक्तानन्वितप्रयोगेऽपार्थकप्रयोगेऽति-व्याप्तिपरिहाराय अन्वितपदम् । समीचीनप्रयोगव्यावृत्त्यर्थं प्रकृता-नुपयुक्तेति ॥ **इत्यादीति** ॥ शब्दः अनित्यः स चाऽकाशविशेषगुण इत्यादिशब्दार्थः ।

**'अवाचकप्रयोगे स्यान्निरर्थकसमुद्भवः'**

इति परोक्तं लक्षणमनुवदति- **अवाचकेति** ॥ पर्वतोऽग्निमान् इत्यादिवाचकपदप्रयोगेऽतिव्याप्तिवारणायावाचकेत्युक्तम् ।

**'त्रिभङ्ग्यन्तरमुक्तेऽपि प्राश्निकैः प्रतिवादिना ।**
**वाक्यमज्ञायमानार्थमविज्ञातार्थमुच्यते'**

---

१. **जना.–** निग्रहस्थानं त्विति । निग्रहस्थानं चेदपीत्यर्थः । असङ्गतिरेवेति । अनाकाङ्क्षिताभिधानत्वस्य स्पष्टत्वादिति भावः । **पृ.सं- ३४२.**

२. **वेद.–** असङ्गतिरेवेति । समयबन्धानुसारेणैवाऽकाङ्क्षोदयेन तद्विपर्यासेनाऽकाङ्क्षिताभिधानत्वेनासङ्गतित्वमिति भावः । **पृ.सं- ३४३.**

**वि.–** शास्त्रेष्वेवमविगीतव्यवहारान्न तन्निग्रहहस्थानम् । असङ्गतिरेवेति । आरम्भविपर्यासादिरूपं निग्रहस्थानं त्वनाकाङ्क्षिताभिधानरूपत्वादसङ्गति-रेवेत्यर्थः । **पृ.सं- ३४५.**

३. **'ज्ञानसाधनस्य' घ.**

इति परोक्तं लक्षणमनुवदति– **त्रिवारमुक्तेऽपीति** ।। त्रिवारमुक्तेऽपि परिषत्प्रतिवादिभ्यामविज्ञातार्थावाचकप्रयोगनिरासाय[१] वाचकेत्युक्तम् । **यथेति** ।। **'काश्यपी क्षितिः'** इत्यभिधानात् कश्यपतनया भूः । तस्याः धृतिहेतुः भूधरः । अयं पर्वत इत्युक्तं भवति । त्रिनयनतनयः षण्मुखः । तस्याऽसनं मयूरः । तेन समानं शिखीति नामधेयं यस्य सः त्रिनयनतनयासनसमाननामधेयो वह्निः । तद्युक्त इत्यर्थः ।

त्रिवारं कथनं तु श्रोतॄणामवधानशङ्कानिवृत्त्यर्थम् । ह्येकवारं प्रयुक्तेऽतिव्याप्तिवारणाय त्रिवारमित्युक्तम् ।

**'पदजातं वाक्यजातमनन्वितमपार्थकम्'**

इति परोक्तलक्षणमनुवदति– **अनन्वितेति** ।। [२]अनन्विते पर्वतोऽग्निमान् धूमवत्त्वादित्यादिवाचकपदादिप्रयोगे अतिप्रसङ्गवारणाय अनन्वितेत्युक्तम् ।

**'विवक्षितक्रमं वादवादांशावयवादिकम् ।**
**विपर्यस्तं वदति चेत् प्राप्ते वाऽप्राप्तकालता'**

इति परोक्तलक्षणमनुवदति - **क्रमविपर्यास इति** ।। **इदमिति** ।। अयं हि जल्पवितण्डयोः[३] क्रमः । सभ्यादिसङ्ग्रहपुरस्सरं कथानियमबन्धे कृते वादिना प्रमाणमभिधायाऽभासोद्धारः कर्तव्यः । प्रतिवादिना वादि-साधनमनूद्य दूषयित्वा सपक्षे साधनमभिधायाऽभासोद्धारः कर्तव्यः । तत्र यदि वादी स्वपक्षसाधनमभिधाय कथानियमबन्धमिच्छति तदा तु

---

१. **'वाचकप्रयोगनिरासाय'**– घ.

२. अत्र **'अन्विते'** इति पाठः समीचीनः स्यात् ।

३. **'वादजल्पयोः'** इति पाठः समीचीनः स्यात् ।

आरम्भविपर्यासः । सः यदा त्वाभासोद्धारानन्तरं साधनं प्रयुङ्क्ते तदा वादांशविपर्यासः ॥

प्रतिवादी यदि स्वपक्षे साधनमभिधाय परपक्षं दूषयिष्यति तदा वादविपर्यासः । यदा प्रतिज्ञाहेतूदाहरणादीनां वैपरीत्येन प्रयोगमिच्छति तदा अवयवविपर्यासः । वितण्डायां तु स्वपक्षसाधकाभावात् वाद-विपर्यासाभाव इत्यवगन्तव्यम् ॥

तथा चाऽरम्भादिक्रमविपर्यासेन प्रयोगरूपाप्राप्तकालस्य निग्रह-स्थानत्वेऽपि प्रतिज्ञाद्यवयवानां क्रमव्यत्यासेन प्रयोगरूपमिदं किञ्चि-दप्राप्तकालनिग्रहस्थानमित्यर्थः कुत इत्याशङ्क्य प्रतिज्ञाद्यवयवानां क्रमव्यत्यासेन प्रयोगस्य शास्त्रेषूपलम्भादित्याह- **प्रवृत्तीति ॥ निग्रह-स्थानं त्विति ॥** कथारम्भविपर्यासादिरूपमप्राप्तकालं नाम निग्रह-स्थानमित्यर्थः ॥

**(प्र.प.) न्यूनम् ॥ अवश्योपादेयानामन्यतमानुपपादनं न्यूनम् । यथा पर्वतोऽग्निमान् महानसवदित्यादि । एतन्न्यूनमेव ॥**

**अधिकम् ॥ अन्वितोपयुक्तापुनरुक्तकृतकार्यप्रयोगोऽधिकम् । यथा पर्वतोऽग्निमान् धूमवत्त्वात् प्रकाशविशेषवत्त्वाच्चेत्यादि । एतदधिकमेव ॥**

**पुनरुक्तम् ॥ [1]प्रतीतार्थस्य पुनः स्ववचनेन प्रयोजनं**

१. **जना.–** प्रतीतार्थस्येति । एतदप्युक्तं वरदराजेन । **'शब्दादाक्षेपतो वाऽपि प्रतीतस्यैव कीर्तनम् । प्रयोजनं विनाभूतं पुनरुक्तिरिति स्थितिः ॥'**इति । अत्र प्रतीतार्थस्येत्यविज्ञातार्थस्य निरासः । प्रयोजनं विनेति सप्रयोजन-पुनर्वचनरूपस्यानुवादस्य निरासः । पृ.सं- ३४७.

विनाऽभिधानं पुनरुक्तम् । यथा पर्वतोऽग्निमान् पर्वतोऽग्निमानित्यादि । एतदधिकमेव ॥

अननुभाषणम् ॥ वादिनोक्तस्य प्राश्निकैर्विज्ञातार्थस्य वादिना परिषदा वा पुनरनूद्य दत्तस्योच्चारणयोग्यस्य स्वाज्ञानमनाविष्कुर्वता[1] कथामविच्छिन्दता यदप्रत्युच्चारणं तदननुभाषणम् । तत् पञ्चविधम् । यत्तदित्याद्यनुवादो दूष्यैकदेशानुवादः केवलं दूषणोक्तिरन्यथाऽनुवादस्तूष्णीम्भावश्चेति । तत्राऽद्यत्रयं न्यूनम् । चतुर्थमसङ्गतम् । पञ्चममनुक्तिः[2] ॥

अज्ञानम् ॥ वादिना त्रिवारमभिहितस्य परिषदा विज्ञातार्थस्य वाक्यस्यार्थाप्रतिपत्तिरज्ञानम् ॥

अप्रतिभा ॥ वादिनोक्तस्य प्रत्युत्तराप्रतिपत्तिरप्रतिभा ॥

विक्षेपः ॥ केनचिद् व्याजेन कथाविच्छेदो विक्षेपः । यथा कथामारभ्याऽह– अद्य मे महत्प्रयोजनमस्ति तस्मिन्नवसिते वक्ष्यामीति । [3]एतत् त्रयमनुक्तिरेव ॥

---

१. जना.– अनाविष्कुर्वताऽप्रकटयता । अप्रत्युच्चारणमिति । नञः पर्युदासवृत्त्या प्रत्युत्तरविरोधिवचनमित्यर्थः । पृ.सं- ३४७.

२.'-मनुक्तिरिति' – ज.

३. जना.– एतदिति । त्रयमज्ञानमप्रतिभा विक्षेप इति त्रयमित्यर्थः । अनुक्तिरेवेति । परबोधनार्थमवश्यवक्तव्यस्यानुक्तिरूपत्वादिति भावः । पृ.सं- ३५१.

**(भा.च.)**

**'आत्मसिद्धान्तसिद्धेषु वादांशावयवादिषु ।**
**एकस्यावचने प्राहुस्तन्न्यूनं निग्रहं'**[१]

इति परोक्तलक्षणमनुवदति – **अवश्योपादेयानामिति** ॥

**'अन्वितस्योपयुक्तस्य पुनरुक्तेतरस्य वा ।**
**कृतकार्यकरस्योक्तिरधिकं तत् प्रचक्षते'**

इति परोक्तलक्षणमनुवदति- **अन्वितेति**[२] ॥ अन्येन कृतम् अनुमित्युपयोगिपक्षलिङ्गादिज्ञानलक्षणं कार्यं यस्य तत् कृतकार्यं तस्य प्रयोग इत्यर्थः । पर्वतोऽग्निमान् धूमवत्त्वाद्धूमवत्त्वादिति । कृतकार्य-प्रयोगे[३] पुनरुक्तेऽतिप्रसङ्गवारणायापुनरुक्तस्येत्युक्तम् । अपुनरुक्तस्य कृतकार्यस्य प्रयोगोऽधिकमित्युक्ते शब्दोऽनित्यः कृतकत्वाद् घटवत्, स चाभिधेय इत्यर्थान्तरेऽतिप्रसङ्गवारणायोपयुक्तस्येत्युक्तम् । अन्वितपदं विहायाशेषस्वीकारे देवदत्तो ग्रामं गत्वा सरसि स्नात्वा ओदनमश्नातीति प्रयोगसहिते देवदत्तो ग्रामं सरसि गत्वा ओदनं स्नात्वाऽश्नातीति प्रतिज्ञारूपवाक्यविशेषे अपार्थकेऽतिप्रसङ्गस्तदर्थमन्वितग्रहणम् ॥

कृतकार्यपदं विहायाशेषस्वीकारे समीचीनप्रयोगेऽतिप्रसङ्गः । तदर्थं कृतकार्यपदग्रहणम् ॥ **इत्यादीति** ॥ धूमादिमत्त्वादित्यादिरादिशब्दार्थः । **प्रतीतार्थस्येति** ॥ वचनेनैव प्रतीतपक्षादिरूपार्थस्येत्यर्थः ॥

---

१. *अत्र* **मतमिति** *पदेन अधिकेन भाव्यमिति भाति ।* **निग्रहणं त्विति** - *इति क.पाठः ।* **प्राहुरन्यूनं न्यूननिग्रहः** *इति क्वचित् मुद्रितव्याख्यानान्तरे पाठो दृश्यते ।*

२. **'अनन्वितेति'** ख.

३. **'कृते कार्यप्रयोगे'** घ.

**निगमनेति** ।। निगमने अतिप्रसङ्गवारणाय प्रयोजनं विनेत्युक्तम् । प्रत्यक्षप्रतीतार्थाभिधानरूपे पर्वतोऽग्निमान् इत्यत्र पर्वत इति पदेऽतिव्याप्तिवारणाय[१] वचनेनेत्युक्तम् ।।

अत्र प्रयोजनं विना पुनरभिधानं पुनरुक्तमित्येव लक्षणम् । अन्यतः प्राप्तार्थस्याभिधाने पुनरभिधानत्वाभावादिति ज्ञेयम् ।।

**वादिनोक्तस्येति** ।। यदप्रत्युच्चारणं तदननुभाषणम्[२] इत्युक्ते प्राश्निकैः प्रतिवादिना चाविज्ञातार्थस्थले निग्रहस्थानबहिर्भूतं प्रतिवादिनो यदप्रत्युच्चारणं तत्रातिप्रसङ्गः स्यात् । अतः प्राश्निकैर्विज्ञातार्थस्येत्युक्तम् । प्राश्निकैः विज्ञातार्थस्यापि प्रतिवादिनं प्रत्यनूद्याप्रदानदशायामप्रत्युच्चारणस्यानिग्रहस्थानत्वाद् अनूद्य दत्तस्येत्युक्तम् ।।

वादिना अनुक्तस्याधिकार्थस्यापरिज्ञानेन स्वाज्ञानमनाविष्कुर्वतो यदप्रत्युच्चारणं तादृशस्थलेऽननुभाषणं न निग्रहस्थानम् । किन्त्वज्ञानं नाम निग्रहस्थानमिति तद्व्यवच्छेदाय स्वाज्ञानमनाविष्कुर्वतेत्युक्तम् ।

स्वाज्ञानमनाविष्कुर्वतोऽपि केनचिद् व्याजेन कथाविच्छेदं सम्पाद्य यदप्रत्युच्चारणं तादृशस्थलेऽननुभाषणं न निग्रहस्थानम् । किन्तु विक्षेप एवेति तद्व्यवच्छेदाय कथामविच्छिन्दतेत्युक्तम् । पवनव्याधियुतं प्रति प्राश्निकैरनूद्य दत्तस्याप्यर्थस्य तदुच्चारणायोग्यत्वे परोक्तस्ववक्तव्यविषयकाज्ञानासम्भवेऽप्यनुच्चारणसम्भवात् तद्व्यवच्छेदाय उच्चारणयोग्यस्येत्युक्तमिति ज्ञेयम् ।।

---

१. **अतिप्रसङ्गवारणाय** - ख. घ. पाठः ।

२. अत्र परोक्तमननुभाषणलक्षणं तु – **'ज्ञातार्थं प्राश्निकैर्वाक्यैस्तैरुक्तं नानुभाषते । योऽनुद्भाव्य स्वमज्ञानं तस्यैवाननुभाषणम्'** इति ।

**अर्थाप्रतिपत्तिरज्ञानमिति ॥** स्वाज्ञानाविष्कारे[१] सत्यर्थाप्रतिपत्ति-रज्ञानं[२] नाम निग्रहस्थानमित्युच्यत इति भावः। [३]परिषद्भिरविज्ञातार्थक-वाक्यस्यार्थापरिज्ञानेऽपि प्रतिवादिनोऽज्ञानाख्यनिग्रहस्थानत्वाभावाद्[४] विज्ञातार्थस्येत्युक्तम् ॥

**प्रत्युत्तरेति ॥** वाद्युक्तं प्रमेयजातं सर्वमनूद्य प्रत्युत्तराप्रतिपत्त्या तूष्णीम्भावे वा प्रत्युत्तरं न ज्ञायत इत्याविष्कारे वा अप्रतिभा[५] निग्रहस्थानं भवतीत्यर्थः । वाद्युक्तवाक्यार्थाज्ञानरूपाद् अज्ञानाख्य-निग्रहस्थानाद् भेदायोत्तराप्रतिपत्तिरप्रतिभेत्युक्तम् ॥

वाद्युक्तस्यानूद्य दत्तस्यापरिज्ञानाद् वा परिज्ञानेऽपि प्रत्युत्तरा-परिज्ञानाद् वा व्याजसम्पादनेन कथाविच्छेदो विक्षेपः[६] ॥

**(प्र.प.) मतानुज्ञा ॥** [७]**इष्टापादनं मतानुज्ञा ॥ यथा केनचित्**

---

१. **'स्वात्माज्ञानाविष्कारे'** घ.

२. परोक्तमज्ञानलक्षणं तु - **ज्ञापिते वादिवाक्यार्थे प्राश्निकैस्तत्र चेत् परः । स्वाज्ञानमुद्भावयति तदाऽज्ञानेन निग्रहः** ॥ इति ।

३. **'परिषद्भिरविज्ञातार्थवाक्यस्य'** घ. ४. **'निग्रहस्थानाभावात्'** घ.

५. परोक्तमप्रतिभालक्षणं तु – **'वाद्युक्तस्यानूदितस्य प्रतिवादी यदोत्तरम् । प्रतिपत्तुं न शक्नोति तदा तस्याप्रतिभा भवेत् ॥'** इति ।

६. परोक्तं विक्षेपलक्षणं तु – **'कथामभ्युपगम्यैव कथाच्छेदाय कस्यचित् । व्याजस्य वचने प्राहुर्विक्षेपं नाम निग्रहम् ॥'** इति ।

७. **जना.–** इष्टापादनमिति । परस्येति शेषः । तदुक्तं वरदराजेन **'अनिष्ट-भ्रमतोऽन्येषामिष्टमापादयेद्यदि । मतानुज्ञेति तस्य स्यान्निग्रहस्थानमुद्भटम् ॥'** इति । अन्तर्भावयति ॥ इयमिति । असङ्गतिरेवेति । तवापि चोरत्वं प्रसज्येतेत्यापादनस्यानाकाङ्क्षिताभिधानरूपत्वादिति भावः । **पृ.सं- ३५२.**

स्वस्य चोरत्वमभ्युपेत्य[१] त्वं चोरः पुरुषत्वादित्युक्ते तर्हि तवापि चोरत्वं प्रसज्येतेति । इयमसङ्गतिरेव[२] ॥

पर्यनुयोज्योपेक्षणम् ॥ [३]अवश्योद्भाव्यतया प्राप्तनिग्रह-स्थानानुद्भावनं पर्यनुयोज्योपेक्षणम् । इदमप्यनुक्तान्तर्गतम् ॥

निरनुयोज्यानुयोगः ॥ [४]अतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनं निरनुयोज्यानुयोगः ।

स चतुर्विधः । छलं, जातिः, हान्याद्याभासः, अप्राप्तकाले ग्रहणं ेति । तत्र परोक्तस्य [५]तदभिप्रेतार्थान्तरं[६] परिकल्प्य तद्दूषणेन ोक्तभङ्गः छलम् । यथा [७]गृष्टिविवक्षया गामानयेत्युक्ते थेवीविवक्षया गवानयनमशक्यमिति ।

एतदसङ्गतम् । विवक्षितदूषणस्यैवाऽकाङ्क्षितत्वात् । छल-

---

१. '-मभ्युपगम्य' - ज.

२. '-प्यनुक्तावन्तर्भूतम्' ज.

३. जना.– अवश्येति । तदुक्तं वरदराजेन । 'अवश्योद्भाव्यमापन्नकालं निग्रह-मागतम् । अनुद्भावयतः पर्यनुयोज्योपेक्षणं भवेत् ॥' इति । पृ.सं- ३५३.

४. जना.– अतन्निग्रहेति । तन्निग्रहोद्भावनमात्रस्य सदुत्तरेऽपि सत्त्वेन तत्राति-व्याप्तिवारणायातन्निग्रहप्राप्ताविति । तदुक्तं वरदराजेन– 'अतन्निग्रह-सम्प्राप्तौ तन्निग्रहनिमित्ततः । निगृह्णतो निग्रहः स्यादचोद्यस्यानुयोगतः ॥' इति । पृ.सं-३५४.

५. 'तदभिप्रेतार्थादर्थान्तरं' ज.

६. 'परोक्तप्राप्ततदभिप्रेतार्थान्तरं' ज.

७. राघ.– गृष्टीति । 'एकवारप्रसूता गौर्गृष्टिरित्यभिधीयते' इत्युक्तेः सकृत्प्रसूता गौर्गृष्टिः । पृ.सं - ३५५.

८. '-सङ्गतमेव' ज.

**वाक्यस्याप्यर्थान्तरं परिकल्प्य 'गवा नयनम्' इत्यनन्वित-मिति दूषणसम्भवेन स्वन्यायविरोधेऽप्यन्तर्भवति छलम् ॥**

**(भा.च.) अवश्येति** ॥ अप्राप्तनिग्रहस्थानानुद्भावनस्या-निग्रहस्थानत्वाद् अवश्येत्युक्तम् । ननु छलस्य तन्निग्रहाप्राप्तौ तदुद्भावनरूपत्वं कथमित्याशङ्क्य तदुपपादनाय छलस्य लक्षणमाह– **तत्र परोक्तस्येति** ॥ तथा च गृष्टिविवक्षया गामानयेत्युक्ते गोशब्दस्य पृथिवीपरत्वं परिकल्प्य आनयनक्रियान्वयो बाधित इति दूषयता छलवादिना अनन्वितप्रयोगरूपापार्थकनिग्रहस्थानस्योद्भावनाद् वादि-नोक्तस्य गामानयेति प्रयोगस्य अनन्वितप्रयोगत्वाभावाद् अतन्निग्रह-प्राप्तौ तन्निग्रहोद्भावनरूपत्वं छलस्य ज्ञेयम् ॥

जात्युत्तरस्थले वाद्युक्तहेतोः सत्प्रतिपक्षत्वादेरभावेऽपि तत्तदुद्भावन-रूपत्वात् तन्निग्रहाप्राप्तौ[1]तदुद्भावनरूपत्वं द्रष्टव्यम् । [2]हान्याद्या-भासाप्राप्तकालग्रहणयोस्तन्निग्रहाप्राप्तौ तदुद्भावनरूपत्वं तूत्तरत्र ग्रन्थकारा एव दर्शयिष्यन्ति ॥

**विवक्षितेति** ॥ गृष्टिविवक्षया प्रयुक्ते[3] गामानयेति वाक्ये विवक्षितो योऽर्थस्तत्र सम्भावितदूषणस्यैव सङ्गतत्वादित्यर्थः । **अर्थान्तरं परिकल्प्येति** ॥ पृथिवीविवक्षया गवानयनमशक्यमिति छलवाक्यस्यापि गवा गोरूपार्थे नयनं नेत्रमित्यर्थान्तरं परिकल्प्य गवानयनमशक्यमिति पदान्यपि गामानयेति पदवदनन्वितानीति छलवाद्युक्तरीत्यैव प्रतिवक्तुं शक्यत्वाच्छलोत्तरं स्वन्यायविरोधेऽप्यन्तर्भावयतीत्यर्थः ॥

---

१. **'तन्निग्रहप्राप्तौ'** घ.

२. **'हान्याभासा'** क.

३. **'प्रयुक्त-'** घ.

*(जातिनिरूपणम्)*

**(प्र.प.) जातिः । [१]सिद्धमपि दूषणासमर्थमुत्तरं जातिः । असामर्थ्यं च द्विविधम् । साधारणमसाधारणं च । तत्र साधारणं स्वव्याहतिः । असाधारणं तु युक्ताङ्गहीनत्व-मयुक्ताङ्गाधिकत्वमविषयवृत्तित्वं चेति ।**

**सा च साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्य-प्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्य-विशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमभेदा-च्चतुर्विंशतिधा ।**

**तत्र वादिना स्थापनाय हेतौ[२]प्रयुक्तेऽनभ्युपेतयुक्ताङ्गेन[३] प्रतिपक्षोद्भावनं प्रतिधर्मसमा जातिः । सा च प्रत्यक्षा-भासादिभेदेन बहुविधा[४] ॥**

**(भा.च.)** निरनुयोज्यानुयोगविशेषाणां जातीनां स्ववचन-विरोधविशेषजातावन्तर्भावं वक्तुं तल्लक्षणमाह– **सिद्धमपीति** ॥ जात्युत्तरं सर्वं पञ्चम्यन्तलिङ्गवचनात्मकहेतुरूपम् । तत्र लिङ्गस्या-पेक्षितपक्षस्तु वाद्युक्तानुमानमेव । तथा च सिद्धमपि पक्षे विद्यमान-विषयकमपि दूषणे वादिहेतोः स्वसाध्यसाधनसामर्थ्यनिराकरणेऽ-समर्थमुत्तरं जातिरित्यर्थः ।

१. **जना.–** सिद्धमपीति । तदुक्तं वरदराजेन । **'प्रयुक्ते स्थापनाहेतौ दूषणा-शक्तमुत्तरम् । जातिमाहुरथान्ये तु स्वव्याघातकमुत्तरम् ॥'** इति । सिद्धमपि वक्तुर्विवक्षितार्थानुसारेण प्रवृत्तमपीत्यर्थः । **पृ.सं - ३५७.**

२. **'स्थापनाहेतौ'** ज. ३. **'-युक्ताङ्गेन प्रतिप्रमाणेन'** ज.

४. **'वहुधा'** ज.

अत्रायं देवदत्तो आढ्यः[१] नवकम्बलवत्त्वादित्युक्ते नवशब्दस्यानभिप्रेतमेव सङ्ख्यार्थकत्वं परिकल्प्य छलवादी ब्रवीति । नवकम्बलवत्त्वादिति हेतुः स्वसाध्यसाधनसमर्थो न भवति । असिद्धत्वादिति । इदं च छलोत्तरं नवकम्बलवत्त्वादिति वादिहेतुदूषणासमर्थमपि असिद्धत्वादिति छलोत्तरस्य नवकम्बलवत्त्वादिति हेतुरूपपक्षवृत्तिविषयकत्वाभावात् सिद्धमपीत्यनेन छलोत्तरव्युदासः ॥

सिद्धमुत्तरं जातिरित्युक्ते वह्निरनुष्णः पदार्थत्वादित्यत्र पदार्थत्वं न स्वसाध्यसाधनसमर्थं बाधितविषयत्वादिति । [२]बाधोद्भावनरूपासदुत्तरेऽतिव्याप्तिः बाधितविषयत्वादित्युत्तरस्य पदार्थत्वरूप[३] पक्षवृत्तिविषयकोत्तरत्वात् । अतः दूषणासमर्थमित्युक्तम् । बाधित-विषयत्वादित्युत्तरस्य दूषणसमर्थोत्तरत्वात् तेन तद्व्युदासः ॥

दूषणासमर्थमित्यत्र असामर्थ्यस्वरूपज्ञानार्थं तद्विभागमाह– **असामर्थ्यं चेति ॥ साधारणमिति ॥** सकलजातिसाधारणमित्यर्थः । **युक्ताङ्गेति ॥** यस्य यस्य प्रमाणेति[४] यद् यद् योग्यमङ्गं तेन राहित्यमित्यर्थः । **अविषयवृत्तित्वमिति ॥** अयोग्यविषयवृत्तित्वमित्यर्थः ॥

साधर्म्यसमादिचतुर्विंशतिजातीनां मध्ये उत्कर्षसमादिविंशतिजातयः प्रधानभूताः, साधर्म्यवैधर्म्यसमौ तु प्रतिधर्मसमस्यावान्तरजातिभूतौ । नतूत्कर्षसमादिवत् प्रधानभूतौ । प्रतिधर्मसम एवोत्कर्षसमादिवत् प्रधान

१. **'धनाढ्यः'**- इति क.पाठः । २. **'बाधोद्भावरूपसदुत्तरे'** ख.पाठः ।
३. **पदार्थत्वरूप..** *इत्यारभ्य* **दूषणासमर्थ***मित्यन्तो भागः क.मातृकासु नास्ति ।*
४. *इदं पदमधिकतया प्रविष्टमिति भाति । अथवा* **'प्रमाणस्य'** *इति पदमत्र योग्यं भवेत् ।*

इति भावेन साधर्म्यवैधर्म्यसमयोः प्रतिधर्मसमावान्तरप्रभेदत्वं वक्तुं प्रतिधर्मसमजातेर्लक्षणमाह– **तत्रेति** ॥

प्रतिप्रमाणेन प्रतिपक्षोद्भावनं प्रतिधर्मसम इत्युक्ते शब्दोऽनित्यः कृतकत्वाद् घटवदित्यस्य शब्दो नित्यः नित्यधर्मत्वाद् गगनवदिति व्याप्त्याद्यभिमानेन प्रतिपक्षोद्भावनरूपे सदुत्तरेऽतिव्याप्तिः । तन्निवृत्त्यर्थम् अनभ्युपेतयुक्ताङ्गेनेत्युक्तम् ॥

प्रतिपक्षोद्भावनमित्यनुक्त्वा अनभ्युपेतयुक्ताङ्गेन प्रतिप्रमाणेन प्रत्यवस्थानं प्रतिधर्मसम इत्युक्ते अङ्गीकृतानधिकबलेन बाधचोदनरूप-प्रकरणसमजातावतिव्याप्तिः । तदर्थं प्रतिपक्षोद्भावनमित्युक्तम् । अनभ्युपेतयुक्ताङ्गेन प्रतिप्रमाणेन प्रतिपक्षोद्भावनं तु स्थापनाहेतु-प्रयोगान्तरभावीति भावेन स्थापनाहेतौ प्रयुक्त इत्युक्तम् । न तु तदपि लक्षणशरीरान्तर्गतमिति ज्ञेयम् ॥

साधर्म्यवैधर्म्यसमयोः प्रतिधर्मसमप्रभेदत्वोपपादनाय प्रतिधर्मसमा-वान्तरभेदमाह– **सा चेति** ॥ प्रतिधर्मजातिरित्यर्थः । **बहुविधेति** ॥ अनभ्युपेतयुक्ताङ्गानां प्रतिप्रमाणानां प्रत्यक्षाभासानुमानाभासोपमाना-भासागमाभासभेदेन चातुर्विध्यात् प्रत्यक्षाभासादिभिः [१]प्रतिपक्षो-द्भावनरूपप्रतिधर्मसमजातिरपि चतुर्विधेत्यर्थः ॥

*(साधर्म्यसमः)*

**(प्र.प.) तत्र व्याप्तिहीनेनानुमानेन यत् प्रतिपक्षचोदनं[२] तद्**

१.'प्रतिपक्षोद्भावनरूपा' घ.

२.'व्याप्तिहीनानुमानेन यत् प्रतिपक्षोद्भावनम्' ज.

द्विविधम् । [1]साधर्म्येण वैधर्म्येण च[2] । तत्र साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः प्रतिषेधः । यथा यदि महानस-साधर्म्याद् धूमवत्त्वादग्निमान् पर्वत इष्यते तर्हि ह्रदसाधर्म्याद् द्रव्यत्वादनग्निरपि किं नेष्यत इति ॥

वैधर्म्यसमः ॥ वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः प्रतिषेधः । यथा यदि ह्रदवैधर्म्याद्[3] धूमवत्त्वात् पर्वतोऽग्निमानिष्यते तर्हि महानसवैधर्म्यात् पर्वतत्वादनग्निः किं नेष्यत इति ।

अत्र व्याप्तिलक्षणयुक्ताङ्गराहित्यमेव प्रथममुद्भाव्यम् । न तु जातित्वम् । परचित्तवर्तिनो व्याप्त्यनभ्युपगमस्याद्यापि ज्ञातुमशक्यत्वात् । यदा तु परो ब्रूयात् साधर्म्यवैधर्म्यमात्रं[4] प्रयोजकं किं व्याप्त्येति ? तदा वक्तव्यम्- एवं सति नेदं साधकं[5] सत्प्रतिपक्षितत्वादिति त्वदनुमानस्यापि व्याप्ति-हीनेन[6] साधर्म्येण वैधर्म्येण वा प्रतिपक्षसम्भवाद् व्याघात इति । तथा च प्रतिषेधे स्वन्यायविरोधात्मकतृतीयजाता-वन्तर्भाव इति[7] ॥

१. श्रीनि.– साधर्म्येणेति । समानो धर्मो येषां ते सधर्माणस्तेषां भावः साधर्म्यम् । तेन समानधर्मेणेत्यर्थः । वैधर्म्येणेति । विरुद्धो धर्मो येषां ते विधर्माणस्तेषां भावो वैधर्म्य तेन विरुद्धधर्मेणेत्यर्थः । प्रत्यवस्थानमिति । वादिसाधननिराकरणं प्रतिपक्षोद्भावनमिति यावत् । प्रतिषेध इति । जातिरित्यर्थः ॥ पृ.सं - ३६३.

२. 'चेति' ज. ३.'ह्रदे वैधर्म्यात्' इति भावचन्द्रिकानुसारी पाठः

४.'साधर्म्यमात्रं' ज. ५.'स्वसाध्यसाधकम्' च.

६.'व्याप्तिहीनेनानुमानेन' ज. ७.'-वन्तर्भवति' ज.

**(भा.च.) तत्रेति** ॥ अनुमानस्य[१] व्याप्तिलक्षणं यद्युक्तमङ्गं तद्धानेन[२] अनुमानाभासेनेति यावत् । **साधर्म्येण** पक्षदृष्टान्त-साधारणधर्मेण । **वैधर्म्येण** पक्षदृष्टान्तविरुद्धधर्मेण, [३]दृष्टान्तव्यावृत्त-धर्मेणेति यावत् । साधर्म्येण वैधर्म्येण च द्विविधमिति सम्बन्धः । **तत्रेति** ॥ अनभ्युपेतव्याप्तिलक्षणयुक्ताङ्गकेन साधर्म्यलक्षणानुमाना-भासेन प्रत्यवस्थानं साधर्म्यसम इत्यर्थः । तथा अनभ्युपेतयुक्ताङ्गकेन वैधर्म्यलक्षणानुमानाभासेन प्रत्यवस्थानं वैधर्म्यसम इत्यर्थः ॥

साधर्म्यसमजातिरित्येवं साधर्म्यसमादौ सर्वत्र जातिशब्दप्रयोगवद् जातिपदस्थाने प्रतिषेधशब्दं प्रयुज्यापि साधर्म्यसमः प्रतिषेध इत्यादि-प्रकारेण व्यवहरन्तीत्यर्थः । भेदो न शङ्कनीय इति भावेनाऽह-**साधर्म्यसमः प्रतिषेध इति** ॥ वैधर्म्येण प्रत्यवस्थानमपि धर्मेण प्रत्यवस्थानं भवतीत्यतिव्याप्तिवारणाय साधर्म्येणेत्युक्तम् । एवं वैधर्म्येणेत्यत्रापि प्रयोजनं द्रष्टव्यम् ॥

**ह्रदे वैधर्म्यादिति** ॥ ह्रदव्यावृत्तधूमलक्षणधर्मस्य पर्वते सत्त्वाद् ह्रदवत्पर्वतो न निरग्निकः, किन्तु अग्निमानिष्यते, तर्हि महानस-विलक्षणपर्वतत्वस्य पर्वतेऽसत्त्वात् महानसवत् पर्वतो न साग्निः । किन्त्वग्निरहित एवेति कस्मान्नेष्यत इत्यर्थः ॥

अत्र [४]स्वसाधनीयार्थवता पक्षादन्येन पक्षे साधारणधर्मदर्शनं साधर्म्यसमजातावुत्थानबीजम् । तथा पक्षे स्वेन साधनीयो योऽर्थः तद्रहितेन पक्षादन्येन व्यावृत्तधर्मस्य पक्षे दर्शनं वैधर्म्यसमजातेरुत्थान-बीजं द्रष्टव्यम् ॥

---

१.**'अनुमानस्येति'** ख. २.**'तद्धीनेन'**इति पाठः समीचीनः स्यात् ।
३.**'दृष्टान्तव्यावृत्तिधर्मेण'** घ. ४.**'स्वसाधीयार्थवता'** घ.

**अत्रेति ॥** पर्वतो निरग्निकः पदार्थत्वात् । ह्रदवदिति साधर्म्यसमजात्युत्तरवादिप्रयुक्तानुमाने, तथा पर्वतो निरग्निकः पर्वतत्वाद् व्यतिरेकेण महानसवदिति वैधर्म्यसमजात्युत्तरवादिप्रयुक्तानुमाने चेत्यर्थः । **व्याप्तीति ॥** पदार्थत्वानुमाने वह्निव्याप्तिराहित्यं तथा पर्वतत्वादिति व्यतिरेक्यनुमाने वह्निलक्षणसाध्याभावस्य पर्वतत्वलक्षणसाधनाभावेन[1] व्यतिरेकव्याप्तिराहित्यं प्रथममुद्भाव्यमित्यर्थः । वह्निमत्यपि पर्वते पर्वतत्वाभावस्याभावादिति भावः । **न तु जातित्वमिति ॥** साधर्म्यसमजातित्वं वैधर्म्यसमजातित्वं वा नोद्भाव्यमित्यर्थः ॥

कुत इत्याशङ्क्यानभ्युपेतव्याप्तिलक्षणयुक्ताङ्गकेन साधर्म्येण वैधर्म्येण वा प्रत्यवस्थानत्वरूपसाधर्म्यसमजातित्वादेर्व्याप्त्यनङ्गीकारवचनात् । पूर्वं ज्ञातुमशक्यत्वादिति भावेनाऽह- **परचित्तवर्तिन इति ॥ साधर्म्यवैधर्म्यमात्रमिति ॥** पक्षे विवक्षितसाध्यसिद्धौ ह्रदादिना समानपदार्थत्वादिधर्ममात्रं वा, महानसादिना विलक्षणपर्वतत्वरूपधर्ममात्रं वा प्रयोजकं न त्वपेक्षितवह्न्यभावरूपसाध्येन पर्वतत्वादेर्व्याप्तिरपि प्रयोजकीति[2] परो ब्रूयादित्यर्थः ॥

**इदमिति ॥** वादिनोक्तं धूमवत्त्वानुमानमित्यर्थः । **व्याघात इति ॥** वक्तव्यमिति पूर्वेण सम्बन्धः । **व्याप्तिहीनेन साधर्म्येण वैधर्म्येण वा प्रतिपक्षसम्भवादिति ॥** धूमानुमानं न स्वसाध्यसाधकं सत्प्रतिपक्षितत्वात् । शब्दानित्यत्वसाधककृतकत्वानुमानवत् । शब्दोऽनित्यः कृतकत्वादित्यनुमानं, शब्दो नित्यः । नित्यधर्मत्वादाकाशत्ववदिति प्रतिपक्षानुमानेन प्रतिरुद्धं न स्वसाध्यं साधयतीति जातिवादिनोऽभिमतम् ॥

---

१. '-**साधनाभावे**' घ. २.'**प्रयोजिकेति**'- घ.ख.

अस्मिन्नप्यनुमाने यदीदं धूमवत्त्वानुमानं सत्प्रतिपक्षितशब्दा-नित्यत्वसाधककृतकत्वेन साधर्म्यात् सत्प्रतिपक्षितत्वात् स्वसाध्या-साधकं स्यात् तर्हि क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवदिति सद्धेतुतः प्रमेयत्वादिना साधर्म्यात् स्वसाध्यसाधकमेव किं न स्यात् ॥

मयाऽपि स्वसाध्यसाधकत्वे प्रमेयत्वादिना सद्धेतुतः साधर्म्यमात्रं प्रयोजकं, न तु विवक्षितप्रमेयत्वहेतोः साधनानुमानगतस्वसाध्य-साधकत्वरूपसाध्येन सह व्याप्तिरपीति वक्तुं शक्यत्वेन प्रतिपक्ष-सम्भवात् ॥

तथा वैधर्म्येण [1]सत्प्रतिपक्षितसाधर्म्यादसाधकत्वं धूमानुमाने स्यात् तर्हि तेनैव सत्प्रतिपक्षितहेतुना वह्निजन्यत्वरूपवैधर्म्यात् स्वसाध्य-साधकत्वमेव [2]किं न स्यात् । स्वसाध्यसाधकत्वे[3] असाधकवैधर्म्यमेव प्रयोजकं, न तु व्याप्तिरपीति वक्तुं शक्यत्वेन प्रतिपक्षसम्भवा-दित्यर्थः । अस्याः कुत्रान्तर्भाव इत्यत आह– **तथा चेति ॥** प्रतिषेधे स्ववचन एव व्याहतिरूपप्रतिषेधे तत्रापि स्वन्यायविरोधात्मकतृतीय-जातावन्तर्भवतीत्यर्थः । इतिशब्दः प्रकरणसमाप्तिद्योतकः ॥

**(प्र.प.) उत्कर्षसमः ॥ [4]वादिसाधनसामर्थ्येन साध्यस्येव व्याप्तिं विना[5] कस्यचिदनिष्टधर्मस्य दृष्टान्तात् पक्ष उत्कर्ष**

---

१.**'सत्प्रतिपक्षिसाधर्म्याद्'**- घ. २.**'किं हि न'** घ.

३.**'स्वसाधकत्वे'** क.

४. **जना.–** वादिसाधनेति । साध्यस्येत्यनन्तरं वादिसामर्थ्येनेत्यावर्तते । व्याप्तिं विनेति सत्तर्कव्यावृत्त्यर्थम् । दृष्टान्तात् पक्ष उत्कर्षो दृष्टान्ते यथाऽस्ति तथा पक्षेऽपि स्यादित्यापादनमित्यर्थः । तदुक्तं वरदराजेन । **'कस्याप्यनिष्टधर्मस्य वादिसाधनशक्तितः । दृष्टान्तात्पक्ष उत्कर्ष उत्कर्षसम उच्यते ॥'** इति । पृ.सं-३६६. ५.**'विनाऽपि'** ज.

उत्कर्षसमः । यदि धूमवत्त्वान्महानसवदग्निमान् पर्वतस्तर्हि तत एव तद्वदेव स्थाल्यादिमानपि स्यादिति ॥

अत्रापि व्याप्तिवैकल्यात् तर्काभासोऽयमित्युत्तरं वक्तव्यम्[1] । साहचर्यमात्रेण तर्कस्य प्रवृत्तेः[2] किं व्याप्त्येति वदतः स्वन्याय-विरोधेन व्याघात इति ॥

अपकर्षसमः ॥ पक्षादिष्टधर्मापकर्षणमपकर्षसम इत्येके । यथा शब्दोऽनित्यः [3]कृतकत्वादित्युक्ते तर्हि तत एव तद्वदेव शब्दः श्रावणोऽपि मा भूदिति ।

अत्र वक्तव्यम् । किमिदं साधनमुताऽपादनमिति । नाऽद्यः । अर्थान्तरत्वेन निरनुयोज्यानुयोगत्वाभावात् । द्वितीये तूत्कर्षसम एवायम् । नहि भावोत्कर्षोऽभावोत्कर्ष इत्येतावता भेदः सम्भवति ।

उदयनस्तु दृष्टान्ते साध्येन साधनेन वा सहचरितस्य कस्यचिद्धर्मस्य निवृत्त्या पक्षे तयोरन्यतराभावसाधन-मपकर्षसम इत्याह । यथा महानसेऽग्निमत्त्वेन धूमवत्त्वेन वा [4]सहदृष्टस्य स्थाल्यादिमत्त्वस्य पर्वतेऽभावात् तयोरप्यभावः । तत्र साध्याभावसाधने सत्प्रतिपक्षत्वं बाधो वाऽऽरोप्यः । साधनाभावसाधने त्वसिद्धिरिति ।

---

१. 'वाच्यम्' ज.
२. 'तर्कप्रवृत्तेः' ज.
३. 'कृतकत्वाद् घटवदि-' ज.
४. 'सहचरितस्य' ज.

**[१]इदमप्यसत् । साध्याभावसाधने साधर्म्यसमप्रकरणसमाभ्यां भेदाभावप्रसङ्गात् । तस्माद् व्याप्त्यनपेक्षया पक्षे साधनाभाव-साधनमेवापकर्षसमः । तत्र व्याप्त्यभावः, साधनग्राहक-प्रमाणविरोधश्चेत्युत्तरं वाच्यम् । साहचर्यमेव प्रयोजकं किं व्याप्त्यादिनेति ब्रुवाणं प्रति[२] स्वन्यायविरोध इति ॥**

**(भा.च.) वादीति ॥** वादिना प्रयुक्तं यत् साधनं तस्य सामर्थ्येन, तेनैव साधनेनेति यावत् । व्याप्तिं विना स्वापादनीयार्थाद् व्याप्त्यभ्युपगमं विना कस्यचिदनिष्टधर्मस्य यस्यकस्यापि पक्षेऽनङ्गीकृतधर्मस्य दृष्टान्त-मवष्टभ्य पक्षे उत्कर्षः । सत्त्वापादनमित्यर्थः[३] ॥

**यथेति ॥** महानसे वह्निना सहचरितो यो धूमः[४] तद्वत्त्वान्महानस-वदग्निमान् पर्वतस्तर्हि तत एव महानसे स्थाल्यादिनाऽपि[५] सहचरित-धूमवत्त्वादेव तद्वदेव महानसवदेवेत्यर्थः । अत्र वादिसाधनस्य साध्येनेवानिष्टधर्मस्यापि सहचारदर्शनमुत्थानबीजम् ॥

दृष्टान्तगतस्य पक्षेऽविद्यमानस्य हेत्वन्तरेण पक्षे आपादनरूपा-विशेषसमेऽतिव्याप्तिपरिहाराय वादिसाधनसामर्थ्येनेत्युक्तम् । व्याप्ति-मङ्गीकृत्य[६] वादिसाधनबलेन दृष्टान्तवत् पक्षेऽनिष्टधर्मापादनस्य जात्युत्तरत्वाभावाद् तद्व्यावृत्त्यर्थं व्याप्तिमनङ्गीकृत्येत्युक्तम् ॥

**अत्रापीति ॥** जातिवाद्युक्ततर्केऽपि व्याप्तिवैकल्यापादकस्य धूमस्य

---

१. '**तदप्यसत्**' ज.
२. '**ब्रुवाणस्य स्वन्याय-**' ज.
३. '**तत्त्वापादनमित्यर्थः**' क.
४. '**धर्मः**' घ.
५. '**घ**'मातृकायां अपिपदं नास्ति ।
६. '**अनङ्गीकृत्य**' घ.

आपाद्येन स्थाल्यादिना व्याप्त्यभावादित्यर्थः । **साहचर्यमात्रेणेति ॥** आपाद्यापादकयोः साहचर्यमात्रेणेत्यर्थः ॥

**स्वन्यायविरोधेनेति ॥** एवं जातिवादिनः इदं धूमवत्त्वानुमानं न स्वसाध्यसाधकं विरुद्धत्वात् । शब्दनित्यत्वसाधककृतकत्वानुमान-वदित्यनुमानं विवक्षितम् । अस्याप्यनुमानस्य दृष्टान्तीभूते कृतकत्वे जातिवाद्युक्तविरुद्धत्वे हेतुः जातिवाद्यभिमतासाधकत्वरूप-साध्येने-वामूर्तवृत्तित्वेनापि सहचरितो दृष्ट इत्यमूर्तवृत्तित्वं च[1] धूमे स्यादित्या-पादनसम्भवात् स्वन्यायविरोधेन स्ववचनव्याघात इत्यर्थः ॥

नैयायिकेष्वेव कैश्चिदुक्तमपकर्षसमजातिलक्षणं दूषयितुमनुवदति – **पक्षादिति ॥** वादिसाधनसामर्थ्येनेति वक्तव्यम् । अन्यथा हेत्वन्तरेणाविशेषापादनरूपविशेषसमतो भेदाभावप्रसङ्गाद् इति ॥ **तत एव** कृतकत्वादेव । **तद्वदेव** घटवदेव । अत्रायमपकर्षसम इति पक्षे एवं जातिवादिनं प्रति वादिना वक्तव्यमित्यर्थः ॥

**साधनमापादनमितीति ॥** शब्दः अश्रावणः कृतकत्वाद् घटवदिति साध्यते, उत शब्दो यदि कृतकत्वेनाविशेषाद् घटवदनित्यः स्यात् तर्हि तत एवाविशेषाद् घटवद् अश्रावणोऽपि स्यादित्यापाद्यत इत्यर्थः । इति वक्तव्यमिति सम्बन्धः ॥

**अर्थान्तरत्वेनेति ॥** शब्दो नित्यः कृतकत्वाद् घटवदिति वदन्तं प्रति शब्दाश्रावणत्वसाधकोत्तरस्य[2] प्रकृतासङ्गतोत्तरत्वेनेदमुत्तरमर्थान्तरं नाम

१. 'अमूर्तिवृत्तित्वं च' – क.

२. 'आशब्दश्रावणत्वसाधकोत्तरस्य'– घ. 'आशब्दाश्रावणत्वसाधकोत्तरस्य' ख.

निग्रहस्थानमेव भवेद् न तु अतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनरूप-निरनुयोज्यानुयोगप्रभेदजात्युत्तरं जातित्वाभावे त्वपकर्षसमत्वं दूरत एवेति भावः । द्वितीय इतिशब्दो यदि कृतकत्वाद् घटवदनित्यः स्यात् तर्हि कृतकत्वादेव घटवदश्रावणोऽपि स्यादित्यापाद्यत इति द्वितीये प्रतितर्कपराहतेरापाद्यदूषणत्वेन अतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनरूप-निरनुयोज्यानुयोगत्वसम्भवेऽपि उत्कर्षसमत्वान्नायमपकर्षसम इति भावः ॥

नन्वश्रावणोत्कर्षस्याभावरूपधर्मोत्कर्षत्वाद् भावरूपधर्मोत्कर्ष उत्कर्षसमः । अभावरूपधर्मोत्कर्षस्तु ततो विलक्षण इत्यपकर्षसम इति तयोर्भेदः किं न स्यादित्यत आह– **नहीति** ॥ तथाचानभ्युपेतव्याप्ति-लक्षणयुक्ताङ्गेन वादिसाधनेनैव दृष्टान्तगतधर्मस्य पक्षे उत्कर्षत्वसाम्येऽपि भावोत्कर्षादिभेदेन जातिभेदाङ्गीकारे भावोत्कर्षेऽपि महानसगतस्थाल्युत्कर्ष एवोत्कर्षसमः । न तु व्यञ्जनाद्युत्कर्ष इत्यपि वक्तुं शक्यत्वेन व्यञ्जनाद्युत्कर्षोऽप्युत्कर्षसमो न स्यादिति भावः ॥

**साध्येन साधनेन वा सहचरितस्येति** ॥ साध्यसाधनयोरन्यतरेण सहचरितस्येत्यर्थः । **निवृत्त्या** पक्षे निवृत्त्या । **तयोः** साध्य-साधनयोरित्यर्थः । **अग्निमत्त्वेन धूमवत्त्वेन वेति** ॥ अग्निमत्त्व-धूमवत्त्वयोरन्यतरेणेत्यर्थः । **तयोरभावः** साध्यसाधनयोरन्यतराभावः । अभावसाधनमित्यर्थः । साध्यसाधनान्यतरव्यापकनिवृत्त्या पक्षे साध्य-साधनयोरन्यतराभावसाधने सदुत्तरेऽतिव्याप्तिवारणाय सहचरितस्ये-त्युक्तम् । दृष्टान्तपदं दृष्टान्ते साध्यसाधनयोः सत्त्वसम्भवेनोपात्तम् । न तु लक्षणशरीरानुप्रवेशेन परस्पराव्याप्तिपरिहारायान्यतरपदम् ॥

**तत्रेति** ॥ साध्याभावसाधनाभावयोः[1] मध्ये इत्यर्थः । आरोप्य-दूषणस्य जात्युत्तराङ्गत्वादाह– **साध्याभावसाधन इति** ॥

**साधर्म्यसमप्रकरणसमाभ्यामिति** ॥ अनभ्युपेतव्याप्तिलक्षणाङ्केन प्रतिप्रमाणेन सत्प्रतिपक्षचोदनं साध्यसमः । अङ्गीकृतानधिकबलेन बाधचोदनं प्रकरणसम इत्याभ्यां भेदाभाव-प्रसङ्गादित्यर्थः । **तस्मादिति** ॥ पूर्वोक्तलक्षणयोर्दृष्टत्वादित्यर्थः । **व्याप्त्यनपेक्षयेति** ॥ यस्य स्थाल्यादि-मत्त्वस्याभावात् पक्षे हेत्वभावः साध्यते तेन हेत्वाभावेन [2]तत्साधकस्य स्थाल्यादिमत्त्वाभावस्य व्याप्तिमनपेक्ष्येत्यर्थः । **तत्रेति** ॥ पक्षे हेत्वभाव-साधकस्थाल्यादिमत्त्वाभावरूपहेतावित्यर्थः ॥

**साधनग्राहकेति** ॥ पक्षे प्रत्यक्षसिद्धधूमवत्त्वादिहेत्वाभावसाधन इति शेषः । वस्तुतः साधनव्यापकनिवृत्त्या हेत्वभावसाधनस्य सदुत्तरत्वात् तद्व्यवच्छेदाय व्याप्त्यनपेक्षयेत्युक्तम् । पक्षादन्यत्र हेत्वभावसाधनस्या-दोषत्वात् पक्ष इत्युक्तम्[3] । (इदं धूमानुमानं) न स्वसाध्यसाधनसमर्थं स्वरूपासिद्धत्वात् । शब्दोऽनित्यश्चाक्षुषत्वादित्यनुमानवत्, इत्यत्तर-मभिप्रेतम् ॥

चाक्षुषत्वानुमानरूपदृष्टान्ते स्वरूपासिद्धत्वेन सहचरितं जाति-वृत्तित्वं दृष्टम् । तस्य च वाद्युक्ते धूमानुमानेऽभावेन जातिवाद्युक्त-स्वरूपासिद्धत्वरूपहेत्वभावस्यापि साधनसम्भवात् स्वन्यायविरोध इत्यर्थः । तथा[4] साध्यत्वचोदनमित्यर्थः ॥

**(प्र.प.) वर्ण्यसमः ॥ पक्षवद् दृष्टान्तस्यापि साध्यत्वचोदनं वर्ण्यसम इत्येके ।**

१.‘**साधनाभावसाध्याभावयोः**’ क. २.‘**तत्साधकस्थाल्या-**’ घ.
३.‘**पक्षेत्युक्तम्**’ ख. ४.‘**तया**’ घ.

तदसत् । दृष्टान्ते साध्यसाधनविप्रतिपत्त्या चोदने सदुत्तरत्वात् । एवमेव चोदनस्य निर्बीजतयाऽसम्भवदुक्तिक-त्वात् । एवं तेनैव हेतुना साध्यत्वचोदनमपि निर्बीजम् । पक्षे हेतुः [1]साध्येन[2] सहचरित उपलब्धो दृष्टान्तस्यापि तदापादयतीत्येवं चोदनायामुत्कर्षसम एव । पक्षे दृष्टान्ते चोत्कर्षणमित्येतावता भेदेऽतिप्रसङ्गः । साध्यसमाच्च भेदाभावः ।

तस्मात् [3]पक्षमात्रविवक्षितासिद्धार्थत्वादिरूपवद्धेतुमत्त्व-तदभावयोर्दृष्टान्तस्य साध्यत्वापादनं वर्ण्यसम इत्युदयनः । यथाऽसिद्धार्थं धूमवत्त्वं पर्वत इव महानसेऽस्ति चेत् सोऽपि साध्यवत्तया साध्यः स्यात् । न चेत् साधनवत्तया साध्यः स्यादिति ।

अत्रापि हेतुस्वरूपस्य सद्भावमात्रेण दृष्टान्तत्वोपपत्तौ रूपविशेषचिन्ता व्यर्थेति वाच्यम् । तदावश्यकत्वाभ्युपगमे तु स्वन्यायविरोध इति ॥

---

१. **'साध्यत्वेन'** इति पाठेन भाव्यमिति भाति । २. **'साध्यत्वेन'** ज.

३. **वेदे.**– पक्षमात्रेति । साध्यस्य प्रमाणान्तरेण निश्चितत्वेनासिद्धार्थत्वमेकं पक्षीयहेतो रूपं, हेतुर्हि पक्षे साध्यज्ञापनाय प्रवृत्तिशक्तिर्भवतीत्यारब्ध-साध्यज्ञापनशक्तित्वाख्यं द्वितीयम् । पक्षीयसाध्यस्य पूर्वमज्ञातत्वेन तन्निरूपितव्याप्तेः पक्षीयहेतुवृत्तितया ज्ञातुमशक्यत्वाद्व्याप्तिग्राहकप्रमाण-शून्यत्वाभिमतं तृतीयम् । सन्दिग्धे न्यायप्रवृत्तेः पक्षीयहेतोः संशयसमानविषयत्वारब्धं चतुर्थं, पक्षीयहेतुस्वरूपविशेषरूपं पञ्चममित्येतानि पक्षमात्रविवक्षितरूपाणि । एवं च पक्षमात्रे हेतोर्विवक्षितानि यान्यसिद्धार्थत्वादीनि रूपाणि तद्वान् यो हेतुस्तद्वत्त्वतदभावाभ्यां दृष्टान्तस्य साध्यसाधनवत्तया साध्यत्वापादनं वर्ण्यसम इत्यर्थः । **पृ.सं-३७७**

**(भा.च.) विप्रतिपत्त्येति** ॥ पर्वतोऽग्निमान् महानसवदित्युक्ते पक्षवद् दृष्टान्तेऽपि साधनसन्देहाद् पर्वतो यथा वह्निमत्तया साध्यः, एवं दृष्टान्तोऽपि वह्निमत्तया साध्यः स्यात् । एवं हेतावपि सन्देहाद् हेतुमत्तयाऽपि साध्यः स्यादिति विप्रतिपत्त्या चोदन इत्यर्थः ॥

**एवमेवेति** ॥ विप्रतिपत्तिं विना चोदनं तु पर्वतो यदि वह्निमत्तया साध्यः स्यात् तर्हि महानसोऽपि वह्निमत्तया साध्यः एवमेव दृष्टान्ते साध्यसाधनविप्रतिपत्तिं विनैवेत्यर्थः । [1]**निर्बाधतयेति** ॥ दृष्टान्ते साध्यसाधनविप्रतिपत्तिं विना चोदनं तु पर्वतो यदि वह्निमत्तया साध्यः स्यात् तर्हि महानसोऽपि वह्निमत्तया साध्यः स्यादित्येवंरूपं वाच्यम् । कुतः ? इति प्रश्ने तु सन्देहादित्युत्तरस्य वक्तुमशक्यत्वान्निर्बीजतयेत्युक्तम् ॥

**तेनैव हेतुनेति** ॥ दृष्टान्ते साध्यविप्रतिपत्त्यभावे[2] तु धूमवत्त्वहेतुना पर्वतो यथा वह्निमत्तया[3] तेनैव धूमवत्त्वहेतुना महानसोऽपि वह्निमत्तया साध्यः स्यादिति चोदनमपि निर्बीजमित्यर्थः ॥

तथा च, **'लक्ष्यलक्षणम्[4] उत्थानं पातनावसरौ फलम् ।**
**मूलमित्यङ्गमेतासाम्,'**

इत्यनेनोक्तानां लक्ष्यलक्षणादिजात्यङ्गानां मध्ये उत्थानबीजाभावान्नेदं जात्युत्तरमित्यर्थः ॥

उत्थानबीजमाशङ्कते– **पक्ष इति** ॥ पर्वतरूपपक्षे धूमवत्त्वहेतु-

---

१.**'निर्बीजतयेति'** इति प्रतीकपाठः समीचीनः स्यात् ।

२.**'साध्यविप्रतिपत्त्यभावात्'** - क. पाठः ।

३.**इतः परं 'साध्यः तथा'**- इत्याभ्यां पदाभ्यामत्र भाव्यमिति भाति ।

४.**'लक्ष्यं लक्षणम्'** ख.पाठः ।

साध्यत्वेन वह्निमत्तया साध्यत्वरूपधर्मेण सहचरित उपलब्धो दृष्टान्तस्यापि वह्निमत्तया साध्यत्वमापादयति । (**इत्येवं चोदनायामिति** ॥) साध्यवत्तया साध्यत्वरूपधर्मेण [१]सहदर्शनादित्येवं चोदनायां त्वित्यर्थः ॥

ननु दृष्टान्ते महानसे स्थाल्यादिना सहचरितो धूमः पक्षेऽस्तीति पक्षोऽपि स्थाल्यादिमान् स्यादिति दृष्टान्तधर्मस्य पक्षे उत्कर्षेण उत्कर्षसमः । अयं तु वर्ण्यसमपक्षनिष्ठस्य साध्यवत्तया साध्यत्वरूपधर्मस्य दृष्टान्ते उत्कर्ष इति भेदात् कथमुत्कर्षसमभेद इत्यत आह– **पक्षे दृष्टान्ते चेति ॥ अतिप्रसङ्ग इति ॥** दृष्टान्तहेतुपक्षाणां साध्यत्वापादनरूपसाध्यसमोऽपि दृष्टान्तादिभेदेन भिन्न एव स्यादिति ॥

**साध्यसमाच्चेति** ॥ पक्षवद् दृष्टान्तस्यापि साध्यवत्तया साध्यत्वचोदनं साध्यसम इति तल्लक्षणत्वादिति भावः । **पक्षमात्रेति** ॥ पक्षमात्रवृत्तिहेतावित्यर्थः । असिद्धार्थत्वादित्यादिशब्देन आरब्धसाध्यज्ञापनशक्तिमत्त्वादिकं विवक्षितम् । सिद्धार्थत्वादवशिष्टं धूमवत्त्वं[२] महानसेऽस्ति न वेति विकल्पपूर्वकं साध्यत्वापादने तूत्थानबीजभेदाद्[३] हेतुमत्तया साध्यत्वापादनभेदाच्च न साध्यसमाभेदः[४] ॥

[५]**स्वन्यायेनेति** ॥ एवं जातिवादिनः नेदं स्वसाध्यसाधकं निदर्शनशून्यत्वात् । सर्वमनित्यं प्रमेयत्वादित्यनुमानवदिति विवक्षितम् । अत्र त्वदुक्तः निदर्शनशून्यत्वहेतुरपि पक्षवद् दृष्टान्तेऽप्यसिद्धार्थत्वादिरूपविशिष्टोऽस्ति न वा । आद्ये त्वदभिमतदृष्टान्तोऽप्यसाधकत्वरूप-

---

१.'**सहादर्शनात्**' घ. २.'**अविशिष्टधूमवत्त्वं**' घ.
३.'**उत्थानभेदात्**' क. ४.'**साध्यसमभेदः**' क.
५.'**स्वन्यायेति**' इति पाठः स्वरसः ।

साध्यवत्तया साध्यः स्यात् । द्वितीये निदर्शनशून्यत्वहेतुमत्तया साध्यः स्यादित्यापादनसम्भवात् स्वन्यायविरोध इत्यर्थः ।

**(प्र.प.) अवर्ण्यसमः ।। दृष्टान्तवत् पक्षस्याप्यसाध्यत्वचोदनमवर्ण्यसम इत्येके । अत्रापि सिद्धत्वाभिमानेन चोदने सदुत्तरम् । अन्यथा निर्बीजत्वम् । साधनसाहचर्यबलेनाऽपादने तूत्कर्षसम एव ।।**

**तस्माद् दृष्टान्तमात्रविवक्षितसिद्धार्थत्वादिरूपवद्धेतुमत्त्वतदभावयोः पक्षस्यासाध्यत्वचोदनमवर्ण्यसम इत्युदयनः । यथा सिद्धार्थं धूमवत्त्वं महानस इव पर्वते चेत् साध्यस्य सिद्धत्वादसाध्यत्वम् । न चेदुपायाभावादसाध्यत्वमिति । अस्यापि पूर्ववदन्तर्भावो वाच्य इति ।।**

**विकल्पसमः ।। धर्माणां धर्मान्तरव्यभिचारदर्शनेन साधनस्यापि साध्यव्यभिचारचोदनं विकल्पसमः[१] । यथा कृतकत्वाविशेषेऽपि किञ्चिन्मूर्तं दृष्टं घटादि[२], किञ्चिदमूर्तं [३]रूपादि । तथा कृतकमपि किञ्चिन्नित्यं किञ्चिदनित्यं किं न स्यादिति ।।**

**अत्र शङ्कामात्रं चेत् सदुत्तरमेव । उपाध्यभावादिना समाधेयं धर्मान्तरव्यभिचारेणास्यापि व्यभिचारसाधनं चेद् धर्मान्तरव्यभिचारो हेतुर्वा स्याद् दृष्टान्तो वा । आद्ये व्याप्त्यभावो**

---

१. अत्र कारिका - **'धर्मस्यैकस्य केनापि धर्मेण व्यभिचारतः । हेतोः स्वव्यभिचारोक्तिर्विकल्पसमजातिता ।।'**

२. **'यथा घटादि'** – ज. ३. **'यथा रूपादि'** - ज.

**वक्तव्यः । द्वितीये हेत्वभावान्न्यूनम् । हेतोरनङ्गत्वादि-हेत्वङ्गीकारे[1]प्रतिदृष्टान्तसमसाङ्कर्यम् । धर्मत्वादिहेत्वङ्गीकारे व्याप्त्यभाव एव । तदनङ्गीकारे तु स्वन्यायविरोध इति ॥**

**साध्यसमः ॥ साध्यवद् दृष्टान्तस्यापि साध्यत्वचोदनं साध्यसम इत्येके ।**

**तदसत् । विप्रतिपत्त्या चोदने सदुत्तरत्वात् । एवमेव चोदनेऽसम्भवदुक्तिकत्वात् । तेनैव हेतुना साध्यत्वा-पादनेऽप्येवमेव । वर्ण्यसमवद् बीजोपपादने तु तदभेदः । तस्मात् क्रोडीकृतधर्म्यादिविषयस्य लिङ्गस्य धर्म्यादाव-प्रयोजकत्वे, साध्येऽपि तथात्वप्रसङ्गात् तेनैव हेतुना धर्म्यादेरपि साध्यत्वापादनं साध्यसम इत्युदयनः । व्याप्तिपक्षधर्मवत्तयैव [2]प्रयोजकत्वोपपत्तेः तत्सिद्धतामात्रेण साधनाङ्गत्वसम्भवात् तेनैव हेतुना साधनमित्युत्तरं[3] वाच्यम् । तदनङ्गीकारे तु स्वन्यायविरोध इति ॥**

(भा.च.) **सिद्धत्वाभिमानेनेति** ॥ पर्वतोऽग्निमान् धूमवत्त्वा-न्महानसवदित्युक्ते महानसे यथा वह्निः सिद्धः एवं पर्वतेऽपि सिद्धत्वाद् वह्निमत्तया पर्वतः साध्यो न स्यादित्येवं[4] सिद्धत्वाभिमानेन चोदन इत्यर्थः ॥ **अन्यथेति** ॥ पक्षे साध्यस्य सिद्धत्वाभिमानाभावे महानसवत् पर्वतोऽपि वह्निमत्तया साध्यो न स्यादिति चोदने, कुत इति शङ्काया निरुत्तरत्वाद् उत्थानबीजाभावेनेदं जात्युत्तरमेव न भवति । अवर्ण्यसमत्वं कुत इति भावः ।

---

१. '-रनङ्गत्वाङ्गीकारे' - ज.
२.'लिङ्गस्य प्रयोजक-'-ज.
३.'साधनं व्यर्थमित्यत्रोत्तरं' – ज.
४.'इत्येव' - क.

**साधनसाहचर्यबलेनेति** ॥ दृष्टान्ते महानसे धूमवत्त्वहेतुः वह्निमत्तया असाध्यत्वं तु पक्षधर्मेण[1] सहचरित उपलब्ध इति धूमवत्त्वान्महानसवह्निमत्तया[2] असाध्यः[3] स्यादित्येवं साधनसाहचर्यबलेनाऽऽपादने त्वित्यर्थः । **तस्मादिति** ॥ उक्तलक्षणानां दुष्टत्वादित्यर्थः ।

अत्र सिद्धार्थत्वादित्यनेन साध्यज्ञापनशक्तिरहितत्वादिर्ग्राह्यः । **असाध्यत्वमिति** ॥ वह्निरूपसाध्यवत्तया असाध्यत्वमित्यर्थः । **उपायाभावादिति** ॥ साध्यसाधनोपायस्य हेतोरभावादित्यर्थः ॥ **पूर्ववदिति** ॥ वर्ण्यसमवदित्यर्थः ।

तथा चैवं जातिवादिनः, नेदं स्वसाध्यसाधकं, सिद्धसाधनत्वाद् घटानित्यत्वसाधककृतकत्वानुमानवदिति विवक्षितम् । **अत्र** त्वदभिमतकृतकत्वानुमानरूपदृष्टान्ते । त्वदुक्तसिद्धसाधनत्वहेतुर्यथा सिद्धार्थकत्वादिरूपविशिष्टः, तथा त्वदभिमतवादिसाधनरूपे पक्षेऽपि[4] सिद्धार्थत्वादिरूपविशिष्टोऽस्ति चेत् तर्हि वादिसाधनरूपपक्षो[5] त्वदभिमतासाधकत्वरूपसाध्यवत्तया साध्यो न स्यात् । न चेद् उपायाभावात् साध्यो न स्यादित्येवं स्वन्यायविरोधान्तर्भावो[6] वाच्य इत्यर्थः।

**धर्माणामिति** ॥ कस्यचिद् धर्मस्य केनचिद् व्यभिचारदर्शनेन हेतोः

---

१. **'असाध्यत्वरूपपक्षधर्मेण'** *इति पाठः सम्भाव्यते ।*

२. **'महानसवद् वह्निमत्तया'** - क. पाठः ।

३. **'पक्षोऽप्यसाध्यः'** *इति पाठः सम्भाव्यते ।*

४. **'त्वदभिमतवादिसाधनरूपपक्षेऽपि'**– घ. पाठः । **'त्वदभिमानत्वादिसाधनपक्षेऽपि'** - क.

५. **'वादिसाधनरूपपक्षोऽपि'** घ.

६. **'स्वन्यायविरोध एवान्तर्भावः'** – घ.

साध्यव्यभिचारचोदनस्य उदाहारणमाह– **यथेति** ॥ शब्दः अनित्यः कृतकत्वाद् घटवदित्युक्ते घटतद्गतरूपादीनां कृतकत्वाविशेषेऽपि किञ्चिद् घटादि मूर्तं दृष्टम् । रूपादि त्वमूर्तं दृष्टम् । एवं च कृतकत्वम् अमूर्तत्वादिनेवानित्यत्वेनापि व्यभिचारि किं न स्यादिति भावः ।

हेतोः साध्यव्यभिचारचोदनं विकल्पसम इत्युक्ते पर्वतो वह्निमान् प्रमेयत्वादिति वादिनं प्रति व्यभिचारचोदनमपि विकल्पसमः स्यात् । अतः धर्मान्तरव्यभिचारदर्शनेनेति विशेषणम् ॥ **शङ्कामात्रं चेदिति** ॥ शङ्कैव न तु साध्यव्यभिचारः साध्यत इति चेदित्यर्थः ।

नन्वेवं शङ्कामात्रमपि सदुत्तरं चेत् तर्हि एवं शङ्कायाः सदनुमान-मात्रेऽपि सम्भवाद् अनुमानमात्रोच्छेद इत्यत आह– **उपाध्यभावादि-नेति** ॥ आदिशब्दाद् अनुकूलतर्कादिर्ग्राह्यः ।

शब्दानित्यत्वसाधककृतकत्वस्यामूर्तत्वादिना व्यभिचारदर्शनेना-नित्यत्वरूपसाध्यव्यभिचारः[1] साध्यत इति पक्षं कस्यचिद् धर्मस्य केनचिद् व्यभिचारदर्शनेन कृतकत्वस्यानित्यत्वव्यभिचारः साध्यत इति पक्षं च[2] युगपदनूद्य दूषयति – **धर्मान्तरव्यभिचारेणेति** ॥ अत्रापि-शब्दनिर्मुक्तयोजना, तत्सहितयोजना चेति योजनाद्वयमभिप्रेतम् । तथा चास्य कृतकत्वहेतोर्धमान्तरव्यभिचारेणामूर्तत्वादिधर्मान्तरव्यभिचार-साधनं चेद् अनित्यत्वरूपसाध्यव्यभिचारसाधनं चेदिति प्रथम-योजनार्थः । कस्यचिद् धर्मस्य धर्मान्तरव्यभिचारेणास्यापि कृतकत्व-स्यापि साध्यव्यभिचारसाधनं चेदिति द्वितीययोजनार्थः ।

योजनाद्वयेऽपि दूषणमाह– **धर्मान्तरव्यभिचार इति** ॥ कृतकत्व-

१. **'अनित्यत्वव्यभिचारः'** - क.

२. **'कस्यचित्'** इत्यारभ्य **'पक्षं च'** *इत्यन्तो भागः क.मातृकासु न दृश्यते ।*

स्यामूर्तत्वरूप[1]धर्मान्तरव्यभिचारः कस्यचिद् धर्मस्य धर्मान्तरेण व्यभिचारश्चेत्यर्थः । **हेतुर्वा स्यादिति ॥** कृतकत्व-मनित्यत्वव्यभिचारि अमूर्तत्वादिरूपधर्मान्तरव्यभिचारित्वादिति[2] वा, कृतकत्वमनित्यत्व-व्यभिचारि, सावयवत्वस्य घटत्वव्यभिचारित्वादिति वा हेतुर्वा स्यादित्यर्थः ।

**दृष्टान्तो वेति ॥** अमूर्तत्वादिरूपधर्मान्तरेण व्यभिचारवत् कृतकत्वमनित्यत्वव्यभिचारीति वा, सावयवत्वरूपधर्मस्य घटत्वरूप-धर्मान्तरेण व्यभिचारवत् कृतकत्वमनित्यत्वव्यभिचारीति वा, अनित्यत्वव्यभिचारसाधने दृष्टान्तो वा स्यादित्यर्थः ।

**आद्य इति ॥** उक्तविधव्यभिचारोऽपि हेतुरिति पक्षे यत्रामूर्तत्व-व्यभिचारित्वं घटत्वे, न तत्रानित्यत्वव्यभिचारित्वमिति व्याप्त्यभावो वक्तव्यः । तथा यत्र घटत्वव्यभिचारित्वं सावयवत्वे, न तत्रानित्यत्व-व्यभिचारित्वमित्यपि व्याप्त्यभावो वक्तव्य इत्यर्थः ।

**हेत्वभावादिति ॥** हेतोरप्रयोगादित्यर्थः । **प्रतिदृष्टान्त-समसाङ्कर्यमिति ॥** हेतुमनपेक्ष्य प्रतिदृष्टान्तमात्रेण बाधप्रतिरोध-योरन्यतरोद्भावनं प्रतिदृष्टान्तसम इति तल्लक्षणलक्षितत्वादिति[3] भावः ।

**धर्मत्वादिहेत्वङ्गीकार इति ॥** कृतकत्वमनित्यत्वव्यभिचारि धर्मत्वात्, कस्यचिद् धर्मस्य केनचिद् धर्मेण व्यभिचाररूपधर्मवत्तया कृतकत्वमनित्यत्वव्यभिचारि पदार्थत्वात्, कृतकत्वस्यामूर्तत्वेन व्यभिचारवदिति धर्मत्वादिहेत्वङ्गीकार इत्यर्थः ।

---

१. **'कृतकत्वस्य मूर्तत्वरूप'** - ख.

२. **'अनित्यत्वव्यभिचारिभूतत्वादिरूपधर्मान्तरव्यभिचारित्वात्'** – घ.

३. **'लक्षणलक्षितत्वादिति'** इति घ. पाठः ।

**व्याप्त्यभाव एवेति** ॥ यत्र धर्मत्वं घटत्वादौ, न तत्रानित्यत्वे व्यभिचारित्वम्[1] । यत्र पदार्थत्वं घटत्वादौ, न तत्रानित्यत्व-व्यभिचारित्वमिति व्याप्त्यभाव एव वक्तव्य इत्यर्थः ।

**स्वन्यायेति** ॥ तथा चैवं जातिवादिनो नेदं कृतकत्वं स्वसाध्यसाधकं[2] व्यभिचारित्वात् । वह्निमत्त्वसाधकद्रव्यत्ववदित्यभिप्रेतम्[3] । एवं त्वदभिमतव्यभिचारित्वहेतोरपि द्रव्यत्वादौ केवलान्वयिधर्मत्वेन व्यभिचारदर्शनादसाधकत्वरूपसाध्येनापि व्यभिचारि स्यादिति सुवचत्वात् स्वन्यायविरोध इत्यर्थः ।

**साध्यवदिति** ॥ पर्वतोऽग्निमान् धूमवत्त्वान्महानसवदित्युक्ते पर्वते वह्नेः साध्यत्वात् पर्वतस्यापि यथा साध्यकोटौ निवेशः, एवं महानसेऽपि वह्नेः साध्यत्वान्महानसस्यापि साध्यत्वं स्यादिति चोदनमित्यर्थः ।

**असम्भवदुक्तिकत्वादिति** ॥ तथा चोत्थानबीजाभावान्नेदं जात्युत्तरमिति भावः । **तेनैवेति** ॥ धूमवत्त्वेन हेतुना पर्वतस्य यथा साध्यत्वमेव[4] धूमवत्त्वेनैव महानसोऽपि साध्यः स्यादित्यापादनेऽ-प्युत्थानबीजाभाव एवेत्यर्थः ।

**वर्ण्यसमवदिति** ॥ कैश्चिदुक्तवर्ण्यसमे उत्थानबीजाभावशङ्कायां पक्षे हेतुः साध्यवत्तया साध्यत्वेन धर्मेण सहचरित उपलब्धः । दृष्टान्तस्यापि तदापादयतीति न्यायमनुसृत्य बीजोपादान इत्यर्थः । तथा च पक्षे साध्यत्वरूपधर्मेण सहचरितस्य धूमस्य दृष्टान्तेऽपि[5] वृत्तेर्दृष्टान्तोऽपि

१. **'अनित्यत्वव्यभिचारित्वम्'** *इति पाठेन भाव्यमिति भाति ।*

२. **'स्वसाध्यसाधक'** *इत्येव सकलमातृकापाठः ।*

३. **'-व्यत्ववदित्यभिमतम्'** *- ख. पाठः ।*

४. **'एवम्'** *इति पदपाठेन भाव्यमिति भाति ।* ५. **'दृष्टान्तोऽपि'** -ख.

साध्यः स्यादित्यापादने तु पक्षदृष्टान्तयोरुत्कर्षभेदेनोत्कर्षसमभेदा-भावाद् वर्ण्यसमस्य यथोत्कर्षसमाभेदः[1] एवं साध्यसमस्याप्युत्कर्ष-समाभेद इत्यर्थः ॥

**क्रोडीकृतेति** ॥ लिङ्गोपहितलैङ्गिकभानपक्षे लिङ्गस्याप्यनुमिति-विषयत्वात् क्रोडीकृताः अनुमितिरूपैकबुद्ध्युपारूढाः लिङ्गलिङ्गि-धर्म्यादयो विषया यस्य तत् क्रोडीकृतधर्म्यादिविषयम्[2], तस्य लिङ्गस्येत्यर्थः । **धर्म्यादौ**, धर्मी पक्षः, आदिशब्दाल्लिङ्गं चेत्यभयविषय[3] इत्यर्थः । धर्म्याद्यंशसिद्धिप्रयोजकत्वाभाव इति यावत् । अत्र तेनैव हेतुनेत्यारभ्य लक्षणोक्तिः क्रोडीकृतधर्म्यादिविषयस्येत्यादि तूत्थानबीजप्रदर्शनार्थः ॥

**लिङ्गस्य प्रयोजकत्वोपपत्तेरिति** ॥ क्रोडीकृतधर्म्यादिविषयस्य लिङ्गस्य प्रयोजकत्वोपपत्तेरित्यर्थः । **तत्सिद्धतामात्रेणेति**[4] ॥ व्याप्तिपक्षधर्मवत्तया तस्य लिङ्गस्य धर्मिणश्च सिद्धतामात्रेण साधनाङ्गतासम्भवाद् अनुमित्यङ्गत्वसम्भवाद् तेनैव हेतुना धर्म्यादेः साधनं व्यर्थमित्युत्तरं वाच्यमित्यर्थः । **तदनङ्गीकार इति** ॥ सिद्धत्वमात्रेण साधनाङ्गत्वानङ्गीकार इत्यर्थः । तथा च धर्मिणः साध्यत्वापादने आश्रयासिद्धत्वमारोप्यम् । हेतोः साधनत्वापादने[5] तु स्वरूपासिद्धत्वमारोप्यम् ॥

पक्षद्वयेऽपि नेदं धूमवत्त्वानुमानं स्वसाध्यसाधकम् आश्रयासिद्ध-

---

१.'**उत्कर्षसमभेदः**' - क. पाठः । २.'**विषये**' - ख.

३.'**उभयविषयविषयः**' - क.

४.'**तत्सिद्धितामात्रेणेति**' – घ. ख.

५.'**साध्यत्वापादने**' – घ. क.

त्वात्, स्वरूपासिद्धत्वात् गगनारविन्द[1]सुरभित्वसाधकारविन्दत्वानुमानवत्[2] तथा शब्दानित्यत्वसाधकचाक्षुषत्वानुमानवदिति च जातिवादिनोऽभिमतम् । अत्राप्याश्रयासिद्धत्वानुमानस्य स्वरूपासिद्धत्वानुमानस्य वा वादिसाधनरूपधर्म्यादावप्रयोजकत्वेऽसाधकत्वरूपसाध्येऽपि तत्प्रसङ्गाद् धर्मिणस्त्वदुक्तिहेतोश्च तेनैव हेतुना साध्यत्वं स्यादित्यापादनसम्भवात् स्वन्यायविरोध इत्यर्थः ॥

**(प्र.प.) प्राप्तिसमः ॥ अप्राप्तिसमः ॥ साधनस्य साध्यप्राप्तिपक्षनिरासेन तस्य[3] साधनत्वभङ्गः प्राप्तिसमः । अप्राप्तिपक्षनिरासेन तद्भङ्गोऽप्राप्तिसमः । [4]कृतिज्ञप्तिसाधारणमिदं जातिद्वयम् । यथा धूमज्ञानमग्निज्ञानं प्राप्य जनयति चेत् सतैव प्राप्तिरिति तस्य प्राक् सिद्धत्वान्नोत्पादकम्[5] । तथा धूमज्ञानमग्निं प्राप्य ज्ञापयति चेत् तर्ह्यन्यस्याः प्राप्तेरसम्भवाद् विषयविषयिभावे वक्तव्ये धूमज्ञान एवाग्नेः स्फुरणान्न तज्ज्ञापकत्वमिति प्राप्तिसमः ।**

१.'गगनारविन्दं' - ख. २.'साधकत्वारविन्दानुमानवत्'-क. ख.

३.'तस्य' *इति पदं ज.पाठे नास्ति ।*

४. जना.– कृतिज्ञप्तीति । उत्पत्तिज्ञप्तीत्यर्थः । अत्र कृतौ प्राप्तिसममुदाहृत्य दर्शयति । यथेति । ज्ञप्तौ प्राप्तिसममुदाहृत्य दर्शयति– तथेति । कृतिज्ञप्त्योरप्राप्तिसममुदाहृत्य दर्शयति । अप्राप्येति । अप्राप्तौ कृत्यसम्भवमुदाहृत्य दर्शयति– न हीति । अप्राप्तौ ज्ञाप्त्यसम्भवमुदाहृत्य दर्शयति– नापीति । एतदेवाऽऽह वरदराजः । **'प्राप्य साध्यं साधयति हेतुश्चेत् प्राप्तिकर्मणः । साध्यस्य पूर्वं सिद्धिः स्यादिति प्राप्तिसमोदयः । अप्राप्य साधयेत् साध्यं हेतुः सर्वं च साधयेत् ।'** पृ.सं- ३९२.

५.'-न्नोत्पादकत्वम्' - ज.

**अप्राप्योत्पादकत्वं ज्ञापकत्वं चेत् तन्न[१] । क्वाप्यदर्शनात् । नह्यप्राप्याग्निः काष्ठं दहति । नापि [२]प्रकाश्यमप्राप्य प्रदीपः प्रकाशयति । अतिप्रसङ्गश्चान्यथेत्यप्राप्तिसमः ॥**

**अत्र कृतौ सामर्थ्यलक्षणप्राप्तिसद्भावेनातिप्रसङ्गाभावात् स्वरूप-प्राप्तिरनपेक्षितैव । ज्ञप्तावपि तद्व्याप्तलिङ्गविषयत्वरूपप्राप्ति-सद्भावेनातिप्रसङ्गाभावाद् विषयविषयिभावोऽनपेक्षित[३] एवेत्युत्तरं वाच्यम् । एतदनङ्गीकृत्य स्वरूपप्राप्त्यादिकमपेक्षमाणस्य स्वन्यायेन[४] व्याघात इति ॥**

**(भा.च.) साधनस्येति** ॥ अत्र साधनपदेन लिङ्गज्ञानं विवक्षितम् । एवं साध्यपदेन त्वनुमेयं तज्ज्ञानं च विवक्षितमिति ज्ञेयम् । **अप्राप्ति-पक्षनिरासेनेति**[५] ॥ पुल्लिङ्गज्ञानस्य साध्यतद्विषयाभ्यां सहाप्राप्ति-पक्षनिरासेनेत्यर्थः[६] । अत्र प्राप्तिपक्षनिरासेनेत्येतद् अप्राप्ति-समव्यावृत्त्यर्थम् अप्राप्तिपक्षनिरासेनेत्येतद् प्राप्तिसमव्यावृत्त्यर्थमिति ज्ञेयम् । **अप्राप्येति** ॥ धूमज्ञानस्य वह्निज्ञानमप्राप्योत्पादकत्वं[७] वह्निमप्राप्य ज्ञापकत्वं च नेत्यर्थः । **इत्यप्राप्तिसम[८] इति** ॥ एवं साधनत्वभङ्गोऽप्राप्तिसमः । अत्रैव साधनत्वनिराकरणे इत्युत्तरं वाच्यमिति सम्बन्धः ॥

कृतौ धूमज्ञानं वह्निज्ञानं प्राप्य जनयतीति पक्षे वह्निज्ञानजननानुकूल-

१. **'चेन्न'** – ज.
२. **'प्राकाश्यम्'** – च.
३. **'-प्यनपेक्षितः'** – ज.
४. **'स्वन्यायविरोधेन'**– च.
५. **'अप्राप्तपक्षनिरासेन'** *इति सर्वमातृकापाठः ।*
६. **'प्राप्तिपक्षनिरासेनेत्यर्थः'** – ख. पाठः ।
७. **'अप्राप्योत्पादकत्वं'** – क.
८. **'अप्राप्तसम'**– इति ख. पाठः ।

सामर्थ्यलक्षणप्राप्तिसद्भावेन स्वरूपप्राप्त्यादिकमिति विषयविषयिभाव-सम्बन्धलक्षणप्राप्तिरादिशब्दार्थः । **स्वन्यायेनेति** ॥ प्राप्त्यप्राप्तिरूप-पक्षद्वयेऽपि प्राप्ते साधनविशेषणत्वाद् विशेषणासिद्धिरारोप्यदूषणम् । तथा च नेदं धूमानुमानं स्वसाध्यसाधकं[१] विशेषणासिद्धत्वात्, शब्दा-नित्यत्वसाधक[२] द्रव्यत्वविशेषितकृतकत्वानुमानवदिति वादिनः[३] अभि-मतम् । अत्रापि विशेषणासिद्धत्वादिति त्वदुक्तस्य[४] लिङ्गस्य ज्ञान-मसाधकत्वरूपसाध्यज्ञानमुक्तसाध्यें[५] वा प्राप्य जनयति ज्ञापयतीति वा विकल्प्य असाधकत्वरूपसाध्यसाधकत्वनिराकरणसम्भवात् । तथा अप्राप्तिपक्षनिरासेनापि साध्यसाधकत्वनिराकरणसम्भवात् स्वन्याय-विरोध इत्यर्थः ॥

**(प्र.प.) प्रसङ्गसमः ॥ अनवस्थाभासप्रसञ्जनं प्रसङ्गसमः । यथा पर्वतस्योत्पादकं वाच्यम् । तस्यापीत्यनवस्था । एवं पर्वतस्य ज्ञापकं वाच्यं तस्यापीत्यनवस्थेति ॥**

**अत्र सिद्धविषयत्वेनावस्थासम्भवेन[६] मूलक्षयाभावाद-दोषत्वमिति वाच्यम् । तदनङ्गीकारे तु स्वन्यायविरोध इति ॥**

**प्रतिदृष्टान्तसमः ॥ प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसम इत्येके । तदसत् । साधर्म्यसमादावपि तद्भावात्[७] । यथा शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते[८] वदति - यदि घटदृष्टान्ते-नैन्द्रियकत्वादनित्यस्तर्हि सामान्यदृष्टान्तेन नित्यः किं न**

१.'साधक' - ख.
२.'शब्दनित्यत्वसाधक' - क.
३.'जातिवादिनः' - घ. क.
४.'तदुक्तस्य' घ.
५.'-मुक्तसाध्यं' - घ. क.
६.'-नावस्थानसम्भवेन' - ज.
७.'सद्भावात्' - ज.
८.'ऐन्द्रियकत्वाद् घटवदित्युक्ते' -ज.

स्यादिति व्यभिचारचोदनाभिप्रायेण प्रवृत्तेर्न साधर्म्यसमादि-साङ्कर्यमिति चेन्न । अस्य सदुत्तरत्वात् ॥

तस्माद् हेतुनिरपेक्षेण प्रतिदृष्टान्तमात्रेण बाधप्रतिरोध-योरन्यतरोद्भावनं प्रतिदृष्टान्तसम इत्युदयनः । यथा यदि महानसदृष्टान्तेनाग्निमानिष्यते तर्हि ह्रददृष्टान्तेनानग्निकोऽस्त्वित्यादि[1] ॥

अत्र न्यूनत्वं वाच्यम् । हेतोरनङ्गत्वाभिमाने तु स्वन्यायविरोध इति ॥

अनुत्पत्तिसमः ॥ [2]पक्षादीनां प्रागुत्पत्तेर्हेतुवृत्त्यभावेन असिद्ध्युद्भावनमनुत्पत्तिसमः । यथा पर्वतस्योत्पत्तेः प्राक् तत्र धूमवत्त्वं न वृत्तमिति भागासिद्धमित्यादि ॥

अत्रानुत्पन्नस्य पर्वतत्वाभावेनापक्षत्वात् तत्र वृत्त्यभावो न दोषायेति वाच्यम् । न चेदेवं तदा स्वन्यायविरोध इति ॥

**(भा.च.)** 'सिद्धे दृष्टान्ते हेत्वादौ साधनप्रश्नपूर्वकम् ।
अनवस्थाभासवाचः[3] प्रसङ्गसमजातिता'

---

१.'अनग्निक एवास्त्वित्यादि' *इति टिप्पण्यानुसारी पाठो भवेत् ।*

२. जना.– पक्षादीनामिति ॥ असिद्ध्युद्भावनमाश्रयासिद्धिभागासिद्ध्योरुद्भावन-मित्यर्थः । तदेवाऽह वरदराजः । **'अनुत्पन्ने साधनाङ्गे हेतुवृत्तेरभावतः । भागासिद्धिप्रसङ्गः स्यादनुत्पत्तिसमो मतः ॥'** इति । भागासिद्ध-मित्यादीत्यादिशब्देनाऽश्रयासिद्धस्य ग्रहणम् । पृ.सं-४००.

३.'वाचकः' - क.

इति परोक्तं लक्षणमनुवदति- **अनवस्थाभासप्रसञ्जनमिति** ॥ अप्रामाणिककारणपरम्पराप्रसञ्जनस्य सदुत्तरत्वात् तद्व्यवच्छेदायानवस्थाभासेत्युक्तम् ।

इयं तु जातिः कृतज्ञप्तिसाधारणीति भावेनाऽह- **यथेति** ॥ ज्ञातः विद्यमानश्च पक्षादिः अनुमित्यङ्गमतः तदुत्पत्त्यर्थं[1] तज्ज्ञापनार्थं चोत्पादकं ज्ञापकं[2] च वाच्यम् । एवं तदुत्पादकज्ञापकयोरप्युत्पादकान्तरं ज्ञापकान्तरं वाच्यमित्यनवस्थाभासापादनमित्यर्थः । **सिद्धविषयत्वेनेति** ॥ पर्वतादेरुत्पादकपरम्परायाः ज्ञापकपरम्परायाश्च प्रामाणिकविषयत्वेनेत्यर्थः । **अवस्थानसम्भवेनेति** ॥ प्रमितपक्षादिकार्याणामवस्थानसम्भवेनेत्यर्थः । **मूलक्षयाभावादिति** ॥ प्रमितकार्यविलोप[3]लक्षणमूलक्षयाभावादित्यर्थः ।

**स्वन्यायविरोध इति** ॥ अस्मिन्ननवस्थाभासप्रसञ्जने आश्रयासिद्धत्वादिकमारोप्यम् । तथा च नेदं धूमानुमानं स्वसाध्यसाधकम् आश्रयासिद्धत्वाद् गगनारविन्दपक्षकानुमानवदिति जातिवादिनोऽभिमतम् । अत्राप्यनुमाने पक्षादिज्ञापकोत्पादकपरम्पराप्रसञ्जनरूपदूषणप्रवृत्तः[4] स्वन्यायविरोध इत्यर्थः ।

**प्रतिदृष्टान्तेनेति** ॥ वाद्युक्तसाध्यरहितो[5] दृष्टान्तः प्रतिदृष्टान्तस्तेन प्रत्यवस्थानमित्यर्थः । जातिवाद्यभिमतसाध्यापेक्षया यो दृष्टान्तः स प्रतिदृष्टान्तः । तेन प्रत्यवस्थानं प्रतिदृष्टान्तसम इति लक्षणविवक्षया विकल्पसमादेरपि तादृशत्वादादिपदम् ।

---

१.'**तदुत्पत्त्यर्थे**' - ख. २.'**ज्ञापनं**'- क.
३.'**प्रतिकार्यविलोप**'- ख. '**प्रमितकार्यविरोध.**'- घ.
४.'**-प्रवृत्ते**' ख. ५.'**-साध्यत्वरहितः**'- क.

ननु प्रतिदृष्टान्तेन प्रत्यवस्थानत्वस्य साधर्म्यसमाद्यनुगतत्वेऽपि आरोप्यदूषणभेदाज्जातिभेदो भविष्यतीति भावेन शङ्कते– **यथेति** ॥ अस्येत्यनया रीत्या व्यभिचारशङ्कामात्रस्य सदुत्तरत्वादित्यर्थः । **तस्मादिति** ॥ अत्र प्रतिदृष्टान्तमात्रेण प्रत्यवस्थानं प्रतिदृष्टान्तसम इत्येव लक्षणम् । मात्रपदव्यावर्त्यकथनं **हेतुनिरपेक्षेणेति** ॥ **बाधप्रतिरोधयोरन्यतरोद्भावनमिति** ॥ प्रत्यवस्थानस्वरूपविवरणं[1] परस्पराव्याप्तिपरिहारार्थम् । वाद्यभिमतसाध्यरहितो दृष्टान्तः प्रतिदृष्टान्तस्तेन प्रत्यवस्थानरूपे साधर्म्यसमेऽतिव्याप्तिवारणाय हेतु-निरपेक्षेणेत्युक्तम् । **इत्यादीति** ॥ **अनग्निक एवास्त्विति**[2] ॥ बाधचोदनमादिशब्दार्थः ।

**स्वन्यायेति** ॥ एवं वदतो जातिवादिनो नेदं धूमानुमानं स्वसाध्य-साधकं बाधितविषयत्वात् वह्निशैत्यानुमानवदित्यादि विवक्षितम् । तथा च त्वदुक्तासाधकत्व इव स्वसाध्यसाधकत्वेऽपि सदनुमानरूपदृष्टान्त-सम्भवात् सदनुमानवदिदं स्वसाध्यसाधकमेवेत्यादिरूपेण प्रत्यवस्थान-सम्भवेन स्वन्यायविरोध इत्यर्थः ।

**पक्षादीनामिति** ॥ पक्षलिङ्गदृष्टान्तानामित्यर्थः । तथा पर्वतस्योत्पत्तेः पूर्वं तत्र हेतोरभावाद् भागासिद्धिः, सत्यपि पक्षलिङ्गस्योत्पत्तेः पूर्वं हेतोरभावात् स्वरूपासिद्धिः । तथा महानसनिर्माणात् पूर्वं दृष्टान्ते हेतोरभावाद् दृष्टान्ते हेत्वसिद्धिरिति भावेनाऽऽदिशब्दप्रयोगः ।

**अत्रेति** ॥ एवं भागासिद्ध्यादिदोषोद्भावन इत्यर्थः । **न चेदेवमिति** ॥

१.'**विवक्षणम्**' - क.

२.'**अनग्निक एवास्त्वित्यादीति**' इति पाठः मूलानुसारी स्यात् ।

दोषाय नेत्येवं नचेदित्यर्थः । **तदेति** ॥ एवं वदतो जातिवादिनो नेदं धूमवत्त्वं स्वसाध्यसाधकं भागासिद्धत्वात् । इत्याद्यनुमानं विवक्षितम् । तथा च तदुक्तभागासिद्धत्वादिति हेतोरपि त्वदभिमतपक्षोत्पत्तेः पूर्वं तत्रावृत्तेर्भागासिद्ध्यादि स्यादित्यापादन-सम्भवात् स्वव्याघात इति भावः ।

**(प्र.प.) संशयसमः ॥ [१]सत्यपि निर्णयकारणे साधारण-धर्मादिमात्रेण[२] संशयापादनं संशयसमः । यथा यदि धूमवत्त्वादग्निमत्त्वनिश्चयस्तर्हि ह्रदमहानससाधारणेन द्रव्यत्वेन तत्संशयः किं न[३] स्यादिति ।**

**[४]तत्र निर्णायकाभावसहकृतस्यैव समानधर्मादेः संशय-कारणत्वादत्र च निर्णायकसद्भावादसंशय[५] इति वाच्यम् । निर्णायकं न संशयप्रतिबन्धकमिति वदतः स्वन्यायविरोध इति ॥**

**प्रकरणसमः ॥ प्रत्यनुमानेन प्रत्यवस्थानं प्रकरणसम इत्येके ।**

---

१. **जना.–** सत्यपीति । साधारणधर्ममात्रेणेत्यस्यैव विवरणं सत्यपि निर्णयकारण इति । मात्रपदेन सदुत्तरसंशयापादनव्यवच्छेदः । एतदेवोक्तं वरदराजेन । **सन्देहहेतुसद्भावात् सति निर्णयकारणे । संशयस्य प्रसङ्गो यः स संशयसमो भवेत् ॥** इति । तथा च वादिहेतोः संशयकारणेन सत्प्रतिपक्षितत्वान्न साध्यसाधकत्वमिति भावः । **पृ.सं- ४०१.**

२. '**समानधर्मादिमात्रेण**' इति प्रकृतटिप्पण्यनुसारी पाठः शुद्ध इति ऊह्यते । तथैव ज. पाठोऽपि ।

३. ज. पुस्तकपाठे '**किं न**'इति पदद्वयं नास्ति ।

४. '**अत्र**'- ज.

५. '**-सद्भावान्न संशयः**'-ज.

**यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते नित्यः शब्दः श्रावणत्वाच्छब्दत्ववदिति । अत्र प्रत्यनुमानस्याङ्गसाकल्याभिमाने सदुत्तरमेव । अन्यथा साधर्म्यसमाद्यन्तर्भावः । तस्मादङ्गीकृतानधिकबलेन[१] बाधचोदनं प्रकरणसम इत्युदयनः ।**

**एतदप्ययुक्तम् । यथा प्रतिदृष्टान्तसमादावन्यतरचोदनेनैकजातित्वं तथा साधर्म्यसमादिनाऽप्येकजातित्वसम्भवेन पृथक्करणानुपपत्तिः[२] । तदुद्धारस्तु तद्वदेव ॥**

**(भा.च.) सत्यपि निर्णयकारण इति ॥** समानधर्मादिमात्रेण[३] इत्यादिकमेव लक्षणवाक्यम् । मात्रपदव्यावर्त्यो निर्णायकाभाव इति भावेन सत्यपि निर्णयकारण इत्युक्तम् । आदिपदेन असाधारणधर्मविप्रतिपत्त्योर्ग्रहणम् । असति निर्णयकारणे संशयापादनस्य सदुत्तरत्वात् तद्व्यवच्छेदाय सत्यपि निर्णयकारण इत्युक्तम् । **अत्रेति ॥** जातिवादिना एवमुक्ते सति वादिना इति वक्तव्यमिति सम्बन्धः ।

**स्वन्यायविरोध इति ॥** विपक्षसाधारणधर्मेण संशयापादनात्[४]

---

१. **जना.–** अङ्गीकृतानधिकबलेनेति । एतत्सदुत्तरबाधचोदनेऽतिव्याप्तिनिरासाय। एतदेवोक्तं वरदराजेन । **'तुल्यत्वमभ्युपेत्यैव परहेतोः स्वहेतुना । बाधेन प्रत्यवस्थानं प्रकरणसम इष्यते ॥'** इति । अस्य साधर्म्यसमाद्यपेक्षयाऽऽधिक्यमेव नास्तीति निराकरोति– एतदपीति । एकजातित्वं त्वयाऽङ्गीकृतमिति शेषः ॥ **पृ.सं - ४०३.**

२. **'पृथक्करणानुपपत्तेः'** ज.

३. *मूले* **'साधारणमात्रेण'** *इति पाठः दृश्यते । तत्र* **'समानधर्मादिमात्रेण'**– *इति पाठः समीचीनः स्यात् ।*

४. **'संशयोपपादनात्'** घ.

सत्प्रतिपक्षत्वमारोप्यम् । तथा चैवं जातिवादिनो नेदं धूमानुमानं स्वसाध्यसाधकं प्रतिपक्षयुक्तत्वात् । शब्दानित्यत्वसाधककृतकत्वानुमानवदित्यभिमतम् । तत्र प्रतिपक्षयुक्तत्वहेतुना धूमानुमाने यद्यसाधकत्वनिश्चयः तर्हि स्वसाध्यसाधकसद्धेत्वसद्धेतुसाधारणपदार्थत्वधर्मेण[1] **'साधकत्वसन्देहः'** किं न स्यादित्यापादनसम्भवात् स्वव्याघात इत्यर्थः ।

**प्रत्यनुमानेनेति** ॥ साध्याभावसाधकानुमानेनेत्यर्थः । **अन्यथा** अनभ्युपगमे । **साधर्म्येति** ॥ अनभ्युपेतयुक्ताङ्गेन[2] साधर्म्येण प्रत्यवस्थाने साधर्म्यसमः । तादृशेन वैधर्म्येण प्रत्यवस्थाने वैधर्म्यसम इत्यादिप्रकारान्तरेणान्तर्भावो द्रष्टव्यः । **तस्मादिति** ॥ अत्र सदुत्तरे कालात्ययापदिष्टव्यवच्छेदायाङ्गीकृतानधिकबलेनेत्युक्तम् ।

**प्रतिदृष्टान्तसमादाविति**[3] ॥ दृष्टान्ते साध्येन साधनेन वा सहचरितस्य धर्मस्य[4] पक्षे निवृत्त्या साध्यसाधनयोरन्यतरापकर्षरूपापकर्षसम आदिशब्दग्राह्यः । **एकजातित्वसम्भवेनेति** ॥ अनभ्युपेतयुक्ताङ्गसाधर्म्येण[5] वैधर्म्येण बाधप्रतिरोधयोरन्यतरोद्भावनं साधर्म्यसम इत्युक्त्वा प्रकरणसमस्याप्युक्तलक्षणलक्षितत्वेनैकजातित्वसम्भवेनेत्यर्थः । अस्याः प्रकरणसमजातेः स्वन्यायविरोधेनोद्धारस्तु साधर्म्यसमादिवदेवेत्यर्थः ।

तथा चाधिकबलत्वाभावान्नेदं बाधकमिति वाच्यम् । बाधकत्वे

१. **'साधारणेन पदार्थत्वधर्मेण'**– क.

२. **'मुक्ताङ्गेन'** – ख. ३. **'प्रतिदृष्टान्तसमाविति'**– ख.

४. **'सहचरितधर्मस्य'**– क. घ. पाठः ।

५. **'युक्ताङ्गे साधर्म्येण'**– ख. घ. पाठः । **'युक्ताङ्गेन साधर्म्येण'**– इति पाठः समीचीनः स्यात् ।

अधिकबलवत्त्वं न तन्त्रम्[१] इत्यङ्गीकारे तु एवं जातिवातिनः नेदं स्वसाध्यसाधकं बाधितविषयत्वादित्यनुमानमभिप्रेतम् । एवं त्वदुक्तानुमानेऽपि स्वसाध्यसाधकानुमानेन साधारणपदार्थत्वादिना असाधकत्वरूपसाध्याभावचोदनसम्भवात् स्वन्यायविरोध इति भावः ।

**(प्र.प.) अहेतुसमः ॥ [२]हेतोः साध्यापेक्षया पूर्वापरसहभावनिरासेनाहेतुत्वचोदनमहेतुसमः । यथा न तावत् सर्वसाधनं साध्यपूर्वम्[३] । साध्याभावे तन्निरूप्यसाधनत्वायोगात् । नापि साधनं पश्चाद्भावि । साधनाभावे साध्यायोगात् । नापि द्वयोर्यौगपद्यम् । अविशेषेण साध्यसाधनभावायोगादिति ।**

**अत्र कृतौ पूर्वभाविनः साधनत्वम् । साधनशक्तेः परानपेक्षत्वात् । तद्व्यवहारस्य बुद्धिस्थेनैव साध्येनोपपत्तेः । [४]ज्ञप्तौ तु यथायथं पक्षत्रयमपि । ज्ञातत्वाज्ञातत्वाभ्यां तु विशेष इत्युत्तरं वाच्यम् । तदनङ्गीकारे तु स्वन्यायविरोध इति ॥**

---

१. ख. पाठे '**न**' इति नास्ति ।

२. **जना.** – हेतोरिति । साध्यापेक्षयेत्येतदनन्तरं पूर्वापरसहभावान् विकल्प्येति शेषः । एतदेवाऽह वरदराजः । '**हेतोर्विकल्प्य साध्यार्थपूर्वापरसहोदयम् । त्रिधाऽपि तस्य हेतुत्वभङ्गोऽहेतुसमो भवेत् ॥**' इति । अत्राहेतुत्वचोदनमहेतुसम इत्येवोक्तेऽनैकान्त्यादिना हेतुत्वचोदने सदुत्तरेऽतिव्याप्तिः । तद्वारणाय हेतोरित्यादि । **पृ.सं- ४०६.**

३. '**तावत् साधनं साध्यात् पूर्वभावि । साध्याभावेन तन्निरूप्य-**' ज.

४. **राघ.**– ज्ञप्तौ त्विति । यथायथमित्यव्ययीभावः ॥ पक्षत्रयमिति । कारणं पूर्वभावि सदेव कार्यं ज्ञापयति । कार्यं तु पश्चाद्भावि सदेव कारणं ज्ञापयति। रसस्तु रूपसहभूतः सन्नेव रूपं ज्ञापयतीति यथायथमित्युक्तम् । **पृ.सं- ४०७.**

अर्थापत्तिसमः ॥ अर्थापत्त्याभासेन प्रत्यवस्थानमर्थापत्तिसमः[१] । यथा पर्वतोऽग्निमान् इत्युक्ते अर्थादापद्यतेऽन्यदनग्निमदितीत्यादि[२] । तथा च साध्यविकलो दृष्टान्त इति[३] ।

अत्रानुपपद्यमानदर्शनाद् उपपादके बुद्धिरर्थापत्तिः । न चात्रानुपपद्यमानं किञ्चिदस्ति । अतो नायं प्रसङ्ग इति वाच्यम् । उक्तविपरीताक्षेपमात्रमर्थापत्तिरित्यङ्गीकारे तु स्वन्यायविरोध इति ।

उपपत्तिसमवद् बीजाभावान्नेदं जात्युत्तरम्[४] ॥

अविशेषसमः ॥ साधनप्रतिबन्द्या तदितरधर्मेण तद्वतां सर्वपदार्थानामविशेषापादनमविशेषसमः । यथा यदि धूमवत्त्वात् पर्वतमहानसयोरग्निमत्त्वाविशेषः । तदा सर्वभावानां सत्त्वादनित्यत्वाविशेषप्रसङ्ग इति ।

अत्र व्याप्त्यादिसदसद्भावाभ्यां विशेषान्न प्रतिबन्दीग्रहणमित्युत्तरं वाच्यम्[५] । तदनङ्गीकारेण प्रवृत्तस्य स्वन्यायविरोध इति ॥

**(भा.च.) पूर्वेति**[६] ॥ साध्यादिति शेषः । साधनत्वायोगादिति ॥

---

१. जना.– एतदेवाह वरदराजः । **'व्याप्तिं विना वादिवाक्यादर्थाक्षेपाभिमानतः। विपरीतसमारोपमर्थापत्तिसमं विदुः ॥'** इति । पृ.सं- ४०९.

२. 'अन्यदग्निमदिति' - ज.

३. 'इत्यादि' - ज.

४. *च. पुस्तके इदं वाक्यं नास्ति ।*

५. वेदे.– उत्तरं वाच्यमिति । तथा च कृतौ ज्ञप्तौ च पूर्वं साध्यसत्त्वमनुपयोगि, किन्तु तज्ज्ञानमेवातो युक्ताङ्गाधिकत्वमेवेति भावः ॥ पृ.सं- ४११.

६. *एतेन* 'पूर्वभावीति'- *मूलपाठष्टिप्पण्यनुसारेनोह्यते ।*

पूर्वभावित्वरूपसाधनत्वायोगादित्यर्थः । **पश्चादिति** ॥ साध्यादित्यनुवर्तते । पश्चात् पश्चाद्भावीत्यर्थः । **साध्यायोगादिति** ॥ तथा च साध्यस्यैवाभावेन तन्निरूपितपूर्वभावित्वमपि न सम्भवतीत्यर्थः । **यौगपद्यमिति** ॥ सव्येतरविषाणवत् समानकालत्वमित्यर्थः ।

हेतोः पूर्वापराभावादिनिरासेन निराक्रियमाणहेतुत्वं कृतिज्ञप्तिसाधारणमिति भावेन जात्युत्तरमुद्धरति– **कृताविति** ॥ उत्पत्तावित्यर्थः । **परानपेक्षितत्वादिति** ॥ स्वापेक्षया पश्चाद्भाविकार्यानपेक्षत्वादित्यर्थः ।

नन्विदमस्य साधनमिति व्यवहारस्य परसापेक्षत्वानुभवात् साधनशक्तेः परापेक्षत्वमेवेत्यत आह- **तद्व्यवहारस्येति**[१] ॥ तथा च साधनशक्तिव्यवहारेऽपि साध्यप्रतीतिमात्रापेक्षा, न तु साध्यसत्तापेक्षेति भावः । **यथायथं** = यथायोग्यं पक्षत्रयमपि ज्ञाप्यापेक्षया पूर्वापरसहभाविनां त्रयाणामपि ज्ञापकत्वमिति पक्षत्रयमप्यस्तीत्यर्थः ।

**ज्ञातत्वाज्ञातत्वाभ्यामिति** ॥ ज्ञापकं तु ज्ञाप्यापेक्षया प्रथमं ज्ञातं सद् ज्ञापकम् । ज्ञाप्यं तु तदानीमज्ञातमित्येव विशेषः । न तु ज्ञाप्यज्ञापकयोः पूर्वभावित्वपश्चाद्भावित्वनियमरूपो विशेष इत्यर्थः । **तदनङ्गीकार इति** ॥ [२]साधकशक्तेरन्यानपेक्षत्वानङ्गीकार इत्यर्थः ।

**स्वन्यायेति** ॥ अस्मिन् जात्युत्तरे कारणशक्तिशून्यत्वमारोप्यम् । तथा च नेदं धूमानुमानं स्वसाध्यसाधकं कारणशक्तिशून्यत्वात् नृशृङ्गवदित्यभिमतम् । अस्मिन्नपि कारणशक्तिशून्यत्वलिङ्गेऽसाधकत्व [३]रूपसाध्यापेक्षया पूर्वापरभावविकल्पनासाधकत्वरूपसाध्यसाधकत्वाभावस्याऽपादनसम्भवात्[४] स्वन्यायविरोध इत्यर्थः ।

१. 'व्यवहारस्येति'- इति क.पाठः । २. 'साधनशक्तेः' घ.
३. 'असाधक' - क. ४. 'अप्यापादनसम्भवात्' घ.

**अर्थापत्त्याभासेनेति** ॥ व्याप्तिरहितार्थदर्शनेनार्थान्तरकल्पनमर्थापत्त्याभासः । तेन प्रत्यवस्थानमर्थापत्तिसमः । समीचीनार्थापत्त्या प्रत्यवस्थानव्यावृत्त्यर्थमर्थापत्त्याभासेनेत्युक्तम् । **इत्यादीति** ॥ तथा धूमवत्त्वादित्युक्ते पर्वतादन्यत्र निर्धूममिति प्राप्तम् । तेन साधनविकलो दृष्टान्त इत्यापादनमादिशब्दार्थः ।

**अत्रेति** ॥ अर्थापत्त्याभासेन प्रत्यवस्थाने कृत इत्यर्थः । **न चात्रेति** ॥ पर्वतोऽग्निमानित्युक्त्या प्रतिज्ञातेऽर्थे महानसादेरग्निमत्त्वं विनाऽनुपपद्यमानं न किञ्चिदप्यस्तीत्यर्थः । **प्रसङ्गः** आपादनं न युक्तमित्यर्थः । **आक्षेपमात्रमिति** ॥ न तु कल्प्यमानार्थेन[१] विना कल्पकस्यानुपपत्तिरपि वाच्येति भावः ।

**स्वन्यायेति** ॥ एवं जातिवादिनः नेदं धूमानुमानं स्वसाध्यसाधकं दृष्टान्ते साध्यवैकल्यादित्याद्यभिमतम् । अत्रापि इदमसाधकमित्युक्त्या अन्यत् सर्वं साधकमिति प्राप्तम् । तथा च साध्यविकलो दृष्टान्त इति दूषणसम्भवात् स्वन्यायविरोध इत्यर्थः ।

**साधनप्रतिबन्धेति** ॥ साधनेन पक्षदृष्टान्तयोरविशेषापादनरूपे उत्कर्षसमेऽतिव्याप्तिवारणाय तदितरेण साधनव्यतिरिक्तेनेत्युक्तम् । **तदितरधर्मेण** साधनेतरधर्मेण । **तद्वतां** साधनेतरधर्मवताम् । सर्वेषामपि कयाचिद् रीत्या अविशेषापादने बीजप्रदर्शनार्थं साधनप्रतिबन्धेत्युक्तम् । [१]**तदु** तदपि लक्षणशरीरप्रविष्टम् । **सर्वभावानामिति** ॥ सर्वपदार्थानामित्यर्थः ।

---

१.'**विकल्प्यमानार्थेन**' - क.

१.*पदमिदं मूलपाठे नोपलभ्यते । तत् कुत्रत्यमिति चिन्त्यम् ।*

**व्याप्त्यादिसदसद्भावाभ्यामिति** ॥ धूमस्य वह्निना व्याप्तिसद्भावाद् धूमवत्त्वेन निमित्तेन पर्वतमहानसयोर्वह्निमत्तयाऽविशेषो युक्तः । नहि सत्त्वरूपधर्मस्यानित्यत्वेन साकं व्याप्तिरस्तीति वैलक्षण्यादित्यर्थः ।

**तदनङ्गीकारेणेति** ॥ अविशेषापादने व्याप्तिर्न प्रयोजिका । किन्तु सहचारमात्रं प्रयोजकमिति व्याप्त्यनङ्गीकारेण प्रवृत्तस्येत्यर्थः । **स्वन्यायेति** ॥ एवं वदतो जातिवादिनः नेदं स्वसाध्यसाधकमप्रयोजकत्वादित्यभिमतम् । अत्रापि प्रयोजकत्वेन निमित्तेन वाद्यनुमानाप्रयोजकानुमानान्तरयोरसाधकत्वेनाविशेषः स्यात् । तर्हि त्वदुक्तरीत्यैव सर्वभावानां सत्त्वाद् अनित्यत्वेनाविशेषः स्यादित्यापादनसम्भवात् स्वन्यायविरोध इत्यर्थः ।

**(प्र.प.) उपपत्तिसमः ॥ उभयहेतूपपत्त्या [१]प्रत्यवस्थानमुपपत्तिसम इत्येके । यथा यदि शब्दस्यानित्यत्वोपपादकं कृतकत्वमस्तीत्यनित्यत्वमिष्यते तर्हि नित्यत्वोपपादकमस्पर्शत्वमस्तीति नित्यत्वमपि किं नेष्यत इति ।**

**एतदसत् । साधर्म्यसमाद्यभेदात् । तस्मात् मत्पक्षेऽपि किमपि साधनं भविष्यतीति सामान्यतः प्रत्यवस्थानमुपपत्तिसम इत्युदयनः ।**

**इदमप्यसत् । केवलाया एवमुक्तेर्निर्बीजत्वात् । प्रमाणोपपादने तु उपपादकस्य[२] साधुत्वे सदुत्तरत्वात् । असाधुत्वे तस्यैवोद्भाव्यत्वेनाजातित्वात् ।**

---

१. 'अवस्थान-' ज.

२. उपपादकं हेतुः ।

उपलब्धिसमः ॥ निर्दिष्टहेत्वभावेऽपि साध्योपलब्ध्या हेतोरप्रयोजकत्वाभिधानमुपलब्धिसम इत्येके । यथा क्वचिद् धूमवत्त्वाभावेऽप्यग्निमत्त्वोपलब्धेरप्रयोजकं धूमवत्त्वमिति । उत्थानबीजाभावान्नेदं जात्युत्तरम् । किन्तु हान्याद्याभास एव । तस्माद् वादिवाक्यस्यावधारणे तात्पर्यमारोप्यावधारणं विकल्प्य दूषणमुपलब्धिसम इत्युदयनः । यथा पर्वतोऽग्नि-मानित्युक्ते किं पर्वत एवाग्निमानुत पर्वतोऽग्निमानेवेति । नाऽद्यः । महानसादेरप्यग्निमत्त्वात् । न द्वितीयः । कदाचि-दनग्निमत्त्वादित्यादि ।

इदमप्यसत् । तात्पर्यान्तरारोपेण सामान्यछलत्वात् । विकल्पेनोत्थानान्नेति चेन्न । अवधारणस्यैव विकल्पेना-वधारणतात्पर्यारोपापरिहारात् । व्यवच्छेदवाक्यार्थरुची-नामवधारणं स्थितमेवेति चेन्न । तेषामप्यतद्व्यावृत्त्यङ्गी-कारेणैवंविधावधारणस्यानिष्टत्वात् ॥

अनुपलब्धिसमः ॥ [1]उपलब्ध्यादिविषयिधर्माणां स्वात्मनि

१. जना.– उपलब्धीति । अत्र विषयः साध्यधर्मः । लिङ्गजन्यानुमितिविषयत्वात्। सोऽस्यास्तीति विषयी पक्षस्तद्धर्माणामित्यर्थः । तत्त्वेति । उपलब्धित्वेत्यर्थः। तत्त्वव्याघातापादनमात्रस्य प्रकारान्तरेण सदुत्तरेणापि सम्भवात् तद्व्यावृत्तये स्वात्मनीत्यादि । एतदप्युक्तं वरदराजेन । 'स्वस्मिन् विषयिधर्माणां तत्तद्रूपप्रकल्पनात् । विपर्ययप्रसङ्गः स्याज्जातिश्चानुपलब्धितः ॥' इति ।

पृ.सं- ४१७

**वृत्त्यवृत्त्या[1] तत्त्वव्याघातापादनमनुपलब्धिसमः । यथोपलब्धिः स्वात्मनि वर्तते चेदुपलब्धत्वाद् घटादिवदनुपलब्धिः । न वर्तते चेत् तथाऽपि तद्वदेवेत्यादि ॥**

**अत्र विषयापेक्षयोपलब्धित्वस्य स्वात्मनि वृत्त्यवृत्तिभ्यां न निवृत्तिरिति वक्तव्यम् । तदनङ्गीकारे[2] स्वन्यायविरोधः स्वक्रियाविरोधो वेति ॥**

**(भा.च.) उभयहेतूपपत्त्येति** ॥ उभयोर्वादिप्रतिवाद्यभिमतसाध्ययोरुभाभ्यामुक्तहेत्वोरुपपत्त्या सम्भवाभ्युपगमेनेत्यर्थः । **साधर्म्यसमाद्यभेदादिति** ॥ यदि महानससाधर्म्येण धूमवत्त्वेन पर्वतस्य वह्निमत्त्वं तर्हि ह्रदसाधर्म्येण द्रव्यत्वेन निरग्निः किं नेष्यत इत्यापादनरूपसाधर्म्यसमस्य तथा वैधर्म्यसमस्याप्युक्तरूपत्वसम्भवादिति भावः । **मत्पक्षेऽपीति** ॥

**'अस्मत्पक्षेऽपि किमपि प्रमाणमुपपत्स्यते ।**
**त्वत्पक्षवदिति प्राप्तिरुपपत्तिसमो मतः ॥'**

इत्युक्तप्रकारेणास्मत्पक्षः सप्रमाणकः पक्षत्वात्, त्वत्पक्षवदिति प्रत्यवस्थानमुपपत्तिसम इत्यर्थः ।

**केवलाया इति** ॥ प्रमाणोपन्यासं विनेत्यर्थः । तथा चासाधकेऽपीदं

---

१.'वृत्त्यवृत्त्योः' च .

२. वेदे.–तदनङ्गीकार इति । विषयापेक्षयाऽप्युपलब्धित्वस्यानङ्गीकार इत्यर्थः । इदमत्राऽकूतम् । जातिवादिप्रमेयमप्युपलब्धित्वादस्तीत्यङ्गीकर्तव्यम् । तथा च तत्राप्युपलब्धेः स्वात्मनि वृत्त्यवृत्तिभ्यामभाव एव चासिद्धिरिति स्वन्यायविरोधः । पृ.सं- ४१८.

साधकमित्यभिमानो हि जात्युत्थानबीजम् । साधकानुपलम्भेनैव-मुक्तेर्निर्बीजतयोत्थानबीजाभावान्नेदं जात्युत्तरमिति भावः । **असाधुत्वे** युक्ताङ्गराहित्ये, **तस्यैव** युक्ताङ्गराहित्यस्यैव । **उद्भाव्यत्वेनेति** ॥ प्रतिवादिनेति शेषः । तथा च उद्भाव्यदोषवदुत्तरमेव[1] जात्युत्तरमिति भावः ।

**अजातित्वादिति** ॥ अस्मत्पक्षेऽपि किमपि प्रमाणं भविष्यतीत्युत्तरस्य जात्युत्तरत्वाभावादित्यर्थः । तथा चानभ्युपेतयुक्ताङ्गकप्रति-प्रमाणोपन्यासानुसारेणैव तस्य जात्युत्तरत्वात् सामान्यतः प्रमाणं भविष्यतीत्युत्तरं न जातिरिति भावः ।

**निर्दिष्टहेत्वभावेऽपीति** ॥ धूमरहितस्थलेऽप्ययोगोलके वह्न्युप-लब्धेरिति भावः । **उत्थानबीजाभावादिति** ॥ साध्याभाववति हेतुसत्त्व-स्यैवाप्रयोजकत्वशङ्कोत्थानबीजत्वात् । हेत्वभाववति साध्यसत्त्वे त्वप्रयोजकत्वशङ्कोत्थानबीजमसम्भावितमिति भावः ।

तर्हीदमुत्तरं कुत्रान्तर्गतमित्यत आह– [2]**हान्याद्याभास एवेति** ॥ प्रतिज्ञाहान्याद्यप्राप्तौ तदुद्भावनवदप्रयोजकत्वाप्राप्तौ तदुद्भावनरूपत्वेन हान्याद्याभासान्तर्गतमिति भावः ।

**तस्मादिति** ॥ सावधारणवाक्ये अवधारणं विकल्प्य दूषणस्य सदुत्तरत्वात् तद्व्यवच्छेदायावधारणे तात्पर्यमारोप्येत्युक्तम् ।

**इत्यादीति** ॥ यो यो धूमवानसावसावग्निमान् यथा महानस इत्युक्ते किं महानसे धूमाग्नी अन्ययोगव्यवच्छेदेन स्तः ? किं वा अयोग-व्यवच्छेदेन ? नाऽद्यः । पर्वतादेरपि धूमादिमत्त्वात् । न द्वितीयः । महानसस्यापि कदाचिद् धूमादिरहितत्वादित्यादिरादिशब्दार्थः ।

१.'**दोषमेव उत्तरमेव**' - क. २.'**हान्याद्याभासा एवेति**'-ख.घ.

**इदमप्यसदिति** ।। एकदेश्युक्तलक्षणवद् उदयनोक्तमप्यसदित्यर्थः । **तात्पर्यारोपेणेति**[1] ।।

**'[2]तात्पर्यवैपरीत्येन कल्पितार्थस्य बाधनम् । सामान्यच्छलम्'**

[3]इति परोक्तसामान्यछललक्षणलक्षितत्वात् छलोत्तरमेवेदं[4] न जात्युत्तरमिति भावः ।

ननु तर्हि विकल्पमुखेन प्रवृत्तस्य दूषणस्य छलोत्तरत्वे विकल्पमुखेन दूषणं कुत्रापि नोच्येत । सम्भावनामात्रेण विकल्पसम्भवादित्यत आह- **विकल्पेनेति** ।। अस्मिन्नर्थे तात्पर्यमस्ति नवेति अविकल्पनाद[5]वधारण-स्यैवेत्युक्तम् । **व्यवच्छेदेति** ।। सर्वं वाक्यं सावधारणमिति न्यायेनेतर-व्यवच्छेदविशिष्टवाक्यार्थे रुचीनामादरवताम् अवधारणे तात्पर्यस्यापि सद्भावान्नावधारणांशे तात्पर्यारोप इति भावः ।

**तेषामिति** ।। तथा च पर्वतोऽग्निमानित्युक्त्याऽनग्निमद्व्यावृत्तिरेव तात्पर्यगत्या बोध्यत इति भावः ।।

**उपलब्ध्यादीति** ।। अनुपलब्धिरिच्छा चेत्यादिशब्दार्थः । तथा चेदमित्थमेव तथोपलब्धेः[6] इत्यादिप्रकारेण वादिना प्रयुक्ते तत्रायं विकल्पः प्रवर्तत इति ध्येयम् । **तथाऽपीदमेवेति** ।। उपलब्धिः स्वात्मनि न वर्तते चेत् तदोपलब्ध्यभावे घटादिर्यथाऽनुपलब्ध[7] एवमुपलब्धिरपि अनुपलब्ध एव स्यात् । न तूपलब्धिरित्यर्थः ।

---

१.**'तात्पर्यान्तरारोपेण'** इति मूलपाठः ।

२.**'सामान्यवैपरीत्येन'**- घ.

३.**'छलमिति'** - घ.

४.**'छलमेवेदं'** - क.

५.**'विकल्पनात्'** - क.

६.**'उपलब्धिः'** - ख.घ.

७.**'उपलब्ध एव'** घ.

**इत्यादीति** ॥ तथाऽनुपलब्धेरिदं नास्तीत्युक्तेऽनुपलब्धिः स्वात्मनि वर्तते न वा । आद्ये घटादिवदनुपलब्ध एव स्यात् । न त्वनुपलब्धिः। द्वितीये तूपलब्ध एव स्यादित्यापादनमादिशब्दार्थः ।

**अत्रेति** ॥ एवं वस्तुस्वरूपापलाप इत्यर्थः । तथा च घटादिस्वस्व-विषयापेक्षया[१]ऽर्थप्रकाशत्वरूपमुपलब्धित्वं स्वात्मन्यस्त्येव । अतस्त्वया विकल्पिताभ्यां स्वात्मनि वृत्त्यवृत्तिभ्यां[२] उपलब्धित्वस्या-निवृत्तिरिति वक्तव्यमित्यर्थः ।

**स्वन्यायविरोधः स्वक्रियाविरोध वेति**[३] ॥ अत्रैवं जातिवादिनो नेयमुपलब्धिः स्वसाध्यसाधिका, असिद्धत्वादिति विवक्षितम् । इयं चासिद्धिः स्वात्मनि वर्तते न वा । आद्ये घटादिवदसिद्ध एव स्यात् । न त्वसिद्धिनामकः[४] पदार्थः । द्वितीये तु, सिद्ध एव स्यात् । न त्वसिद्धिः । तथाचासिद्धत्वस्यापि स्वोक्तन्यायेनासिद्धत्वप्राप्त्या स्वन्यायविरोधः । उपलब्धिं निराकुर्वन्नुपलब्धिसम्पादनाय वचनक्रिया-मुपादत्त इति स्वक्रियाविरोधो वेत्यर्थः ।

**(प्र.प.) नित्यसमः ॥ विशेषणधर्मस्य तदतद्रूपता-विकल्पेन[५]धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमः । यथा शब्दोऽनित्य इत्युक्तेऽनित्यत्वं नित्यमनित्यं वा । आद्ये धर्मिणो[६] नित्यत्वापातः । द्वितीये तन्नाशे पुनः शब्दस्य नित्यत्वापत्तिरित्यादि ।**

---

१.'स्वविषयापेक्षया' घ. २.'वृत्त्यनिवृत्तिभ्याम्' - क.
३.'इवेति' *सर्वमातृकापाठः ।* ४.'त्वसिद्धनामकः' - घ.
५.'तदतद्रूपतां विकल्प्य' – च. ६.'धर्मिणोऽपि' – च.

अत्र स्वपक्षे निर्वाहान्तरविवक्षया परपक्षे दौर्घट्यापादने तात्पर्यं चेत् सदुत्तरमेव । विशिष्टस्वरूपनिराकरणं चेत् तदादौ निर्वाहो वाच्यः । तदनभ्युपगमेन प्रवृत्तस्य स्वन्यायस्वक्रियाविरोधाविति ॥

अनित्यसमः ॥ [१]वादिसाधनप्रतिबन्ध्या धर्मान्तरेण तद्वतां साध्यधर्मवत्त्वापादनमनित्यसमः । यथा यदि कृतकत्वाच्छब्दोऽनित्यः स्यात् तर्हि सत्त्वात् सर्वमनित्यं स्यादिति ।

इयमप्यविशेषसमलक्षणेनैव सङ्गृहीतत्वान्न पृथग् वाच्यैव ॥

कार्यसमः ॥ हेतोः सन्दिग्धासिद्ध्या प्रत्यवस्थानं कार्यसम इति केचित्[२] । यथा शब्दो नित्यः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रयत्नानन्तरीयकत्वमुत्पाद्यत्वेन[३] व्यङ्ग्यत्वेन वेति सन्दिह्यत इति । इदमप्यन्यथासिद्ध्युद्भावनत्वात्[४] सदुत्तरमेव । तस्मात् पक्षादीनामन्यतमस्यासिद्धिमुद्भाव्य तत्साधकत्वेन स्वयमुत्प्रेक्षितस्य दूषणेन वादिसाधनभङ्गः कार्यसम इत्युदयनः ।

१. जना.– वादीति । उत्कर्षसमव्यावृत्त्यर्थं धर्मान्तरेणेत्युक्तम् । एतदेवाऽह वरदराजः । 'साधर्म्यादिर्विपक्षस्य सपक्षत्वप्रसञ्जनम् । साधनप्रतिबन्ध्या यत् स ह्यनित्यसमो मतः ॥' इति । पृ.सं - ४२३.

२. जना.– केचिदिति । जरन्नैयायिका इत्यर्थः । अन्यथासिद्धीति । हेतोरिति शेषः ॥ उत्प्रेक्षितस्येति । हेतोरिति शेषः । एतदप्युक्तं वरदराजेन । 'असिद्धतां वादिहेतोरुक्त्वा तं साधयेत् स्वयम् । तद्दूषणान्मूलहेतुभङ्गः कार्यसमो भवेत् ॥' इति । पृ.सं - ४२४.

३. 'प्रयत्नानन्तरीयकत्वं किमुत्पाद्यत्वेन' च.

४. 'उद्भाव्यत्वात्' च.

यथा शब्दोऽनित्यः कार्यत्वादित्युक्ते कार्यत्वमसिद्धम् । तत्साधकं च प्रयत्नानन्तरीयकत्वं वाच्यम् । तच्चान्यथासिद्धमिति ।

इदमप्यनभिप्रेततात्पर्यारोपाच्छलमेवेति ॥

हान्याद्याभासः ॥ प्रतिज्ञाहान्याद्यप्राप्तावपि भ्रान्त्यादिना तदुद्भावनं हान्याद्याभासः । स प्रमाणविरोध एव । हान्याद्याभासस्य[१] प्राश्निकादिभिः प्रमितत्वात् ॥

अप्राप्तकाले ग्रहणम् ॥ उद्भावनकालमप्राप्यातिक्रम्य वा निग्रहस्थानोद्भावनमप्राप्तकाले ग्रहणम् । तदसङ्गतमेवेति ॥

अपसिद्धान्तः ॥ अपसिद्धान्तस्तु [२]स्ववचनविरोध एव । यथा प्राभाकरस्येश्वराभ्युपगमः ॥

**(भा.च.) विशेषणधर्मस्येति** ॥ साध्यधर्मस्येत्यर्थः ॥ अत्र प्रमाणबाधेन साध्यधर्मविशिष्टत्वभङ्गनिराकरणाय तदतद्रूपताविकल्पेनेत्युक्तम् । **नित्यत्वापात इति** ॥ निराश्रयस्य धर्मस्यावस्थानायोगादिति भावः । **तन्नाशे** अनित्यत्वनाशे । इत्यादीत्यादिशब्दाद् यथायोगं तत्तत्साध्यानुसाराद् विकल्पोऽनुसन्धेयः ॥

**स्वपक्ष इति** ॥ शब्दनित्यत्वपक्षे निर्वाहान्तरविवक्षया नित्यत्वं[३]

---

१. 'हान्याद्यभावस्य' च.

२. **जना.**– स्ववचनविरोध एवेति । पूर्वाचार्यवाक्यस्यापि स्वयमभ्युपगतत्वेन स्ववचनत्वादिति भावः । प्राभाकरस्येति । तस्य निरीश्वरवादित्वादिति भावः । पृ.सं -४२८.

३. 'अनित्यत्वम्' घ.

नित्यमनित्यं वेति विकल्प्य दूषणस्य परिहारं [१]वक्ष्यामीत्याशयेना-नित्यत्वपक्षे दौर्घट्यापादने तात्पर्यं चेदित्यर्थः । तदा तर्हि आदौ पूर्वमुक्तविकल्पकोट्यन्यतरपक्षमाश्रित्य पक्षान्तरमाश्रित्य वा समाधानं वाच्यमित्यर्थः ।

**प्रवृत्तस्येति ॥** विशिष्टमात्रनिराकरणे प्रवृत्तस्येत्यर्थः । एवं जाति-वादिनः, नेदं कृतकत्वं स्वसाध्यसाधकं प्रतितर्कपराहतत्वात् । सम्मतवदित्यभिमतम् ।

अत्र साध्यासाधकत्वं धर्मिणो भिन्नमभिन्नं वा । आद्ये भेदपरम्परयाऽ-नवस्थाप्रसङ्गाद् भिन्नस्य तस्य पक्षेऽभावः । द्वितीयेऽसाधकत्वरूपधर्मस्य पक्षावृत्तित्वेन तद्विरोधिसाधकत्वप्राप्तेरसाधकत्वरूपधर्मवैशिष्ट्यभङ्ग इति स्वन्यायविरोधः । विशिष्टमात्रं निराकुर्वन् साध्यासाधकत्वविशिष्ट-साधनाय[२] प्रवर्तत इति स्वक्रियाविरोध इत्यर्थः ।

[३]**वादिसाधनप्रतिबन्ध्येति ॥** सत्प्रतिपक्षेऽतिप्रसङ्गवारणायेदं विशेष-णम् । **इयमप्यविशेषसमलक्षणेनैव सङ्गृहीतत्वादिति ॥** यथा प्रकरण-समजातिः साधर्म्यसमलक्षणेन सङ्गृहीता तथाऽविशेष-समजातिरपि सङ्गृहीतेत्यर्थः । तथा च [४]साधनप्रतिबन्धतदितरधर्मेण साध्य-तदितरान्यतरधर्मवत्तया विशेषापादनमविशेषसम इत्युक्ते सत्य-प्यविशेषसमलक्षणेनैवानित्यसमोऽपि सङ्गृहीत इति भावः ।

प्रयत्नानन्तरीयकत्वं पुरुषप्रयत्नानन्तरभावित्वमित्यर्थः । **उत्पाद्यत्वेन**

---

१. '**विवक्ष्यामि**' घ.

२. '**साध्यसाधकत्वविशिष्टसाधनाय**' घ.

३. '**वादिसाधनप्रतिबन्धेति**' *सर्वमातृकापाठः ।*

४. '**साधनप्रतिवन्ध्या तदितरधर्मेण**' इति पाठः स्वरसः ।

**वेति** ॥ पुरुषप्रयत्नेनेति शेषः । **इदमपीति** ॥ यथा प्रत्यनुमानेन[1] प्रत्यवस्थानं प्रकरणसम इत्येतत् सदुत्तरम्, तथा सन्दिग्धासिद्ध्या प्रत्यवस्थानमप्यन्यथासिद्ध्युद्भावनरूपत्वात् साध्येनेव साध्याभावेन सहापि हेतुसत्त्वोद्भावनरूपत्वात् सदुत्तरमेव । न तु जात्युत्तरमिति भावः ।

**पक्षादीनामिति** ॥ साधनादिरादिशब्दार्थः । **तत्साधकत्वेन स्वयमुत्प्रेक्षितस्य दूषणेनेति** ॥ एतद्विशेषणं वाद्यभिमतस्य पक्षादि-साधकस्य दूषणेन पक्षादीनामन्यतमस्यासिद्ध्युद्भावनेन वादिसाधन-भङ्गस्य सदुत्तरस्य व्यवच्छेदाय ।

**इदमपीति** ॥ उपलब्धिसमवत् कार्यसमरूपं जात्युत्तरमपि अभिप्रेतारोपाद्[2] वक्तुरनभिप्रेते पक्षाद्यन्यतमस्य साधके तात्पर्यारोपात् कारणाच्छलमेव न जात्युत्तरमित्यर्थः । **इति**शब्दो जात्यन्तर्भावकथन-परिसमाप्तौ ।

निरनुयोज्यानुयोगांशयोश्छलजात्योरन्तर्भावमभिधाय तदंशस्य हान्याद्याभासस्य स्वोक्तान्तर्भावं वक्तुं तत्स्वरूपमाह– **प्रतिज्ञा-हान्याद्यप्राप्ताविति** ॥ **भ्रान्त्यादिनेति** ॥ अत्राऽऽदिशब्देन परव्यामोहो न गृह्यते । प्रतिज्ञाहान्यादिव्यावृत्त्यर्थं[3] प्रतिज्ञाहान्याद्यप्राप्तावपीति विशेषणम् । **भ्रान्त्यादिनेति** स्वरूपकथनम् ।

अप्राप्तकाले ग्रहणस्य स्वोक्तान्तर्भावं वक्तुं लक्षणमाह– **उद्भावना-कालमप्राप्यातिक्रम्य वेति** ॥ अत्र निग्रहस्थानोद्भावनकाला-तिरिक्तकाले निग्रहस्थानोद्भावनमप्राप्तकाले ग्रहणमित्येव लक्षणम् ।

१.'**प्रत्यक्षानुमानेन**'- क. २.'**अनभिप्रेतारोपात्**'-क.घ.
३.'**प्रतिज्ञाहान्यादिव्यावृत्त्यर्थः**'– ख .

अतिरिक्तकालस्तदूद्भावनकालात् पूर्वकाल उत्तरकालश्चेति भावेन **अप्राप्यातिक्रम्य** वेत्युक्तम् ।

**असङ्गतमेवेति** ।। उद्भावनकाल एव तदुद्भावनस्याऽकाङ्क्षितत्वाद् अन्यदोद्भावने त्वन्याकाङ्क्षाभिधान[1]रूपासङ्गतमित्यर्थः । उद्भावन-कालात् पूर्वोत्तरकालयोरुद्भाव्यतया तस्य निग्रहस्याप्राप्तेरतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनरूपत्वं वाऽस्तीति ज्ञेयम् ।

*(परोक्तहेत्वाभासानाम् अन्तर्भावः)*

**(प्र.प.) हेत्वाभासः ।। पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद् व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति हेतोः पञ्च रूपाणि । तत्रान्वयव्यतिरेकिणः पञ्चापि विवक्षितानि । इतरयोस्तु चत्वारि । केवलान्वयिनो विपक्षाभावेन ततो व्यावृत्त्यभावात् । केवलव्यतिरेकिणः सपक्षाभावेन तत्र सत्त्वानुपपत्तेः ।**

**तत्र विवक्षितरूपेषु कतिपयसहिताः कतिपयरहिता हेत्वा-भासाः । ते चासिद्धविरुद्धानैकान्तिकानध्यवसितकाला-त्ययापदिष्टसत्प्रतिपक्षप्रकरणसमाः ।**

**तत्र व्याप्तस्य पक्षधर्मत्वप्रमितिः सिद्धिः । तदभावोऽसिद्धिः । [2]तद्वानसिद्धः । स चतुर्विधः । व्याप्यत्वासिद्धः आश्रयासिद्धः पक्षधर्मत्वासिद्धः एतत्प्रमित्यसिद्धश्चेति ।**

---

१.'अनिधान' - ख.

२. वेदे.– तद्वानिति । व्याप्तस्य पक्षधर्मत्वप्रमित्यभाववानित्यर्थः । अयं च विशिष्टाभावः । कचिद्व्याप्त्यभावेन कचित्पक्षाभावेन कापि हेत्वभावेन कचित्प्रतीत्यभावेन चतुर्विधोऽपि लक्ष्येऽनुगत इति ध्येयम् ।। **पृ.सं- ४३०.**

**तत्र व्याप्यत्वासिद्धो द्विविधः । साध्यसम्बन्धरहितः सोपाधिकसम्बन्धश्चेति । आद्यो यथा । सर्वं क्षणिकं सत्त्वादिति । अयमुभयसम्बन्धाभावादव्याप्तावन्तर्भूतः[१] । द्वितीयो यथा । वैधीहिंसाऽधर्मसाधनं हिंसात्वाद् ब्रह्महिंसावदिति । हिंसात्वपापसाधनत्वयोः[२] सम्बन्धे निषिद्धत्वस्योपाधेः सत्त्वात् ।**

**(भा.च.)** इदानीं हेत्वाभासानां स्वोक्तोपपत्तिदोषेष्वन्तर्भावकथनाय हेत्वाभासरूपनिग्रहस्थानं लक्षयितुमुपोद्घातमाह– **पक्षधर्मत्वमित्यादिना ॥ पञ्चरूपाणीति ॥** हेतोः स्वसाध्यसाधकत्वपक्षधर्मत्वादीनि पञ्च, अङ्गभूतानीत्यर्थः । **तत्रेति ॥** कतिपयरूपहीना हेत्वाभासा इत्येव लक्षणम् । पूर्वदलं[३] त्वेतल्लब्धार्थपरं ज्ञेयम्[४] ।

**उभयसम्बन्धाभावादिति ॥** पक्षादन्यत्रोभय[५]सम्बन्धाभावादित्यर्थः । **अव्याप्तावन्तर्भवतीति ॥** असिद्धिरव्याप्तिश्चेति हेतुविरोध इत्युक्ताव्याप्तावन्तर्भवतीत्यर्थः । सोपाधिकः सम्बन्धो यस्येति विग्रहः । **उपाधेः सत्त्वादिति ॥** सोपाधिकसम्बन्धो व्याप्यत्वासिद्ध इति शेषः ।

*(सोपाधिकस्यान्तर्भावः)*

**(प्र.प.) साध्यव्यापकत्वे सति साधनाव्यापक उपाधिः ।**

---

१.**'अव्याप्तावन्तर्भवति'** *इति भावचन्द्रिकानुसारी पाठः ।*

२.**'-पापसाधनयोः'** *इति मुद्रितपुस्तके ।*

३.**'पूर्वतदलं'**- क.ख.घ.पाठः ।

४. हेतुवदवभासनत्वघटनाय 'कतिपयसहिताः' इत्युक्तम् । (रा.टि)

५.**'पक्षादन्यतोभय-'** *इति सर्वमातृकापाठः ।*

निषिद्धत्वं च साध्यमधर्मसाधनत्वं व्याप्नोति । यत्राधर्म-साधनत्वं तत्र निषिद्धत्वमिति नियमात् । न व्याप्नोति च साधनत्वाभिप्रेतं[१] हिंसात्वम् । पक्षे हिंसात्वसद्भावेऽपि निषिद्धत्वस्याभावात् ।

अयं तु विप्रतिपत्तेः[२] प्रागव्याप्त्युन्नायकः । वैधहिंसायाः [३]साधनाव्यापकत्वान्निवर्तमानं निषिद्धत्वं साध्यव्यापकत्वा[४]-न्निवर्तयद्धिंसात्वस्य साध्याभावसम्बन्धमापादयतीति । विप्रतिपत्त्युत्तरकालस्तु[५] प्रतिपक्षोन्नायको भवति । साधना-व्यापकत्वात् पक्षाद् व्यावर्तमान उपाधिः साध्यव्यापकत्वात् तद् व्यावर्तयति ।

ततश्चोपाध्यभावः साध्याभावसाधने हेतुर्भवति । वैधहिंसाऽधर्मसाधनं न भवति, अनिषिद्धत्वात्, भोजन-वदिति । तथा च सोपाधिकस्याव्याप्तौ प्रतिज्ञायाः समबल-विरोधे चान्तर्भावः ॥

**(भा.च.)** तर्हि किमुपाधेर्लक्षणमिति जिज्ञासायामाह- **साध्य-व्यापकत्वे सतीति** ॥ धूमानुमाने महानसत्वादेरुपाधित्ववारणाय

---

१.'साधनाभिमतम्' च.

२. अनुमानप्रवृत्तेः' च.

३. 'वैधीहिंसायाः' इति भावचन्द्रिकानुसारी पाठः ।

४. अत्र 'तत्' इत्यधिकं पदं च.पाठेऽस्ति ।

५.'अनुमानप्रवृत्त्युत्तरकालं तु' – च.

साध्यव्यापकत्वे सतीति विशेषणम् । तत्रैव[1] धूमानुमाने प्रमेयत्वादेरुपाधित्ववारणाय साधनाव्यापकत्वे सतीति विशेषणम् ।

**व्याप्नोतीति** ॥ साकल्येन सम्बद्ध्य वर्तत इत्यर्थः । **साधनाभिमतं**[2] साधनत्वेनाभिमतम् ।

**अयं त्विति** ॥ अयमुपाधिः पक्षे विप्रतिपत्तेः उपाध्याहितसाध्यतदभावकोटिकसन्देहात् प्रागित्यर्थः । [3]अव्याप्तेर्व्याप्त्यभावस्योन्नायकः, अनुमापक इत्यर्थः । हिशब्दस्तत्कार्यस्य[4] न्यायप्रसिद्धतां सूचयति ॥

कथमनुमापक इत्यत आह- **वैधीहिंसाया**[5] **इति** ॥ हिंसात्वरूपसाधनवति पक्षेऽभावेन साधनाव्यापकत्वादित्यर्थः । तत्राधर्म-साधनत्वं साध्यमापादयतीति अव्याप्त्युन्नायक इति सम्बन्धः । **विप्रतिपत्त्युत्तरकालीन इति**[6] ॥ निषिद्धत्वरूपोपाध्यनुसन्धानानन्तरं पक्षे तद्व्यावृत्त्यनुसन्धानहिंसात्वरूपहेत्वनुसन्धानाभ्यां तदभावकोटिकविप्रतिपत्तौ सत्यां तदुत्तरकालमित्यर्थः ।

**प्रतिपक्षोन्नायको भवतीति** ॥ पक्षे साध्याभावसन्देहेन [7]प्रतिपक्षानुमानावकाशोपपत्तेरिति भावः ।

प्रतिपक्षोन्नायकत्वमेवोपपादयति– [8]**'साधनस्याव्यापकत्वादित्यादिना** ॥ **व्यावर्तयतीति** ॥ साध्यमिति शेषः । **ततश्च** तस्मादेव उपाधेः साध्यव्यापकत्वादेवेत्यर्थः । **हेतुर्भवतीति** ॥ व्यापकाभावस्य व्याप्याभावनियतत्वादिति[9] भावः ।

---

१.'तत्र' घ. २.**'साधनाभिमतः'**- ख. ३.**'अव्याप्तिः'**- क.
४.**'हिशब्दस्तूत्कर्षार्थस्य'** - ख. ५.**'वैधहिंसायाः'**- ख.
६.**'विप्रतिपत्त्युत्तरकालस्तु'** *इति मूलपाठः । तदनुसारिणा प्रतीकेन भाव्यमिति भाति।*
७. **'प्रतिपक्षावकाशोपपत्तेः'** - क. ८.**'साधनाव्यापकत्वात्'** इति मूलपाठः
९.'व्याप्त्यभावनियतत्वादिति' - क.

तथाऽपि सोपाधिको व्याप्यत्वासिद्धः कुत्रान्तर्भूत इत्यत आह- **तथा चेति ॥ अव्याप्ताविति ॥** पक्षे साध्यसन्देहापादितव्याप्तिसन्देहे सतीत्यर्थः । [1]**समबलप्रमाणविरोधेऽन्तर्भाव इति ॥** हिंसात्वरूप-सोपाधिकानुमाने साध्याभावसाधकनिषिद्धत्वव्यतिरेकानुमाने[2] च पक्षा-दन्यत्र व्याप्तिलक्षणबलस्य पक्षधर्मतारूपबलस्य च साम्यादिति भावः ।

*(आश्रयासिद्धेरन्तर्भावः)*

**(प्र.प.) आश्रयासिद्धोऽपि द्विविधः । [3]असदाश्रयः सिद्ध-साधनश्चेति ॥**

**आद्यो यथा । शशविषाणं तीक्ष्णं, विषाणत्वादिति । प्रमाणविरोधाद्यसङ्कीर्णोदाहरणाभावादयं हेत्वाभास एव न भवति ।**

**द्वितीयो यथा । ईश्वरवादिनं प्रति क्षित्यादिकं सकर्तृकं कार्यत्वादिति । अयमसङ्गतावन्तर्भवति, अनाकाङ्क्षितसाधनाय प्रवृत्तत्वात् ॥**

*(पक्षधर्मत्वासिद्धेरन्तर्भावः)*

**पक्षधर्मत्वासिद्धोऽनेकविधः । यथा शब्दो नित्यश्चाक्षुषत्वा-दित्यादि ।**

**[4]तत्र व्यधिकरणासिद्धो न दूषणमित्युक्तमेव ।**

---

१.'समवलविरोधे' इति मूलपाठः । २.'व्यतिरेकरूपानुमाने' घ.

३.'असदाश्रयासिद्धः' च.

४. वेदे.– तत्र व्यधिकरणेति । न तु पक्षधर्मतानियम इत्यत्रेत्यर्थः । तत्र हि भिन्नदेश-कालयोरप्यूर्ध्वदेशवृष्टिनदीपूरयोर्हेतुहेतुमद्भावस्य सांव्यावहारिकत्वदर्शनादित्युक्त-मिति भावः ॥ पृ.सं - ४४०.

**व्यर्थविशेषणासिद्धो व्यर्थविशेष्यासिद्धश्चाऽधिक्येऽन्तर्भवतः । भूरियं शशविषाणोल्लिखिता भूत्वादित्यप्रसिद्धविशेषणासिद्धिस्तु दोषान्तरासङ्कीर्णोदाहरणाभावान्न हेत्वाभासः ।**

**इतरः पक्षधर्मत्वासिद्धोऽसिद्धावन्तर्भवति ।**

**एतत्प्रमित्यसिद्धो यथा । धूमबाष्पाविवेके धूमवत्त्वादिति । अस्याप्यसिद्धिरेव । पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्धः । यथा शब्दो नित्यः कृतकत्वादिति । अयमपि साध्यसम्बन्धाभावे सति तदभावसम्बन्धित्वादव्याप्तः ॥**

**(भा.च.) आश्रयासिद्धोऽपीति** ॥ व्याप्यत्वासिद्धवदाश्रयासिद्धोऽपीत्यर्थः ।

**प्रमाणविरोधाद्यसङ्कीर्णोदाहरणाभावादिति** ॥ स्वरूपासिद्धिरादिशब्दार्थः । तथा च प्रमाणबाधस्वरूपासिद्धिव्यावृत्तोदाहरणाभावाद् असदाश्रयो हेतुर्हेत्वाभास एव न भवतीत्यर्थः ।

तथा चासतः शशविषाणादेः पक्षत्वे साध्यविशिष्टस्य बाधाद्धेतुः स्वरूपस्य पक्षेऽभावाच्च बाधादिनैव दुष्टत्वोपपत्तेराश्रयासिद्धेरपि पृथग्दोषत्वे, वन्ध्यासुतो न वक्ता, अचेतनत्वादित्यादेरपि[1] हेत्वाभासत्वप्रसङ्गाद् आश्रयासिद्धस्त्वसदाश्रयत्वेन हेत्वाभास एव न भवतीति भावः ।

पक्षधर्मत्वासिद्धिः सर्वत्र न दोषः । क्वचित् साध्यसाधनयोर्वैय्यधिकरण्यरूपासिद्धेरदोषत्वादिति भावेन पक्षधर्मत्वासिद्धस्त्वनेक[2] इत्याह- **पक्षधर्मत्वासिद्ध इति** ॥

---

१. '**अचेतनत्वादेरित्यादेरपि**'- ख.घ. २. '**अनेकविधः**'- क.घ.

स्वरूपासिद्धभागासिद्धव्यधिकरणासिद्धव्यर्थविशेषणासिद्धव्यर्थविशेष्यासिद्धाप्रसिद्धविशेषणासिद्धादिभेदेनानेकविध इत्यर्थः । **उक्तमेवेति** ॥ साध्यव्यधिकरणस्यापि हेतोर्व्याप्तेः पक्षधर्मतानियमाभावस्य[१] चोक्त्या व्यधिकरणासिद्धिर्न दोष इत्युक्तं भवतीति भावः ।

पर्वतोऽग्निमान् नीलधूमवत्त्वादित्ययं व्यर्थविशेषणासिद्धः ।

तत्रैव प्रयोगे धूमाख्यज्ञापकादित्ययं व्यर्थविशेष्यासिद्ध इति ज्ञेयम् । **दोषान्तरासङ्कीर्णोदाहरणाभावादिति** ॥ प्रमाणबाधाव्याप्तिरूपदोषद्वयरहितोदाहरणाभावादित्यर्थः । विशेषणस्याप्रसिद्धत्वे साध्यरूपविशेषणाभावेन साध्यविशिष्टस्य बाधितत्वाद् व्याप्त्यभावाद्वाऽस्य दुष्टत्वेनाप्रसिद्धविशेषणत्वेनास्य दुष्टत्वकल्पकाभावात् तेन रूपेणायं न हेत्वाभास इति भावः ।

**इतरः पक्षधर्मत्वासिद्ध इति** ॥ व्यधिकरणासिद्धादिरूपपक्षधर्मत्वासिद्धादन्यः स्वरूपासिद्धभागासिद्धादिरूपोऽसिद्धिरव्याप्तिश्चेति हेतुविरोध इत्युक्तासिद्धावन्तर्भवतीत्यर्थः । **धूमबाष्पाविवेक इति** ॥ धूमबाष्पयोर्भेदाग्रहदशायामित्यर्थः ।

ननु व्याप्त्यादिप्रमित्यभावरूपासिद्धेरन्यगतायाः कथं हेतुदोषत्वमित्याशङ्क्य यत्सद्भावे लिङ्गत्वेनाभिमतं साध्यप्रमां न जनयतीत्युक्तलक्षणलक्षितत्वाद् हेतुविरोधरूपासिद्धावन्तर्भावो युक्त एवेति भावेनाऽह– **असिद्धावेवेति** ॥ अन्तर्भाव इति शेषः ।

**पक्षविपक्षयोरेवेति** ॥ साधारणानैकान्तिकव्यवच्छेदायैवेत्युक्तम् ।

---

१. 'नियमादिभावस्य' - क.

पक्ष एव वर्तमान इत्युक्तेरनध्यवसितेऽतिप्रसङ्गः । विपक्ष एव वर्तमान एवेत्युक्ते शब्दोऽनित्यः पटत्वादिति[१] स्वरूपासिद्धविशेषेऽतिप्रसङ्गः । तदर्थं पदद्वयं ज्ञेयम् ।

*(अनैकान्तिकान्तर्भावः)*

**(प्र.प.) पक्षसपक्षविपक्षवृत्तिरनैकान्तिकः । यथा शब्दो नित्यः प्रमेयत्वादिति । अयमपि साध्यतदभावसम्बन्धित्वादव्याप्त एव ।**

**साध्यासाधकः पक्ष एव वर्तमानो हेतुरनध्यवसितः । स त्रिविधः । तत्र सपक्षविपक्षरहितो यथा सर्वमनित्यं सत्त्वादिति । उभयवान् यथा भूर्नित्या गन्धवत्त्वादिति । सपक्षवान् विपक्षरहितो यथा शब्दोऽभिधेयः शब्दत्वादिति[२] ।**

**अयं व्याप्यत्वासिद्धत्वान्न पृथग्घेत्वाभास इत्येके ।**

**अन्ये तु सपक्षविपक्षरहितो व्याप्यत्वासिद्धः । सति सपक्षे पक्षमात्रवृत्तिः सपक्षवान् विपक्षरहितश्च द्वावनैकान्तिके[३]-ऽन्तर्भवत इत्याहुः ।**

**तथाहि । सव्यभिचारोऽनैकान्तिकः । व्यभिचारोऽन्वयतो व्यतिरेकतश्च । तत्रान्वयस्य भूमिः पक्षः सपक्षश्च । तदतिरेकेण विपक्षेऽपि वर्तमानः साधारणानैकान्तिकः । व्यतिरेकस्य**

---

१. 'पदत्वादिति' क. 'पटवत्त्वादिति' घ. पाठः ।

२. 'प्रमेयत्वादिति' च.

३. 'सति सपक्षे पक्षमात्रवृत्तिः द्वावनैकान्तिके' च.

**भूमिर्विपक्षः सपक्षैकदेशोऽपि । तत्र सर्वस्मिन्नपि सपक्षेऽवर्तमानोऽसाधारणानैकान्तिक इति । [1]सर्वथाऽव्याप्ता-वन्तर्भवति[2] । उभयसम्बन्धाभावात् ।**

**व्यतिरेकव्याप्तिसम्भवादयं न हेत्वाभास इत्येके ।**

**अपरे तु सत्यपि सपक्षे तत्रावर्तमानस्य किं व्याप्तिरेव नास्त्युत केवलव्यतिरेकिवदस्तीति सन्देहावस्कन्दनाद् हेत्वाभासत्व-मित्याहुः ॥**

**(भा.च.) पक्षेति ॥** अत्र विपक्षवृत्तित्वग्रहणं सद्धेतुव्यावृत्त्यर्थम्। सपक्षवृत्तित्वग्रहणं विरुद्धव्यावृत्त्यर्थम् । शब्दोऽनित्यश्चाक्षुषत्वादिति स्वरूपासिद्धव्यावृत्त्यर्थं पक्षवृत्तित्वग्रहणम् । **साध्यासाधक इति ॥** केवलव्यतिरेकिण्यतिव्याप्तिपरिहारार्थं साध्यासाधक इत्युक्तम् । स्वरूपासिद्धव्यावृत्त्यर्थं पक्षपदम् अनैकान्तिकव्यावृत्त्यर्थमेवेत्युक्तम् ।

**अयमिति ॥** अनध्यवसित इत्यर्थः । **अन्ये त्विति ॥** उक्त-त्रिविधेष्वनध्यवसितेषु मध्ये आद्यो व्याप्यत्वासिद्धः, द्वितीयतृतीयौ द्वौ सति सपक्षे पक्षमात्रवृत्तित्वलक्षणाक्रान्तावनैकान्तिकेऽन्तर्भवत[3] इत्या-हुरित्यर्थः ।

सति सपक्षे पक्षमात्रवृत्तिनोः कथमनैकान्तिकेऽन्तर्भाव इत्याशङ्क्य अनैकान्तिकेऽन्तर्भावं स्वोक्तोपपत्तिदोषे चान्तर्भावं वक्तुं पराभिप्रेत-मनैकान्तिकलक्षणमाह– **तथाहीत्यादिना ॥** उचितस्थलोल्लङ्घनं

---

१. *अत्राऽदौ* **'अयम्'** *इति पदं चपुस्तकेऽस्ति ।*

२. **'अव्याप्तेष्वन्तर्भवति'** – च.

३. **'अन्तर्भावः'** *इति सर्वमातृकापाठः ।*

व्यभिचारः । तद्वान् अनैकान्तिक इत्यभिप्रायेणानैकान्तिकलक्षण-मभिधायोक्तस्वरूपं व्यभिचारं विवेचयति– **व्यभिचार इति ॥ व्यतिरेकतश्चेति** ॥ द्विविध इति शेषः ।

**अन्वयतः** अनुचितस्थलेऽप्यन्वयाद् **व्यतिरेकतः** उचितस्थले व्यतिरेकादभावाच्च[1] उचितस्थलोल्लङ्घनरूपो व्यभिचारो द्विविध इत्यर्थः । **तत्रेति** ॥ हेतोरन्वयस्यौचित्यस्य भूमिराश्रय इत्यर्थः ।

ननु विपक्षवर्तिनः कथम् असाधारणानैकान्तिकत्वम् । अनुचित-स्थलवृत्तित्वाभावादित्याशङ्क्य विपक्षस्याप्यनुचितस्थलत्वं वदन् क्वचिदनुमानविशेषे सपक्षैकदेशस्याप्यनुचितस्थलत्वेऽपि सर्वस्यापि सपक्षस्य कुत्राप्यनुचितस्थलत्वाभावात् सपक्षमात्राद् व्यावृत्तौ द्वितीय-तृतीयावनध्यवसितावुचितस्थलवृत्तेरसाधारणानैकान्तिकावेवेति भावेनाऽह– **व्यतिरेकस्येति** ॥ साधनव्यतिरेकस्येत्यर्थः । अत एव हेतोरनौचित्यस्य भूमिरिति भावः ।

**तत्रेति** ॥ तथा च सकलसपक्षस्यानुचितस्थलत्वाभावेन सपक्षमात्र-व्यावृत्तः स्वोचितस्थलोल्लङ्घनेनासाधारणानैकान्तिक इति हेतोर्द्वितीय-तृतीयावनध्यवसितावनैकान्तिकेऽन्तर्गतावपि सर्वथा व्याप्तौ पक्षा-दन्यत्रोभयसम्बन्धाभावेनाव्याप्तावन्तर्भवत इत्यर्थः । आद्यस्यानध्य-वसितस्य परैरेवाव्याप्तावन्तर्भावः कथित इति नास्माभिः प्रयत्नः कार्य इति भावः ।

**उभयसम्बन्धाभावादिति** ॥ भूर्नित्या गन्धवत्त्वादित्यनुमानस्य पक्षादन्यत्र साध्यतदभावाभ्यां सम्बन्धाभावादित्यर्थः । व्यतिरेकव्याप्ति-

---

१. **'व्यतिरेकाभावाच्च'** - क.

सम्भवादित्यस्योपपादक **उभयसम्बन्धाभावादिति** ।। अस्ति व्याप्तिरिति शेषः । सन्दिग्धव्याप्यत्वासिद्धलक्षणहेत्वाभास इत्याहुरित्यर्थः ।

*(बाधस्यान्तर्भावः)*

**(प्र.प.) प्रमाणबाधिते[1] पक्षे वर्तमानो हेतुः कालात्ययापदिष्टः । यथा सर्वं तेजोऽनुष्णं द्रव्यत्वादिति । अत्र धर्मिग्राहकेण साध्यप्रतियोगिग्राहकेण चोपजीव्येन प्रत्यक्षेण पक्षो बाधितः ।**

**चक्षू रूपग्राहकं न भवति । इन्द्रियत्वादिति धर्मिग्राहकानुमानेन बाधितः ।**

**ब्राह्मणेन सुरा पेया, द्रवद्रव्यत्वादित्यागमबाधितः । अयं प्रतिज्ञायाः प्रबलप्रमाणविरोध एव ।**

**समबलप्रमाणविरुद्धः सत्प्रतिपक्षः । यथा वायुः प्रत्यक्षः । प्रत्यक्षस्पर्शवत्त्वादिति । वायुर्न प्रत्यक्षः, रूपरहित-द्रव्यत्वादित्यनेन प्रतिरुद्धत्वात् । अयं प्रतिज्ञायाः समबल-प्रमाणविरोध एव ।।**

---

१. **राघ.**– प्रमाणबाधित इति । प्रमाणेन निश्चितसाध्याभाववतीत्यर्थः । सद्धेतुव्यावृत्तय एतद्विशेषणम् । प्रमाणबाधितत्वं च पूर्वोक्तदिशा प्रत्यक्षादि-त्रयेणेति क्रमेणोदाहृत्य दर्शयति- यथेत्यादिना । तेजोऽनुष्णमित्येवोक्ते तेजोऽन्तरे त्वचौष्ण्यग्रहणसम्भवेन चक्षुर्गृहीते पक्षीकृते कस्मिंश्चित्तेजसि धर्मि-ग्राहकेण वा साध्यप्रतियोगिग्राहकेण वा बाधाभावात् सर्वं तेज इत्युक्तम् । एवं पक्षीभूत एव तेजस्यौष्ण्यस्य त्वचा ग्रहणेनोक्तरूपद्विविधप्रत्यक्ष-बाधोक्तिर्युक्तेति भावः ।। पृ.सं- ४४६.

**स्वपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः । यथा विमतं मिथ्या दृश्यत्वादिति । सत्यत्वेऽप्यस्य वक्तुं शक्यत्वात् । अयं त्वसम्भवीति केचिदाहुः । तदसत् । सत्प्रतिपक्षवदभिमानतः सम्भवात् । अयमपि प्रतिज्ञायाः समबलविरोध एवेति । [1]पक्षाभासा हेत्वाभासान्तर्भूतत्वान्न पृथग्वाच्या इत्याहुः । तदसत् । प्रतिज्ञामात्रेणैव[2] स्फुरणात् । साधने स्वक्रियाविरोधस्वन्यायविरोधयोर्हेत्वाभासानन्तर्भावाच्च ।**

**स्वक्रियाविरोधो यथा । अहं मूक इति । स्वन्यायविरोधो यथा । प्रमेयं प्रमाणानपेक्षमिति ॥**

**(भा.च.) प्रमाणबाधित इति** ॥ इदं विशेषणं सद्धेतुव्यावृत्त्यर्थम् । प्रमाणबाधितविपक्षवृत्त्यनैकान्तिकव्यवच्छेदाय पक्षपदम् । प्रबलप्रमाणस्यैव बाधकत्वाद् धर्मिग्राहकत्वेनोपजीव्यतया प्राबल्यमुपपादयति- **अत्र धर्मिग्राहकेणेति** ॥ तेजोरूपधर्मिणो ग्रहणं चक्षुषाऽपि सम्भवतीति भावेन साध्यप्रतियोगिग्राहकेण वेत्युक्तम् ।

---

१. **'पक्षाभासहेत्वाभास......'** इति मुद्रितपुस्तकपाठः ।

२. **जना.–** प्रतिज्ञामात्रेणैवेति । यो यदनन्तरं ज्ञातः सन्ननुमितिप्रतिबन्धकः स तस्य दोषः । अन्यथा प्रतिज्ञाहान्यादिकमपि हेतुहान्यादिकं स्यादिति भावः। किञ्च यत्र साध्यस्य प्रबलप्रमाणविरोधस्थले हेतूपन्यासस्तत्रैव पक्षाभासानां हेत्वाभासत्वमस्त्वित्याक्षेपः । यत्र हेतूपन्यास एव नास्ति तत्रेयं शङ्का नावतरतीत्याह– साधन इति । नायं साधनशब्दः साधयतीति व्युत्पत्त्या कार्यकर्तृसाधनः । किन्तु कृतकत्वेन घटानित्यत्वसाधने सिद्धसाधनतेत्यादाविव भावसाधनः । सर्वं वाक्यं सावधारणमिति न्यायेन केवलप्रतिज्ञानिर्देशस्थल इत्यर्थः ॥ **पृ.सं- ४४७.**

**पक्ष इति** ॥ साध्यधर्मविशिष्टो धर्माबाधित इत्यर्थः । **धर्मिग्राहकानुमानेनेति** ॥ अयं चक्षुष्मान् रूपज्ञानवत्त्वादिति धर्मिग्राहकानुमानेनेत्यर्थः । **'न सुरां पिबेत्'** इत्यागमेनेत्यर्थः । द्रव्यत्वादिति हेतौ पक्षः आगमेन बाधित इति सम्बन्धः ।

**अयमिति** ॥ कालात्ययापदिष्ट इत्यर्थः । प्रतिज्ञायाः प्रबलप्रमाणविरोध एवान्तर्भवतीत्यर्थः । प्रत्यक्षस्पर्शाश्रयत्वादित्यनन्तरम् अयं हेतुः सत्प्रतिपक्ष इत्यनुवर्तते । अयं सत्प्रतिपक्षः प्रतिज्ञायाः समबलप्रमाणविरोध एवान्तर्भवतीत्यर्थः ।

**स्वपरपक्षसिद्धावपीति** ॥ स्वसाध्यसिद्धौ परसाध्यसिद्धौ च पक्षधर्मत्वादिरूपत्रयोपेत एक एव हेतुः प्रकरणसम इत्यर्थः ।

ननु विश्वं मिथ्या दृश्यत्वाच्छुक्तिरूप्यवद् विश्वं सत्यं दृश्यत्वाद् ब्रह्मवद् इत्येकमेव दृश्यत्वं पक्षद्वयेऽपि पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद् व्यावृत्तिरिति त्रिरूपयुक्तं वाच्यम् । नहीदं युक्तम् । पूर्वानुमाने विपक्षाद् ब्रह्मणो व्यावृत्तत्वे द्वितीयप्रयोगे तस्मिन्नेव सपक्षे सत्त्वायोगाद् द्वितीयप्रयोगे शुक्तिरूप्याद् विपक्षाद् व्यावृत्तत्वे प्रथमद्वितीयप्रयोगे[१] तस्मिन्नेव सपक्षे वृत्त्ययोगाच्चेति[२] भावेन शङ्कते- **अयमिति** ॥ पक्षद्वयेऽपि त्रिरूपो हेतुरित्यर्थः ।

**सत्प्रतिपक्षवदिति** ॥ शब्दोऽनित्यः कृतकत्वाद् घटवदिति, शब्दो नित्यः श्रावणत्वाच्छब्दत्ववदिति साध्यतदभावव्याप्तयोरेकस्मिन् पक्षे वृत्तित्वाभिमानवद् वादिप्रतिवाद्यभिमानतः त्रिरूपत्वोपपत्तेरित्यर्थः । **अयमपि** सत्प्रतिपक्षवत् प्रकरणसमोऽपि ।

---

१.'**प्रथमप्रयोगे**' घ. २.'**सपक्षव्यावृत्त्ययोगाच्चेति**' घ.

ननु यदुक्तमुपपत्तिदोषाणां मध्ये केषाञ्चित् प्रतिज्ञादोषत्वं तदयुक्तम् । प्रतिज्ञादोषाणां हेतुदोषान्तर्गतत्वादिति चोद्यं परिहर्तुमाह- **पक्षाभासा इति** ॥ पक्षदोषा इत्यर्थः । **पृथग्** हेतुदोषेभ्यः सकाशात् पार्थक्येन प्रतिज्ञादोषतया न वाच्या इत्यर्थः । अत्र प्रतिज्ञादोषाणामेव पक्षदोषत्वात् पक्षाभासा इत्युक्तम् ।

**प्रतिज्ञामात्रेणैव स्फुरणादिति** ॥ पदार्थत्वादिति हेतुप्रयोगा-भावेऽपि वह्निरनुष्ण इति प्रतिज्ञोक्तिमात्रेण तत्प्रतिज्ञानुसारेण प्रमाणविरोध-स्ववचनविरोधादेः स्फुरणादित्यर्थः । यो हि यन्निष्ठतया ज्ञातोऽनुमिति-प्रतिबन्धकः स तद्दोष एव । अन्यथा [१]प्रतिज्ञाहान्यादिर्हेतुहान्यादिकं स्यादिति ।

प्रतिज्ञादोषाणां न हेतुदोषत्वम्[२] इत्येतद् युक्त्यन्तरेणापि साधयति- **साधन इति** ॥ अपीति शेषः । लिङ्गवचनेऽपीत्यर्थः । स्वक्रियाविरोध-स्वन्यायविरोधयोरित्येतत् स्ववचनविरोधस्याप्युपलक्षणम् । हेतावपि प्रतीयमानानां स्वक्रियाविरोधादीनां यदा न हेतुदोषान्तर्भावः, तदा प्रतिज्ञायामेव प्रतीयमानानां स्वक्रियाविरोधादीनां न तत्रान्तर्भाव इति किमु वक्तव्यम् इति भावः ।

साधने स्वक्रियाविरोधस्वन्यायविरोधयोरुदाहरणमाह- **अहमित्या-दिना** ॥ **'अहं मूकः'** इति वचनक्रियाकर्तृत्वाभावप्रतिपादकस्यास्य शब्दस्य वचनक्रियया विरोधः ।

यद्वा, पक्षदोषाणां प्रबलप्रमाणबाधसाध्यनिश्चयादीनां बाधित-

---

१. '**प्रतिज्ञाहान्यादेः**' क. ख. २.'**हेतुदोषम्**'- क.

विषयत्वसिद्धसाधनत्वादिरूपेण हेतुदोषान्तर्गतत्वेऽपि स्वन्याय-विरुद्धार्थ[१] एव यत्र साध्यस्तत्र प्रतिज्ञागतस्वक्रियाविरोधस्वन्याय-विरोधयोः हेतुदोषान्तर्भावस्य वक्तुमशक्यत्वाच्च न पक्षदोषाणां हेतुदोषान्तर्भाव इति भावेनाऽह- **साधन इति** ॥ अहं मूकः अवक्तृत्वादिति स्वक्रियाविरुद्धार्थसाधने[२] प्रमेयं न प्रमाणसापेक्षं स्वतःसिद्धत्वादिति स्वन्यायविरुद्धार्थसाधनेन प्रतिज्ञागतयोः स्वक्रिया-स्वन्यायविरुद्धयोस्त्वदभिमतबाधितविषयत्वादिहेत्वाभासेषु हेतुदोषेष्वनन्तर्भावाच्च[३] इत्यर्थः ।

अत्र प्रमेयमात्रं प्रमाणसापेक्षं नेति प्रतिज्ञाय प्रतिज्ञार्थसिद्धये स्वतःसिद्धत्वादिति प्रमाणमुपादीयत इति प्रतिज्ञायाः स्वन्यायविरोधो द्रष्टव्यः ।

स्वक्रियाविरुद्धा प्रतिज्ञा केति पृच्छति- **स्वक्रियाविरोधो यथेति** ॥ प्रतिज्ञायामिति शेषः । स्वन्यायविरुद्धा प्रतिज्ञा केति पृच्छति- **स्वन्यायविरोध इति** ॥ प्रतिज्ञायामिति शेषः । तथा च प्रतिज्ञाया भासमानस्वक्रियाविरोधस्वन्यायविरोधप्रमाणविरोधसिद्धार्थत्वादीनां प्रतिज्ञादोषत्वमेव न तु हेतुदोषत्वम् । अन्यथा हेतौ प्रतीयमानानां व्याप्त्यसिद्धिविरुद्धत्वादीनां पक्षदोषान्तर्भावापातादिति ॥

**(प्र.प.) एवमुदाहरणाभासानपि हेत्वाभासेऽन्तर्भावयन्त-स्तेषां न पृथग्वाच्यतामाहुः ।**

---

१.'**स्वक्रियाविरोधस्वन्यायविरोधार्थः**' ख. घ.पाठः ।

२.'**-साधनेन**' *इति पाठेन भाव्यमिति भाति ।*

३.'**अन्तर्भावाच्च**' - क.

तथाहि । उदाहरणलक्षणरहिता उदाहरणवदवभासमाना उदाहरणाभासाः । तत्र साधर्म्योदाहरणे साध्यविकलो यथा; मनोऽनित्यं मूर्तत्वात् । यन्मूर्तं तदनित्यम् । यथा परमाणुरिति ।

साधनविकलो यथा कर्मेति । उभयविकलो यथाऽऽकाश इति ।

आश्रयहीनो यथा शशविषाणमिति । अव्याप्त्यभिधानं यथा घटवदिति ।

विपरीतव्याप्त्यभिधानं यथा यदनित्यं तन्मूर्तं, यथा घट इति । वैधर्म्योदाहरणे साध्यव्यावृत्तो यथा यदनित्यं न भवति तन्मूर्तं न भवति, यथा कर्मेति । साधनाव्यावृत्तो यथा परमाणुरिति । उभयाव्यावृत्तो यथा घट इति । आश्रयहीनः पूर्ववत् ।

अव्याप्त्यभिधानं यथाऽऽकाश इति । विपरीतव्याप्त्यभिधानं यथा– यन्मूर्तं न भवति तदनित्यं न भवति, यथाऽऽकाश इति ।

अत्र वैधर्म्योदाहरणस्यानुपयुक्तत्वात् तदाभासकथनमनुपयुक्तम् । अव्याप्त्यभिधानं तु न दोषो [१]न्यूनं वा । विपरीतव्याप्त्यभिधानमप्यसङ्गतम् ।

आश्रयहीनत्वं चाऽश्रयासिद्धवददूषणम् । अन्यतरवैकल्येनैव

१.'न्यूनं च' *इति प्रकृतटिप्पण्यनुसारी पाठः स्वरसः ।*

**दृष्टान्तस्य दुष्टत्वादुभयवैकल्यं पृथङ् न गणनीयम्। तस्मात् साध्यवैकल्यं साधनवैकल्यं च द्वयमेव दृष्टान्तदूषणम्। तत्र साध्यवैकल्ये दृष्टान्तो विपक्षो भवति। तत्र वर्तमानं साधनमनैकान्तिकं विरुद्धं वा भवति। साधनवैकल्ये व्याप्यत्वासिद्धिरिति।**

**दृष्टान्तदोषो हेत्वाभासेऽन्तर्भवतीति चेन्न। दृष्टान्तोक्त्यनन्तरं प्रतिभासात्। सपक्षान्तरे वर्तमानस्य साधनस्य दृष्टान्तीकृते सपक्षेऽवृत्तौ हेत्वाभासत्वानुपपत्तेश्च। तत्राप्यनुपदर्शित-व्याप्तिकत्वेन व्याप्यत्वासिद्ध इति चेन्न। तथाऽप्यर्थदोषा-भावादिति॥**

॥ इति **श्रीमज्जयतीर्थपूज्यचरणविरचितप्रमाणपद्धतावनुमानपरिच्छेदः** ॥

(भा.च.) [1]सम्यग् व्याप्तिप्रदर्शनपूर्वकदृष्टान्तवचनम् उदाहरण-मित्युक्तोदाहरणलक्षणरहिता इत्यर्थः। उदाहरणवदवभासमाना इत्येव तत्रोदाहरणपदप्रयोगसम्भवार्थं प्रतिज्ञाभासादिष्वतिव्याप्तिपरिहारार्थं चेति ज्ञेयम्। मन इति, अनित्यमिति[2] पदच्छेदः।

**अव्याप्त्यभिधानमिति** ॥ व्याप्तिप्रदर्शनं विनाऽभिधानमित्यर्थः।

**विपरीतव्याप्त्यभिधानमिति** ॥ पूर्वं व्याप्यमनभिधायेत्यर्थः। **साध्यव्यावृत्त इति** ॥ [3]साध्याभावरहित इत्यर्थः। **पूर्ववदिति** ॥ यथा शशविषाणमिति दृष्टान्तरूपाश्रयहीनं[4] पूर्ववदित्यर्थः।

---

१. *अत्राऽदौ* '**उदाहरणलक्षणरहिता इति**' *इति पाठेन भाव्यमिति भाति।*

२. '**अनित्यत्वमिति**'- ख.घ.

३. '**साध्याव्याप्तः**'- क.

४. '**-पाश्रयाहीनं**'- ख.घ.

**विपरीतव्याप्त्यभिधानमिति**[1] ॥ साधनाभाववचनपूर्वकमभिधान-मित्यर्थः ।

परपक्षमनूद्य दूषयति- **अत्रेति** ॥ **अव्याप्त्यभिधानमिति** ॥ व्याप्त्य-भिधानं विना पर्वतोऽग्निमान् धूमवत्त्वान्महानसवदित्युक्तिमात्रेण गृहीत-व्याप्त्यादिमतस्तत्स्मरणादिसम्भवादिति भावः । **न्यूनं चेति**[2] ॥ दोषत्वपक्ष इति शेषः[3] । तथा च वचनदोष एवायं न तूदाहरणस्येति भावः ।

**आश्रयहीनत्वमिति** ॥ आश्रयासिद्धानुमाने आश्रयराहित्यस्य दोषान्तरासङ्कीर्णोदाहरणाभावात्, वन्ध्यासुतो न वक्तेत्यादिप्रयोग-सम्भवाच्च न दोषत्वम् । एवं दृष्टान्ते साध्यवैकल्यादिदोषान्तरा-सङ्कीर्णोदाहरणाभावात् तथा वन्ध्यासुतो न वक्ता चेतनभिन्नत्वात्[4] शशविषाणवदिति प्रयोगसम्भवाच्च दूषणमित्यर्थः ।

**पृथङ् न गणनीयमिति** ॥ तथा चोभयवैकल्यस्थलेऽन्यतर-वैकल्योद्भावनमात्रेणानुमानस्य दुष्टत्वसम्भवाद्[5] दोषान्तरसद्भावमात्रेण तदुद्भावने विरुद्धादौ तत्तद्दोषोद्भावनानन्तरं व्यभिचारादेरप्युद्भावन-प्रसङ्गाद् उद्भावने चाधिकं नाम निग्रहस्थानमिति वैपरीत्यापाताच्च । अन्यतरवैकल्यरूपदोषापेक्षयोभयवैकल्यं पृथङ्[6] न गणनीय-मित्यर्थः । **विरुद्धं चेति** ॥ [7]सपक्षव्यावृत्तत्व इति भावः ।

किञ्च सपक्षैकदेशवृत्तिधूमानुमानेऽयोगोलकादौ साधनवैकल्येऽपि

---

१.**'विपरीतव्याप्त्यनभिधानमिति'** *इति सर्वमातृकापाठः ।*

२.**'न्यूनं वेति'** *प्रचलितमूलपाठः ।*

३. ख.पाठे इदं वाक्यं नास्ति ।

४.**'चेतनत्वभिन्नत्वात्'**- ख. घ.

५.**'-संवादात्'**-ख.

६.**'न पृथग्'**– ख.

७.**'सपक्षव्यावृत्त इति'**घ.पाठः ।

व्याप्यत्वासिद्धेरभावात् साधनवैकल्यं तावद् दृष्टान्तदोषत्वेनैवानुमान-दूषणम् न हेतुदोषत्वेनेति भावेनाऽह- **स्वपक्षान्तर इति** ॥

ननूक्तरीत्या सपक्षैकदेशवर्तिनः सद्धेतोरप्ययोगोलकस्य दृष्टान्तत्वेन ग्रहणे तत्र साधनवैकल्ये व्याप्तिप्रदर्शनासम्भवाद् अनुपदर्शितव्याप्ति-कत्वलक्षणव्याप्यत्वासिद्धिदोषस्तत्राप्यस्त्येव । तथा च साधनवैकल्यं हेतुदोषत्वेनैव दोष इत्याशङ्क्य परिहरति- **तत्रेति** ॥

**तथाऽपीति** ॥ तथा च[1] व्याप्तिप्रदर्शनाभावेऽवश्यवक्तव्यस्यावचन-मनुक्तिरिति पुरुषदोषत्वेनार्थदोषत्वाभावान्न [2]हेतुदूषणत्वेनानुमान-दूषणमित्यर्थः ।

यद्वा, यो यो धूमवान् स सो[3]ऽग्निमान् इत्यनन्तरं यथा महानस इति वक्तव्ये यथाऽयोगोलक इति कथने त्ववश्यवक्तव्यस्यैकदेशमात्रवचन-रूपवचनदोषोपजीवनेन [4]व्याप्त्यनुपदर्शनदोषप्रवृत्तेः [4]व्याप्त्यनुपदर्शन-रूपवचनदोष एव नत्वर्थदोष इति दृष्टान्ते साधनवैकल्यस्य न हेतुदोषान्तर्भाव इति भावः ।

न च यथाऽयोगोलक इति प्रयोक्त्राऽभिहिते परबोधार्थमवश्य-वक्तव्यस्य महानस इत्यस्यावचनसद्भावात् पुरुषदोषत्वस्य[5] अप्यङ्गी-कारे वचनपुरुषदोषयोः साङ्कर्यप्रसङ्ग इति वाच्यम् । अवश्यवक्तव्यस्य तूष्णीम्भावेनावचनस्थले एकदेशमात्रवचनरूपन्यूनाख्यवचनदोषा-भावेनासङ्कीर्णोदाहरणसम्भवात् ।

१. 'च' पदं घ.पुस्तके नास्ति ।
२. 'हेतुदोषत्वेन' घ.
३. 'सो सो'- ख.घ.
४. 'व्याप्त्यनुप्रदर्शन-' घ.
५. पुरुषदोषदोषत्वस्य - क.

न च दृष्टान्ते साधनवैकल्यस्य दृष्टान्तदोषत्वेनोपपत्तिदोषत्वं न स्यात् । वचनदोषस्याप्युक्तरीत्या समावेशादिति वाच्यम् । यथाऽयो-गोलक इति दृष्टान्तोक्त्यनन्तरमेव साधनवैकल्यस्य प्रतिभासेन तेनैव दुष्टानुमाने दोषान्तरस्यानुमितिप्रतिबन्धकतयाऽकल्पनात् ।

तस्मात् साध्यवैकल्यं साधनवैकल्यं चेत्येतौ दृष्टान्तदोषावेव, साधनवैकल्यस्य वचनदोषपर्यवसानकथनं तु परोक्तहेतुदोषत्व-निराकरणाभिप्रायमित्युक्तं सर्वमनवद्यमिति ॥

**इति श्रीमद्रामचन्द्रतीर्थपूज्यपादानां शिष्येणोपेन्द्रभट्टसूनुना वानिवालनरसिंहेन कृतायां प्रमाणपद्धतिवाक्यविवृतौ भावचन्द्रिकायां द्वितीयः परिच्छेदः ॥**[१]

१.अत्र '**श्रीकृष्णार्पणमस्तु**'- इति लिपिकारपाठः घ.पुस्तकेऽस्ति ।

## ॥ अथाऽगमपरिच्छेदः ॥

*(आगमलक्षणम्)*

**(प्र.प.) निर्दोषः शब्द आगमः । [१]निरभिधेयत्वेनान्वयाभावेन वाऽबोधकत्वं, विपरीतबोधकत्वं, ज्ञातज्ञापकत्वं,**

१. वेदे.– निरभिधेयत्वेनेत्यादिना । अबोधकत्वे निमित्तप्रदर्शनार्थमुक्तं निरभिधेयत्वेनान्वयाभावेनेति । इदमुपलक्षणम् । आकाङ्क्षाऽऽसत्त्यभावाभ्यामप्यबोधकत्वं द्रष्टव्यम् । अत्र निरभिधेयत्वेन जबगडदेत्यादावन्वयाभावेन कुण्डमजाजिनमित्यादौ, आकाङ्क्षाभावेनायमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ वा, आसत्त्यभावेन विलम्बेनोच्चारिते गामानयेत्यादावबोधकत्वं प्रसिद्धमिति द्रष्टव्यम् । विपरीतबोधकत्वादौ योग्यतातात्पर्यभ्रमादिकं निमित्तमिति प्रसिद्धत्वान्नोक्तम् । विपरीतबोधकत्वं च जगन्मिथ्येत्यादिप्रतिवादिवाक्ये द्रष्टव्यम् । ज्ञातज्ञापकत्वं नाम येन योऽर्थः प्रत्यक्षादिना निर्णीतस्तं प्रति तद्बोधकत्वं विवक्षितम् । ततश्च तस्यान्यं प्रति सार्थक्येऽपि तं प्रति दोषत्वम् । अप्रयोजकत्वं तु सर्वथा प्रयोजनशून्यत्वमतोऽनयोर्भेद इति द्रष्टव्यम् ।

न च बहुप्रमाणसंवादश्च दार्ढ्यहेतोरेवेत्युक्तत्वेन कथं ज्ञातज्ञापकत्वं दोष इति वाच्यम् । पूर्वप्रवृत्तप्रमाणेनाप्रामाण्यशङ्काकलङ्कितेनार्थानिर्णये उत्तरोत्तरप्रवृत्तप्रमाणानां तन्निर्णायकत्वेन दार्ढ्यहेतुत्वस्य तदर्थत्वात् । अत्र च निर्णीतज्ञापकत्वमेव दोषत्वेन विवक्षितमित्युक्तत्वात् । इदं च दोषद्वयं क्रमेण स्फीतालोकमध्यवर्तिघटप्रतिपादकवाक्ये काकदन्तपरीक्षावाक्ये च प्रसिद्धम् । अनभिमतप्रयोजकत्वादिकं तु क्रमेण विरक्तं प्रति वाणिज्योपदेशे रोगार्तं प्रति मृतिहरहिममहीधरोत्तरसानुसिद्धसञ्जीवनीकथने, सुरसरित्तटे निविष्टं तृषितं प्रति कूपखननोपदेशे च द्रष्टव्यम् । आदिपदेन च भ्रान्तप्रतारकोक्तत्वसङ्ग्रहः। न तात्पर्यविषयत्वाभावस्य विपरीतबोधकोक्त्यैव प्राप्तत्वात् तात्पर्याविषयप्रतिपादकत्वे हि वाक्यस्य विपरीतबोधकत्वमेव भवति ।

**अप्रयोजनत्वं, अनभिमतप्रयोजनत्वं, अशक्यसाधन-प्रतिपादनं, लघूपाये सति गुरूपायोपदेशनमित्यादिदोषरहितः[1] शब्द आगमः[2] । निर्दोषं वाक्यमिति वा ॥**

*(पदवाक्यलक्षणम्)*

**विभक्त्यन्ता[3]वर्णाः पदम् । आकाङ्क्षासन्निधियोग्यतावतां**

---

शब्दः पदवाक्यात्मको न तु वाक्यात्मक एव । सिद्धान्ते वैदिकानामपि पदानां महायोगवृत्त्या भगवति प्रामाण्यस्योक्तत्वात् । न च यौगिकपदानामपि प्रकृतिप्रत्ययविभागेन च संसर्गबोधकतया वाक्यात्मतैवेति वाच्यम् । तथाऽपि पदसमुदायरूपवाक्यात्मकत्वाभावात् । तथा चात्र लक्षणे पदवाक्योभय-विधोऽपि शब्दो लक्ष्यत्वेन विवक्षितः । अत एव पदसमुदायरूपवाक्यमात्रं लक्ष्यीकृत्य प्रवृत्तं यदागमोऽदुष्टवाक्यं चेति ब्रह्मतर्कवाक्योक्तलक्षणं तदनुसारेण शिष्याणां पदवाक्यादिस्वरूपज्ञापनाय लक्षणान्तरमाह– निर्दोषमिति । **पृ.सं-** ४५८.

१. 'इत्यादिरहितः' च.

२. **जना.–** शब्द आगम इति । पदत्ववाक्यत्वौदासीन्येन तदुभयसाधारण-शब्दत्वमित्यर्थः । न च तर्ह्येकपदमात्रस्य प्रामाण्यप्रसङ्गः । एकपदमात्रस्या-न्वयाभावेनाबोधकत्वरूपदोषवत्त्वेन निर्दोषपदेनैव तन्निरासादिति भावः । **पृ.सं-** ४५७.

३. **राघ.–** वाक्यस्वरूपं विवक्षुस्तदुपयुक्तमाह- विभक्त्यन्ता इति । वर्णा इति, 'बहुवचनमतन्त्रम् । तेन 'अ इति ब्रह्म' 'कश्छन्दसां योगम्' इत्यादावः क इत्यादेः पदत्वसिद्धिः । विभक्त्यन्ता इति व्यधिकरणबहुव्रीहिः । विभक्तिर्नाम सुप्तिङौ । 'विभक्तिश्च (पा.सू.१.४.१०४) सुप्तिङौ विभक्तिसञ्ज्ञौ भवत इति वैयाकरणोक्तेः । सुप्तिङन्तं पदमिति पाणिन्युक्तेः । तदनुराधाद्विभक्त्यन्ता इत्युक्तम् । विभक्त्यन्तत्वस्य वर्णाव्यभिचारेऽपि वर्णा इत्युक्तिः स्पष्टार्थं वा । स्फोटनिरासाय वेति ज्ञेयम् । **पृ.सं-** ४७५.

**वेदे.–** विभक्तीति । जातौ चेदं बहुवचनम् । अतो न वर्णद्वयात्मक-

**पदानां समूहो वाक्यम् । आकाङ्क्षा जिज्ञासा । सा चेतनधर्मः । तद्विषयत्वादर्थाः साकाङ्क्षाः । तत्प्रतिपादकत्वात् पदान्यपि । [1]सन्निधिरविलम्बेनोच्चरितत्वं पदधर्म एव ।**

---

पदेऽव्याप्तिरिति ध्येयम् । जबगडदेत्यादिवर्णसमूहेऽतिव्याप्तिवारणाय विभक्त्यन्ता इति । विभक्त्यन्ते पर्वतोऽग्निमानित्यादिवाक्येऽतिव्याप्तिवारणाय वर्णा इति । तत्र च वर्णानां पदत्वेन प्रवेशेऽपि न वर्णत्वेन प्रवेशोऽतस्तेन तद्व्यावृत्तिरिति ध्येयम् । **पृ.सं- ४७६.**

१. **वेदे.–** अविलम्बेनेति । अव्यवधानेनेत्यर्थः । इदं व्यवधानत उच्चारितेषु गामानयेत्यादिपदेष्वतिव्याप्तिवारणाय । नन्विदमनुपपन्नम् । मौनिश्लोके तत्कृतलिप्यनुमिते उच्चारणाभावेनाव्यापकत्वात् । न चैवमव्यवहितपदलिपिरेवाऽसत्तिरित्यस्त्विति वाच्यम् । लिपेरप्युच्चारणस्थलेऽभावेनासार्वत्रिकत्वात् । किञ्चैवं सत्याप्तेन व्यवहिततयोच्चारिते कुलकादौ योजनयाऽन्वयबोधो न स्यात् । अथाव्यवहितत्वेन पदतात्पर्यमासत्तिरिति विवक्षितमिति चेन्न । शुकबालादिवाक्येऽव्याप्तेः । गिरिर्भुक्तमग्निमानित्यनासन्नोदाहरणेऽतिव्याप्तेश्च । तत्राप्यव्यवहिततात्पर्यकत्वसम्भवात् । तस्मात्किमेतदिति चेदुच्यते । उच्चरितपदेन पदोपस्थित्यनुकूलवक्तृव्यापारमात्रं विवक्षितम् । अव्यवधानपदेन च निष्फलान्वयबोधविरोधिव्यवधानाभावोऽभिप्रेतः । एवं च वक्तृव्यापारत्वं लिप्युच्चारणेऽपि साधारणमिति न मौनिश्लोकादावतिव्याप्तिः । आप्तोक्तकुलकादौ व्यवहिततयोच्चारणेऽप्यव्यवहिततात्पर्यरूपस्य, मौनिश्लोके लिपिरूपस्य शुकादिवाक्ये चोच्चारणरूपस्य वक्तृव्यापारस्य सत्त्वात् । नाप्यनासन्नोदाहरणेऽतिव्याप्तिः । तत्र व्यवधानस्य निष्फलत्वात् । कुलकादौ च छन्दःसंरक्षणायालङ्काररसविशेषोदयाय च व्यवधानस्य वक्त्रा क्रियमाणत्वात् । गिरिर्भुक्तमित्यादौ च तादृशफलदर्शनात् । नापि प्रहरादिव्यवधानेनोच्चारिते गामानयेत्यादिपदसमूहेऽतिव्याप्तिः । तत्र प्रकृतान्वयबोधविरोधिभिः स्वस्व-

**प्रतीतान्वयस्य प्रमाणविरोधाभावो योग्यता पदार्थधर्मः । तद्वाचकत्वात् पदान्यपि योग्यतावन्तीत्युच्यन्ते। तत्र पदत्वेन निरभिधेयत्वस्य, आकाङ्क्षासन्निधिभ्यामन्वयाभावस्य, योग्य-तया विपरीतबोधकत्वस्य च निरासे सत्यशेषदोषनिरासार्थं निर्दोषग्रहणम् ॥**

**(भा.च.)** **हरिः ॐ** ॥ क्रमप्राप्तं शब्दं लक्षयति- **निर्दोषेति** ॥ शब्दानामबोधकत्वं द्विविधं पदार्थाबोधकत्वं[१] संसर्गाबोधकत्वं चेति । तत्राऽद्यं निरभिधेयत्वेन । निर्गतमभिधेयं वाच्यं यस्येति व्युत्पत्त्याऽ-वाचकत्वमेव निरभिधेयत्वं तेन भवति । द्वितीयं त्वर्थानां कर्तृकर्माभावा-द्यन्वयाभावप्रयुक्तमिति भावेनाऽऽह- **निरभिधेयत्वेनेति** ॥

फलैरन्यैर्व्यवधानात् । एवं च निष्फलान्वयबोधविरोध्यव्यवहितवक्तृव्यापार-विषयत्वमेव सन्निधिशब्दार्थ इति न कोऽपि दोष इति । ननूक्तेऽर्थे आकाङ्क्षासत्तिलक्षणे प्रमाणलक्षणटीकोदाहृतेऽनाकाङ्क्षितेऽसन्निहिते च विरक्तं प्रति वाणिज्योपदेशे, चोलेषु वर्तमानं तृषितं प्रति सन्ति सुरसरिति शीतलानि जलानीत्युपदेशे च क्रमेणातिव्याप्तिरिति चेन्न । अत्र तयोरप्युक्तलक्षण-लक्ष्यत्वस्याभिप्रेतत्वात् । न चैवं विरोधः । उक्तोदाहरणयोरागमलक्षण-व्यावृत्तत्वस्योभयत्राप्यभिप्रेतत्वात् । इयांस्तु विशेषः । तत्रोक्तोदाहरणद्वये वाक्यस्वरूपान्तर्गताकाङ्क्षासत्त्योः क्रमेणाभावेनावाक्यतया वाक्यपदेन तद्व्यावृत्तिः सम्पादिता । श्रोतुराकाङ्क्षाभिधायकत्वे सति पूर्वपदसञ्जाता-काङ्क्षापूर्वकत्वमाकाङ्क्षा, सन्निहितार्थाभिधायकत्वे सत्यविलम्बेनोच्चारितत्वं च सन्निहितत्वमित्याकाङ्क्षासत्तिलक्षणयोरुक्तत्वात् । अत्र पुनस्तदुदाहरणद्वये वाक्यत्वप्रसिद्ध्यविरोधेन वाक्यतामङ्गीकृत्य निर्दोषत्वविशेषणेनैव तद्व्यावृत्तिः कृतेति । **पृ.सं - ४७६.**

१.'**पदार्थबोधकत्वं**' – ख. । '**पदार्थानवबोधकत्वम्**' – घ.

[1]विपरीतबोधकत्वं तु विपरीतान्वयबोधकत्वम् । तत्तु[2] वक्तुर्विपरीत-ज्ञानाधीनमिति ज्ञेयम् ।

**ज्ञातज्ञापकत्वमिति** ॥ ज्ञातमात्रज्ञापकत्वमित्यर्थः । तेन विशेष-विधानार्थं चोक्तार्थानुवादरूपशब्दे नाप्रामाण्यप्रसङ्गः[3] । **अप्रयोजनत्व-मिति** ॥ [4]उद्देश्यप्रयोजनरहितत्वमित्यर्थः । स्वस्य परस्य वा प्रयोजनोद्देशं विना वाक्यप्रयोगानुपपत्तेः प्रयोजनं विना प्रयुक्त-वाक्यार्थरूपसंसर्गस्य क्वचिदसङ्गततया क्वचिन्निषेध्यतयाऽवगमा-च्चाप्रयोजनत्वं वाक्याप्रामाण्यापादकतया दोष एवेति भावः ।

[5]**अनभिमतप्रयोजनकत्वं चेति** ॥ बुभुक्षुं जलं ग्राह्यमिति प्रयुक्त-वाक्ये जलगतग्राह्यत्वसंसर्गस्य निषेधशिरस्कत्वेनावगमाद् यत्प्रतीत्यु-द्देशेन वाक्यं प्रवृत्तं तस्याः जलग्राह्यत्वप्रतीतेरनुदयेनानभिमतप्रयोजन-वाक्यस्य प्रवृत्त्यजनकत्वादनभिमतप्रयोजनकत्वं शब्ददोष इति भावः ।

**अशक्येति** ॥ [6]कृत्यसाध्यं यदिष्टसाधनं तस्य प्रतिपादनं, तत्प्रति-पादकमिति यावत् । कृषिरूपेष्टसाधनबुभुत्सया प्रष्टारं दाक्षिणात्यं प्रति कुरुदेशे[7] अनड्वाहो बहवः सन्तीति प्रयुक्तवाक्ये उद्देश्यायाः

१.**विपरीतबोधकत्वं वक्तुरनास्यादिनाऽविद्यमानार्थकबोधकत्वम्** । (रा.टि.पृ.४५७)

२. '**तत्**' - क.

३.'**प्रामाण्यप्रसङ्गः**'- क.घ.

४.'**उद्देश्यं प्रयोजन**' - ख.घ.

५.'**विरक्तस्य वाणिज्योपदेश इवानभिमतप्रयोजनकत्वम्**' (रा.टि.पृ.४५८)

६.'**रोगार्तं प्रति मृतिहरहिममहीधरोत्तरसानुसिद्धसञ्जीवनीकथने अशक्य-साधनप्रतिपादनम्**' (वेदेशीय टि.पृ.४५९)

७.*इतः परं* '**इष्टसाधन**' *इत्यन्तो भागः क. पाठे नास्ति ।*

कृतिसाध्येष्टसाधनप्रतीतेरनुदयाद् अशक्यसाधनप्रतिपादकत्वं शब्ददोष इति भावः ।

**लघूपाये सति गुरूपायोपदर्शनमिति ॥** अल्पायाससाध्येष्टसाधने सत्यपि बह्वायाससाध्येष्टसाधनप्रतिपादकत्वमित्यर्थः । तथा च बह्वायाससाध्येष्टसाधनप्रतिपादकवाक्याद् उद्देश्याया इष्टसाधनत्व-प्रतीतेरनुदयात्[१] गुरूपायप्रदर्शकत्वं वाक्यदोष इति भावः । लघूपायाभावे [२]गुरूपायेऽप्युद्देश्यायाः इष्टसाधनत्वप्रतीतेरुदयाद् अप्रामाण्याभावेन लघूपाये सतीत्युक्तम् । अज्ञानसंशयादिमूलकत्वमादिशब्दार्थः ।

ननु ज्ञातज्ञापकत्वं कथं शब्ददोषः ? सत्यपि तस्मिन् शाब्द-प्रमोदयादिति चेन्न । वाक्यतात्पर्यार्थगोचरप्रमाजनकत्वेनैव वाक्य-प्रामाण्यस्य विवक्षितत्वात् । वाक्यतात्पर्यं तु मानान्तरविरुद्धार्थ इव मानान्तरसिद्धेऽप्ययुक्तम् ।

तथा च [३]ज्ञातज्ञापकत्वमात्रस्थले वाक्यतात्पर्यविषयभूतार्थस्यैवा-भावात् [४]उद्देश्यप्रमितिजनकत्वाभावेन ज्ञातज्ञापकत्वमपि शब्ददोष एवेति ज्ञेयम् । अत एव **'यजमानः प्रस्तरः'** इति वाक्यानां प्रतीतार्थबाधेऽपि तात्पर्यार्थस्य निर्बाधादेव[५] प्रामाण्यमिति ।

**निर्दोषमिति ॥** ननु **'निर्दोषः शब्द आगमः'** इत्यत्र शब्दपदं वाक्यपरं न वा ? नाऽद्यः । निर्दोषं वाक्यमिति वेति[६] वाशब्दानुपपत्तेः ।

१. इतःपरं **'इष्टसाधनत्वप्रतीतेः'** *इत्यन्तो भागः क.कोशे नोपलभ्यते ।*

२. **'गुरूपायोऽपि'** घ.

३. **'ज्ञातज्ञापकमात्रस्थले'** घ.

४. **'उद्देश'** घ.

५. **'बाधादेव'** *इति सर्वमातृकापाठः ।* **'निर्बाधादेव'** *इति समीचीनः पाठ ऊहितः ।*

६. **'निर्दोषं वाक्यं वेति'** - घ.

न द्वितीयः । प्रमाणलक्षणटीकायां **'निर्दोषः शब्द आगमः'** इत्यागम-लक्षणवाक्ये शब्दो वाक्यात्मेति व्याख्यानविरोधादिति चेन्न ।

द्वितीयपक्षाङ्गीकारात् । न च तत्पक्षोक्तदोषः । निर्दोषशब्दत्वस्यैव[1] आगमलक्षणत्वसम्भवेऽपि भगवत्पादैः—

**'आनन्दतीर्थमुनिना ब्रह्मतर्कोक्तिमार्गतः ।**
**मानलक्षणमित्युक्तं सङ्क्षेपाद् ब्रह्मसिद्धये'** *(प्रमाणलक्षणम्)*

इति स्वग्रन्थस्य ब्रह्मतर्कानुसारित्वकथनाद् ब्रह्मतर्के च,

**'अदुष्टमिन्द्रियं त्वक्षं तर्कोऽदुष्टस्तथाऽनुमा ।**
**आगमोऽदुष्टवाक्यं च'** *(वि.त.विनि.परिच्छेदः–१)*

इत्यागमलक्षणकथनेन तथा व्याख्यानकथनसम्भवात् । पद्धतौ त्वावश्यकनिर्दोषत्वविशेषणादेव सकलागमाभासव्यवच्छेदसम्भवात् प्रमाणलक्षणोक्तयथाश्रुतागमलक्षणवाक्यानुसारेण लक्षणमभिधाय, ब्रह्मतर्कवाक्यानुसारेण लक्षणान्तरमुक्तमित्यदोषः ।

अत्र शब्दग्रहणं प्रत्यक्षादिव्युदासार्थम् ।

निर्दोषवाक्यमिति[2] द्वितीयलक्षणे वाक्यस्वरूपं किमिति जिज्ञासाया-मुपोद्घातसङ्गत्या पदस्वरूपमाह— **विभक्त्यन्ता वर्णा इति ॥**

ननु अविलम्बेनोच्चरितत्वं[3] पत्रलिखितमौनिश्लोकगतपदसमूहरूप-वाक्ये नास्तीति चेन्न । [4]उच्चरितत्वमित्यस्य अविलम्बेन पदप्रती-त्यनुकूलव्यापारविषयत्वस्य विवक्षितत्वादिति ।

---

१.**'निर्दोषशब्दस्यैव'** - क.
२.**'निर्दोषं वाक्यमिति'** क. घ.
३.'उच्चारितत्वम्' घ. ४.'उच्चारितत्वमि-' घ.

यद्यपि सन्निहितार्थाभिधायकत्वमविलम्बेनोच्चरितत्वमिति प्रमाण-लक्षणटीकायाम् उक्तम् । तच्च व्यवधानेनोच्चारणस्थले असन्निहितार्थ[१] प्रतिपादकत्ववत् चोले तृषितं प्रति **'सन्ति सुरसरिति जलानि'** इति सहोच्चरितपदानामप्यसन्निहितार्थप्रतिपादकत्वात् सन्निधिपदेनैव तद्-व्युदासः सम्भवतीत्यभिप्रायः । अत्र त्वावश्यक[२]निर्दोषग्रहणादेव सन्ति सुरसरिति जलानीत्यादिवाक्यनिराससम्भवमभिप्रेत्य सन्निधिः सहोच्चरि-तत्वमित्युक्तम् ।

**'निर्दोषं वाक्यमागमः'** इत्यत्र निर्दोषपदकृत्यमाह- **तत्र पदत्वेनेति ॥** सुप्तिङन्तयोरेव पदत्वात्[३] तस्य वाचकत्वनियमात्, निर्दोषमाकाङ्क्षादि-मत्पदसमूहरूपं वाक्यमागम इत्युक्त्या पदग्रहणेनैवावाचकत्वरूप-निरभिधेयत्वनिरासो भवतीति भावः ।

**आकाङ्क्षासन्निधिभ्यामिति ॥** आकाङ्क्षासन्निध्योः पदगतान्वय-नियतत्वादिति भावः । **विपरीतबोधकत्वस्येति ॥** विपरीतान्वयो बाधितान्वयस्तद्बोधकत्वस्येत्यर्थः । **अशेषेति ॥** उक्तातिरिक्त-निष्प्रयोजनत्वाद्यशेषदोषनिरासार्थमित्यर्थः ।

*(अनेकेषु वर्णेषु पदत्वबुद्ध्युपपादनम्, अनेकेषु पदेषु वाक्यत्वबुद्धिप्रतिपादनम् ।)*

**(प्र.प.) पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितं वाच्यवाचक-भावसम्बन्धग्रहणसंस्कारानुगृहीतमन्त्यवर्णसन्निकृष्टं श्रोत्र-मनेकेष्वपि वर्णेष्वेकां पदबुद्धिं जनयति । तथा पूर्वपूर्व-पदानुभवजनितसंस्कारसहकृतमन्त्यपदविषयं श्रोत्रमनेकेषु**

१.**'आसन्निहितार्थ-'** क.घ. २.**'त्वत्यावश्यक-'**क.ख.
३.**'सुप्तिङन्तं पदम्'**(पा.अष्टाध्यायी.१-४-१४).

**पदेष्वेकां वाक्यबुद्धिमाकाङ्क्षाद्यनुसारेण जनयति । तेन वर्णानां पदानां च सहानवस्थितप्रतीतीनामपि समुदायो युज्यते ॥**

**(भा.च.)** ननु विभक्त्यन्ता वर्णा पदमित्युक्तम् । न तद् युक्तम् । विशकलितवर्णेषु पदत्वबुद्धेरभावात् ।

न च विभक्त्यन्ताः समुदिता[1] वर्णा इति वाच्यम् । व्याप्तानां वर्णानामेकस्थाननिवेशलक्षणसमूहस्य सदा सत्त्वेऽपि तत्र पदत्वबुद्धेरभावात् । नचैकबुद्ध्युपारूढत्वलक्षणो वैवक्षिकसमूहो विवक्षित इति वाच्यम् । वर्णानां क्रमिकोच्चारणव्यङ्ग्यतयैकबुद्ध्युपारूढत्वस्याप्यसम्भवात् ।

उक्तरीत्या पदस्वरूपस्यासम्भवे तत्समूहरूपं वाक्यं दूरत[2] एवेत्याशङ्क्य परिहरति- **पूर्वपूर्ववर्णेति ॥ अनेकेष्वपि वर्णेष्विति ॥** तत्तदुच्चारणक्रमेणानेकबुद्धिविषयेष्वपि वर्णेष्वित्यर्थः । **एकामिति ॥** इदमेकं पदमित्येकां पदविषयिणीं बुद्धिं जनयतीत्यर्थः । तथा चैकबुद्ध्युपारूढत्वलक्षणसमूहस्य[3] भिन्नकालोपस्थितवर्णेष्वपि सम्भवाद् विभक्त्यन्तसमुदितवर्णलक्षणपदसम्भवेन पदासम्भवप्रयुक्तो वाक्यस्वरूपासम्भवो नेति भावः ।

ननु तथाऽपि विशकलितेषु पदेष्विदं वाक्यमिति प्रतीतेरभावात् तत्तत्पदोच्चारणक्रमेण पदबुद्धेरपि क्रमिकतयाऽनेकेषु पदेष्वेकबुद्ध्युपारूढत्वसमुदायासम्भवात् पदसमूहो वाक्यमित्येतदयुक्तमित्यत आह– **तथेति ॥**

---

१.**'विभक्त्यन्तसमुदिता वर्णाः'**घ. २.**'दूरे'**-घ. ३.**'समोहस्य'**-ख.घ.

नन्वनेकेषु पदेष्विदमेकं वाक्यमिति प्रतीतिः श्रोत्रेण चेद् भवति तर्ह्यनेकवाक्यानामप्येकदा श्रवणेऽनेकपदसमूहेषु तेष्विदमेकं वाक्यमिति प्रतीतिः स्यादित्यत आह- **जिज्ञासाद्यनुसारेणेति**[1] ॥

तथा च यत्र यत्पदोत्थापिताकाङ्क्षापूर्तिः तेष्वेव पदेष्विदमेकं वाक्यमिति प्रतीतिं जनयतीति भावः । वर्णेषु सुप्तिङन्तत्वेनैवातिप्रसङ्गपरिहार इति ज्ञेयम् ।

**सहानवस्थिततया प्रतीतानामपीति** ॥ क्रमिकोच्चारणव्यङ्ग्यतया भिन्नकालत्वेन प्रतीतानामपीत्यर्थः ॥ **समुदाय इति** ॥ एकबुद्ध्युपारूढत्वलक्षणसमुदायो युज्यत इत्यर्थः । तथा च समुदायासम्भवमादाय पदवाक्यस्वरूपयोरसम्भवो न शङ्कनीय[2] इति भावः ।

*(पदशक्तिनिरूपणम्)*

**(प्र.प.) आगमोऽपि सम्यक् श्रुतः समयस्मरणानुगृहीतः शाब्दन्यायानुसन्धानसहित एव स्वार्थस्य बोधको न तु सत्तामात्रेण ।**

**[3]जातिरेव वाच्या, पदानां व्यक्तयस्तु लक्ष्या इति भाट्टाः ।**

---

१. *आकाङ्क्षाद्यनुसारेणेति मूलपाठः ।*

२. **'आशङ्कनीयः'** - क. ।

३. 'जातेरेकत्वादुपदेशादिना तत्र शक्तिग्रह उपपद्यते । व्यक्तीनामनन्तत्वेन प्रतिव्यक्तिशक्तिग्रहासम्भवादपूर्वव्यक्तिव्यवहाराद्यनुपपत्तेः । कतिपयव्यक्तिष्वेव च शक्तिग्रहेऽपूर्वव्यक्तिव्यवहारादेर्नियामकाभावेन व्यभिचारित्वात् । तस्माद् जातिरेव वाच्या । तस्याश्चानयनाद्यनुपपत्त्या तदाश्रयीभूता व्यक्तिर्लक्ष्यत एवेति भावः । अत्र शक्तिग्राहकवृद्धव्यवहारादेर्व्यक्तावेवोपलम्भेन तत्रैव शक्तिग्रहकल्पना युक्ता । न जातौ ।' **(वेदेशीयटिप्पणी – पृ.४९१)**

जातिविशिष्टा व्यक्तयो वाच्या इति वैशेषिकाः । क्वचिज्जातिः क्वचिद् व्यक्तिरिति वैयाकरणाः[१] ।

क्वचिज्जातिः क्वचिद् व्यक्तिः क्वचिदाकृतिरिति नैयायिकाः[२] ।

अन्यापोह इति बौद्धाः[३] ।

[४]व्यक्तय एव वाच्याः,

---

१.इदमपि द्वैविध्यकल्पने कल्पनागौरवप्रसङ्गेनायुक्तमिति स्फुटमेव ।(वे.टि.प.४९१)

२. अत्राप्यनेककल्पनया कल्पनागौरवम् । गवादिपदानां त्वाकृतिविशिष्टव्यक्तौ शक्त्यङ्गीकारे, आकृतेरपि गवादिपदवाच्यत्वे 'सास्नादिमान् गौः' इत्यत्र सास्नादिमत्पदं पुनरुक्तं स्यादित्याद्यरुचिर्ध्येया – (वे.टि.-४९१)

३. अत्राप्यतद्व्यावृत्तेः (अन्यापोहस्य) अनुगतत्वे किं सामान्येन गौरित्यादिविधि -मुखप्रत्ययवेद्येन व्यावृत्तिप्रयोजकतयाऽऽवश्यकेनापराद्धम् । अननुगतत्वेन त्वानन्त्यव्यभिचारापरिहार उभयत्र गौरवं च । (वे.टि.-पृ.४९१)

४. **वेदे.–** व्यक्तय एवेति । द्रव्यगुणक्रियाजात्यादिकं तु विशेषणभूतं प्रवृत्तिनिमित्तमिति शेषः । अत्रावधारणेन विशेष्यभूतानां व्यक्तीनामेव शक्यत्वात् पर्यायवाच्यत्वम् । प्रवृत्तिनिमित्तानां तु शक्तिं प्रति विषयतया भासमानत्वेऽपि न शक्यत्वमिति सूचयति । उक्तं च सुधायाम् । 'ते ते व्यावृत्ताकारा एव तैस्तैर्व्यावृत्तैर्द्रव्यगुणकर्मसामान्यैर्निमित्तैस्त-त्तच्छब्दवाच्या इति । न च विशेष्यवद्विशेषणानामपि शक्तिं प्रति विषयतया भासमानत्वे शक्यत्वमस्त्विति वाच्यम् । शक्तिं प्रति विषयतया भासमानं यद्विशेष्यं तस्यैव शक्यशब्दार्थत्वात् । अन्यथा विशेषणानामपि शक्यत्वेन तेषु शक्यवृत्तित्वासम्भवेन शक्यतावच्छेदकत्वरूप-प्रवृत्तिनिमित्ततायोगात् । विशेष्यमात्रस्य शक्यत्वे तु विशेषणानां तदनतिरिक्तवृत्तित्वेन शक्यता-वच्छेदकत्वोपपत्तेः । न चैवं शब्दाद्विशेषणानां प्रतीतिर्न स्यादिति वाच्यम् । शक्यत्ववत्तदवच्छेदकत्वस्यापि शाब्दधीविषयत्वे तन्त्रत्वात् । कथमन्यथा परमते आकाशादिपदाशक्यस्य शब्दाश्रयत्वस्य धीः । पृ.सं- ४९२.

[1]**समयप्रतिपत्तौ तु सादृश्यमुपधानमित्याचार्याः ॥**

**(भा.च.)** ननूक्तलक्षणस्याप्यागमस्याश्रवणदशायां वाक्यार्थ-ज्ञानानुदयाद् अबोधकत्वादिदोषरहितागमत्वं यथार्थज्ञानसाधनत्व-लक्षणमनुप्रमाणत्वं वा कथमित्यत आह– **आगमोऽपीति** ॥ लिङ्ग-वदागमोऽपीत्यर्थः ।

अनुमाने व्याप्त्याद्यनुसन्धानं सहकारि । अत्र त्वन्यदिति भावेन वाक्यश्रवणमात्रेणापि वाक्यार्थप्रतीतिः कस्मान्न जायत इति शङ्का-वारणायाऽऽह- **समयेति** ॥ वाक्यप्रविष्टपदानां स्वस्वार्थेषु गृहीतशक्तेः स्मरणं च सहकारीति भावः ।

कर्णापाटवाद्[2] वर्णानामस्पष्टतया वैपरीत्येन चाश्रवणे वाक्यार्था-प्रतीतेः सम्यगित्युक्तम् । उपक्रमादिन्यायानुसन्धानाभावे तस्य वाक्य-स्यायमर्थ इत्यप्रतीतेः[3] न्यायानुसन्धानसहित इत्युक्तम् ।

उक्तलक्षणेनाप्यागमेन बोधोऽर्थः[4] क इति जिज्ञासायां स्वाभिप्रेत-मर्थं वक्तुं परोक्तदूषणाय पदार्थभेदाद् वाक्यार्थोऽपि भिद्यत इति भावेन परैरुक्तं पदार्थभेदमनुवदति- **जातिरेवेत्यादिना** ॥

---

१. **राघ.**–समयप्रतिपत्ताविति । सादृश्यमुपधानमुपाधिः । निमित्तमिति यावत् । चक्षुस्सन्निकृष्टे पुरोवृत्तिगोपिण्डादौ विद्यमानेनातीतानागतसर्वगोप्रतियोगिकेन सादृश्येन स्वप्रतियोगिष्वनन्तगवादिषु प्रतियोगितासम्बन्धेनोपस्थापितेषु गोपदशक्तिग्रहसम्भवादिति । यथा परमते पुरोवृत्तिनिष्ठगोत्वजात्या स्व-विशेषणतासम्बन्धेन सर्वगोपिण्डेषूपस्थापितेषु गोपदशक्तिग्रहस्तद्वदिति भावः । विस्तरस्तु तर्कताण्डवे ॥ **पृ.सं- ४९०.**

२.'**कर्णपाटवात्**' - क. ३.'**इति प्रतीतेः**' - क.

४.'**बाधोऽर्थः**'-घ.,'**बोधार्थः**'-क.,'**बोध्योऽर्थः**' *इति समीचीनःपाठ ऊह्यते ।*

तर्हि गोपदाद् गोव्यक्तेः कथमुपस्थितिरित्यत आह- **व्यक्त-यस्त्विति** ॥ [1]**क्वचिदिति** ॥ असाङ्केतिकशब्दानां[2] जातिरित्यर्थः । [3]साङ्केतिकपदानां तु व्यक्तिरिति भावः ।

**क्वचिदिति** ॥ [4]रूढानां जातिरर्थः । यौगिकानामाकृतिः । साङ्केतिकानां तु व्यक्तिरिति भेदः ।

**व्यक्तय एवेति** ॥ न च व्यक्तीनामेव वाच्यत्वे कथं घटादिपदाद् घटत्वादिविशिष्टोपस्थितिरिति वाच्यम् । पदजन्यप्रतीतिविषयत्वे [5]शक्यत्ववत् शक्यतावच्छेदकत्वस्यापि तन्त्रत्वादिति[6] ।

नन्वेकस्य घटपदस्य पुरोवर्तिघटे[7] शक्तिग्रहणकालेऽतीतानागत-व्यवहितेषु घटेषु शक्तिर्गृह्यत इत्यविवादम् । अतीतादि[8]व्यक्तिभानं विना तत्र सङ्केतो दुर्ग्रहः । न ह्यतीतादिभानसामग्रीसामान्यलक्षण-प्रत्यासत्तिरस्ति । अनुगतधर्मानङ्गीकारात् । अतः सङ्केतस्यैव दुर्ग्रह-त्वात्, शब्दप्रामाण्यं दूरत एवेत्यत आह- **समयप्रतिपत्ताविति** ॥

---

१.'**कदाचिदिति**' घ.

२.'**असाङ्केति-**'ख.घ,'**असाङ्केतक-**'क. । गवादिपदानमिति यावत् ।

३.'**साङ्केतिपदानां**' घ. देवदत्तादिसञ्ज्ञापदानामिति यावत् ।

४.'**गौर्नित्या**' इत्यादौ जातिरर्थः । क्वचिद् '**घटोऽनित्यः**' इत्यादौ व्यक्तिः । '**पिष्टमयी गौः.**'इत्यादावाकृतिरित्यर्थः । (रा.टि.– पृ. ४९०)

५.'**शक्यत्वात्**' '**शक्यवत्**' *इति सर्वमातृकापाठः ।*

६. द्रव्यगुणक्रियाजात्यादिकं तु विशेषणभूतं प्रवृत्तिनिमित्तमिति शेषः । प्रवृत्तिनिमित्तानां तु शक्तिं प्रति विषयतया भासमानत्वेऽपि न शक्यत्वमिति सूचयति । शक्यत्ववत् तदवच्छेदकत्वस्यापि शाब्दधीविषयत्वे तन्त्रत्वात् । **(वे. टि. – पृ.४९२)**

७.'**पुरोवर्तिनि घटे**'- क. ।

८.'**अनादि**'- क.

तथा च पुरोवर्तिनि घटे घटपदसङ्केते गृहीते सति यद्यन्योऽप्येतद्धट-सदृशः स्यात् सोऽपीत्थमेवेति सादृश्यं निमित्तीकृत्य सर्वत्रापि शक्ति-ग्रहसम्भवात्[1] नोक्तावकाश इति भावः ।

*(वाक्येऽन्वयबोधोपायनिरूपणम्)*

**(प्र.प.) ननु समयो नाम पदानां पदार्थानां च वाच्यवाचक-भावसम्बन्धः । स च सम्बन्धिष्वज्ञातेषु ज्ञातुमशक्य इति पदार्थज्ञानस्य प्रागेव सिद्धत्वात् किमागमस्य प्रयोजनम् । उच्यते ।**

**यथा ज्ञातयोरपि धर्मधर्मिणोः संसर्गोऽनुमानेन बोध्यते । तथा ज्ञातानामेव पदार्थानामन्वयविशेषस्याऽगमो बोधकः ।**

**पदानां पदार्थमात्रविषयत्वेनान्वयबोधकं न किञ्चिदस्तीति चेत् । [अ]अत्र वर्णपदाभिव्यक्तोऽखण्डः स्फोटाख्यः [2]शब्दो-ऽन्वयबोधक[3] इति वैयाकरणा ब्रुवते । वर्णमालेत्यपरे ।**

---

१.'शक्तिसम्भवात्' - क.

२.'शाब्दः'- च.

३.'शब्दान्वयस्य बोधकः'- च.

अ. वेदे.– वर्णपदाभिव्यक्त इति । अनेन पदवाक्यस्फोटसद्भावे प्रमाणं सूचितम्। तथा हि । वर्णाः पदानि च न प्रत्येकमर्थमुपस्थापयन्ति । समुदायोऽपि नाऽशुतरविनाशिनां सम्भवति । नित्यत्वेऽपि प्रतीयमानानामबोधकत्वे-नाऽशुतरविनाशप्रतीतिसमुदायस्याप्यसम्भवेन तावद्वर्णपदविषयकैकसमूहा-लम्बनाङ्गीकारे चावश्यकक्रमानुपपत्त्याऽर्थप्रतीत्यनुपपत्तेः । अत एता-वत्पदाभिव्यक्तमेकं स्फोटाख्यं वाक्यं चाङ्गीकर्तव्यमित्यर्थप्रत्यायकत्वा-

**वाक्यान्त्यो वर्ण इत्यन्ये । पदानां सान्निध्यमिति केचित् । पदैरभिहिताः पदार्था एवाऽकाङ्क्षादिशालिन इति भाट्टाः ।**

---

न्यथाऽनुपपत्तिरेव तत्र च मानम् । तस्य चाखण्डत्वेन तत्रापि प्रत्येक-समुदायपक्षोक्तदूषणानवकाश इत्याह ॥ अखण्ड इति । एकवचनेन चानेकेष्वपि वर्णेषु चैकं पदमेकं वाक्यमित्येकत्वोल्लेखिप्रत्यक्षप्रतीतिरपि तत्र मानमिति सूचयति- सान्निध्यमिति । आकाङ्क्षादिमत्पदसमभिव्याहारविशेष इत्यर्थः ।

सर्वेषामिति । तथा हि । यत्तावदाद्यपक्षे स्फोटेऽर्थापत्तिरूपप्रमाणमुपन्यस्तम्। तदनुपपन्नम् । अप्रतीतस्यार्थप्रत्यायकत्वेऽतिप्रसङ्गेन प्रमाणान्तरस्य च तत्प्रापकस्याभावेन तयैवार्थापत्त्या तत्प्रतीताावितरेतराश्रयत्वप्रसङ्गात् । प्रतीते हि स्फोटेऽर्थप्रतीतिस्तस्यां च सत्यां तदन्यथाऽनुपपत्त्या स्फोटप्रतीतिरिति । न चैकं पदमेकं वाक्यमित्येकार्थावलम्बिनी प्रत्यक्षप्रतीतिस्तत्र प्रमाणान्तर-मस्तीत्युक्तमिति वाच्यम् । अनेकेषु वृक्षेष्वेकं वनमिति प्रतीतिवदुपपत्तेः । अन्यथा तत्राप्यनेकवृक्षातिरिक्तैकवनस्वीकारापत्तिः । न च तत्रानेकेषामेकस्थानस्थितत्वोपाधिनैक्यप्रतीतिः । अत्राप्येकार्थप्रत्यायक-त्वोपाधिनैक्यप्रतीतिसम्भवात् । एकार्थप्रत्यायनं च नानुपपन्नम् । एकस्मृतिसमारूढानां तदुपपत्तेः । अनुभवक्रमोपहितानामेव तेषां स्मृत्याऽवगाहनान्न क्रमानुपपत्तिरिति हि व्यवस्थापितमधस्तात् । अन्वय-प्रतीतेश्चान्यथोपपादयिष्यमाणत्वात् । एवमप्रामाणिके स्फोटेऽर्थप्रत्यायन-शक्त्यङ्गीकारे च कल्पनागौरवपराहतेश्च । नापि द्वितीयः पक्ष उपपद्यते । प्रमाणाभावात् । अन्वयप्रत्ययस्य च वक्ष्यमाणरीत्याऽन्यथोपपन्नस्य त्वत्पक्षानपेक्षत्वात् । प्रमाणान्तरस्य चादर्शनात् । क्रमोपेतानां द्वित्राणां पञ्चषाणां वर्णानां स्मरणसम्भवेऽपि महावाक्यस्थानां शतसहस्रसङ्ख्याकानां स्मरणं दुःशकमेवेत्यनुभवविरोधाच्च । वक्ष्यमाणरीत्या लघूपाये सम्भवति प्रयासगौरवकल्पनापराहतेश्चेति । तृतीयेऽप्युक्तरीत्या प्रमाणाभावः स्पष्ट एव । युक्तिविरोधश्च । केवलस्यान्त्यवर्णस्यान्वयप्रत्यायकत्वे पूर्ववर्णोच्चारण-

**सर्वेषां पक्षाणामप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्च पदान्येवान्वितस्वार्थाभिधायीनीति प्रेक्षावन्तः । [1]तत्र [2]प्रत्येकमपि पदानि अन्वयविशेषाभिधानसमर्थानीति प्राभाकराः ।**

---

वैय्यर्थ्यप्रसङ्गेन पूर्ववर्णक्रमविस्मृतावन्वयाप्रत्यायकत्वेन च पूर्ववर्णैः सहैकस्मृत्युपारूढस्य तस्य वाक्यार्थप्रत्यायकत्वे वाच्ये स्मृतिस्था वर्णाः पदत्वेनानुसङ्गृहीता वाक्यार्थमवगमयन्तीत्यस्मदभिमतस्यैव प्राप्तत्वेन बकबन्धरीतिप्रसङ्गादिति । चतुर्थपञ्चमपक्षयोरप्यन्वयबोधे उपायान्तरस्य वक्ष्यमाणत्वेन प्रमाणान्तरस्यानिरूपणेन प्रमाणाभावो व्यक्त एव । समभिव्याहारस्य पदार्थानां वा प्रमाणान्तरतापत्तिरुभयत्रान्वयस्याशाब्दत्वापत्तेश्चेति । **पृ.सं-५०१,५०२.**

१. **राघ.–** तत्रेति । पदान्येवान्वितस्वार्थाभिधायिनीत्युक्तार्थविषये प्राभाकरा इत्याहुरित्यर्थः । पदान्तरसन्निधानाहितशक्त्यन्तराणीति बहुव्रीहिः । व्याख्यातमेतद्वाक्यं तर्कताण्डवे । पदान्तरसन्निधानमेवाऽहितशक्त्यन्तरं लब्धसहकार्यन्तरमेषामित्यर्थः । न तु पदान्तरसन्निधानेनाऽहितं शक्त्यन्तरमाधेयशक्तिर्येषामित्यर्थः । शक्तिद्वयाङ्गीकारे गौरवात् । पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसानहेतुः । न पुनरविद्यमान-शक्त्याधाने हेतुरिति सुधाविरोधश्चेति ।। इत्याचार्या इति । **'अतः सामान्यतो ज्ञातः पदान्तरबलात् पुनः । भवेद्विशेषतो ज्ञातस्तेन स्यादन्वितोक्तिता ।।'** इत्यादिभक्तिपादीयानुव्याख्यानोक्तेर्युक्तिरपि तत्रैव ज्ञेयेति भावः । **पृ.सं- ४९९.**

२. **वेदे.–** इदानीमेतद्दोषद्वयसमाधानाय श्रीमदाचार्यसूर्यभिमतान्विताभिधानमाह । प्रत्येकमिति । **'अतः सामान्यतो ज्ञातः पदान्तरबलात्पुनः । भवेद्विशेषतो ज्ञातस्तेन स्यादन्वितोक्तिता ।।'** इति तदुक्तेरिति भावः । प्रत्येकं हि पदानि सामान्यत आकाङ्क्षितसन्निहितयोग्येतरान्वितस्वार्थाभिधानसामर्थ्यानि न पदान्तरमपेक्षन्त इति नान्योन्याश्रयत्वम् । पदानां सामान्यतो योग्येतरान्वितस्वार्थाभिधायकत्वेऽन्वयविशेषजिज्ञासा न स्यात् । सामान्यतो ज्ञाते हि विशेष जिज्ञासा दृष्टा । न च पदं विनाऽन्यत् सामान्यतोऽन्वयज्ञानजनकं क्लृप्तम् । अनुमानेन कल्पनस्य चानानुभाविकत्वादिति भावः ।

**प्रत्येकं सामान्यतो योग्येतरान्वितस्वार्थाभिधानशक्तीनि पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽप्यन्वितान् स्वार्थानभिदधति[1] । तथाऽनुभवादित्याचार्याः ॥**

नन्वथाप्यत्र विशेषान्वयप्रतिपत्तिर्निर्निबन्धना पदान्तरं च न प्रयोजनवदित्यत उक्तं पदान्तरेति । अयं भावः । पदान्तरस्य विशेषान्वयप्रतीतार्थत्वेनैव सार्थक्यम् ।

न चैवं पदानां प्रत्येकं सामान्यतो योग्येतरान्वये शक्तिः । पदान्तरसमभिव्याहारेण विशेषान्वये च शक्तिरिति कल्पनागौरवमिति वाच्यम् । या शक्तिः पदान्तरसमभिव्याहारनिरपेक्षा सामान्यान्वयबोधिका तस्या एव पदान्तरसमभिव्याहारसापेक्षाया विशेषान्वयबोधे पर्यवसानाङ्गीकारात् । न चैवं पदान्तरसन्निधानाहितशक्त्यन्तराणीत्यनुपपन्नमिति वाच्यम् । पदान्तरसन्निहितमेवाऽहितशक्त्यन्तरं लब्धं सहकार्यन्तरं येषामित्यर्थत्वात् । न तु पदार्थसन्निधानेनाऽहितं शक्त्यन्तरमाधेया शक्तिर्येषामिति, शक्तिद्वयाङ्गीकारगौरवात् । 'पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसान एव हेतुर्न पुनरविद्यमानशक्त्याधाने' इति सुधाविरोधाच्चेति ।

यद्वा, प्रत्येकं पदानि सामान्यतो योग्यतरान्वितस्वार्थेषु शक्तानि । तेषु पदान्तरसमभिव्याहाररूपसहकारिसामर्थ्येन विशेषतोऽप्यन्वितस्वार्थबोधानुकूलशक्त्यन्तराधानमिति यथान्यासमेव साधु । गौरवस्य प्रामाणिकत्वेन ग्राह्यत्वात् । अत एवाऽह- तथाऽनुभवादिति ॥

**अभि.–** समयेति । सङ्केतग्रहे सादृश्यं कारणमित्याचार्या वदन्तीत्यर्थः । यद्यपि सादृश्यं नानुगतम् । तथाऽपि सर्वव्यक्तिगतसादृश्येषु परचित्तगोव्यक्तिः प्रतियोगिनीति प्रतियोग्यैक्यादनुगमः । तथा परमते दण्डानामननुगमेऽपि दण्डत्वस्यैक्यादनुगतव्यवहारहेतुत्वमिति भावः । **पृ.सं- ५०३+५०४.**

१. तदुक्तं श्रीमदानन्दतीर्थभगवत्पादैरनुव्याख्याने – **'शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते । अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथा ॥'**इति । (अनुव्या - १-१-१)

**(भा.च.) प्रागेवेति** ॥ शक्तिग्रहादिति शेषः । **किमागमस्येति** ॥ वाक्यप्रविष्टपदार्थानां वाक्यप्रयोगात् प्रागेव सिद्धत्वे किमागमेनेति शङ्काभिप्रायः । **अत्र** चोद्य इत्यर्थः । **वर्णपदातिरिक्त इति** ॥ वर्णाख्य-पदातिरिक्त इत्यर्थः । तथा च वर्णातिरिक्तो वर्णाभिव्यङ्ग्यो नित्यः शब्दः पदस्फोटः, पदातिरिक्तः पदाभिव्यङ्ग्यो नित्यो शब्दो वाक्यस्फोटः । अयं तु वाक्यार्थप्रत्यायक इति भावः ।

**वर्णमालेति** ॥ वाक्यगतवर्णमालैवान्वयस्य बोधकेत्यपरे ब्रुवत इत्यर्थः । **अन्वितेति** ॥ इतरान्वितस्वार्थाभिधायिनीत्यर्थः । तथा चास्मिन् पक्षे समभिव्याहृतपदानामप्यन्वयसामान्यबोधजनन एव सामर्थ्यम्, न तु पदान्तरसमभिव्याहाराद् विशेषबोध इति ज्ञेयम् ।

**प्रत्येकमपीति** ॥ तथा चान्वयविशेषाभिधायकत्वं न पदसमुदायस्येति भावः । प्रत्येकपदानीत्यर्थः[१] । अत्र तत्तन्मतानुवादेनैव दोषाणां स्फुटप्रतिभासाद्[२] दूषणं नोक्तमिति ध्येयम्[३] ।

*(आगमविभागकथनम्)*

**(प्र.प.) आगमो द्विविधः । अपौरुषेयः पौरुषेयश्चेति । तत्रापौरुषेयो वेदः पौरुषेयोऽन्यः । वर्णाः सर्वत्र कूटस्थनित्याः । सर्वगताश्च ।**

---

१.'**प्रत्येकं पदानीत्यर्थः**'- क. घ.

२.'**स्फुटं प्रतिभासात्**'- क.

३.'**दूषणो नोक्तमिति ध्येयम्**'- ख. घ.

पदान्यपि [1]नियतान्येव । तेषां पदार्थसम्बन्धोऽपि स्वाभाविक एव । तथाऽपि वाक्ये पदानामानुपूर्वीविशेषस्य स्वतन्त्रपुरुष-पूर्वकत्वभावाभावाभ्यामयं भेदः ॥

*(आगमस्यानुमानेऽन्तर्भावनिरासः)*

[2]आगमोऽनुमान एवान्तर्भवतीति वैशेषिकादयः ।

१. **वेदे.–** नियतान्येकप्रकाराणि ॥ स्वाभाविक एवेति । न तु सङ्केतापर-पर्यायेश्वरेच्छारूप इत्यर्थः । तथात्वे गङ्गाशब्दात्तीरं प्रत्येत्वितीश्वरेच्छायाः सन्मात्रविषयायाः कार्यैकोन्नेयायाः सत्त्वेन गङ्गाशब्दस्य तीरेऽपि शक्तिप्रसङ्गात् । अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाया एव शक्तिरूपत्वेनाङ्गीकारात् । चक्षुषा घटं प्रत्येतु धूमेन वह्निं प्रत्येत्वितीश्वरेच्छयैव चक्षुर्धूमयोर्घटवह्निभ्यां सम्बन्धो न तु संयोगव्याप्ती इत्यपि स्यादिति भावः । तथा च पौरुषेयापौरुषेयागमयोर्वर्णपदपदार्थसम्बन्धानामेकरूपेण वाक्यभेदस्य चातिप्रसञ्जकत्वेनाविभाजकतयोक्तविभागो निर्निबन्धन एवेति भावः ॥

**पृ.सं-५२३.**

२. **वेदे.–**नन्वागमस्य न पृथग्लक्षणाद्युक्तिर्युक्ता । तस्यानुमान एवान्तर्भावात् । तथाहि । यो यानि पदानि प्रयुङ्क्ते स तत्पदार्थसंसर्गज्ञानवानिति सामान्येन स्वात्मनि नियमेन प्रतीतेः पश्चात्पदसमूहज्ञाने तेन वक्तुस्तत्पदार्थ-संसर्गज्ञानानुमाने तदवच्छेदकतया वाक्यार्थसिद्धिसम्भवादिति मन्यमानानां मतमुपन्यस्य दूषयति ॥ आगम इति ॥ व्याप्त्यादीति । अयमाशयः । पदसमुदायमात्रस्य व्यभिचारितयाऽलिङ्गत्वेनाऽऽकाङ्क्षादिमत्पदकदम्बकस्यैव लिङ्गत्वे वाच्ये तादृशपदकदम्बकज्ञानमात्रेणैव व्युत्पन्नस्य वाक्यार्थावगतौ वक्तृज्ञानाविनाभावप्रतीत्यादिकल्पने गौरवम् । तदननुसन्धानेऽपि वाक्यार्थ-प्रतीतेरनुभवसिद्धत्वादिति ॥ पृथगिति । वक्तुरभावेन तज्ज्ञानावच्छेदकतया संसर्गसिद्ध्यसम्भवादिति भावः । अनुमानमिति । उक्तरीत्या वक्तृज्ञानाव-च्छेदकतया संसर्गानुमानसम्भवादिति भावः ॥ पृ.सं- ५२७.

**तदसत् । [1]व्याप्त्याद्यननुसन्धान एव वाक्यार्थप्रतीतेरनुभवात् । अपौरुषेयः पृथक् प्रमाणम् । पौरुषेयस्त्वनुमानमिति प्राभाकराः । तदप्यसत् । उभयत्र सामग्रीसाम्येऽपि विशेष-कल्पकाभावात् । तदेतानि त्रीण्येव प्रमाणानि ॥**

**(भा.च.)** सर्वोऽप्यागमः पौरुषेय इति तद् दूषयितुमाह- **आगमो द्विविध इति** ॥ अन्यः पुराणादिः ।

ननु वेदपुराणादीनां पौरुषेयत्वापौरुषेयत्वाभ्याम् उक्तविभागो किं वेदगतवर्णानां नित्यत्वाद् अन्यगतवर्णानाम् अनित्यत्वान्नित्य-वर्णात्मको वेदो नित्यः, अन्यस्त्वनित्य इति विवक्षितः ? उत, वर्णानामुभयत्र नित्यत्वेऽपि वेदगतपदानां नियतानुपूर्वीविशिष्ट-वर्णात्मकत्वात् तादृशपदसन्दर्भात्मको वेदो नित्यः । पुराणादिगत-पदानां नियतानुपूर्वीविशिष्टवर्णात्मकत्वाभावात् तादृशपदसन्दर्भा-त्मकः पुराणादिरनित्य इति वा विवक्षितः ।

१. **वि.–** व्याप्त्यादीति । व्याप्तिसमुचितदेशवृत्तित्वपक्षज्ञानाभावदशायामेव वाक्यार्थस्यासंसर्गे विशेषस्यानुभवात् प्रतीतेरित्यर्थः । व्याप्तिज्ञानं समुचित-देशवृत्तित्वज्ञानं पक्षज्ञानं चानुमितिसामग्री, तदभावेऽपि वाक्याज्ज्ञाय-मानवाक्यप्रतीतिः । अतस्तत्करणं वाक्यं नानुमानान्तर्भूतमिति भावः । पौरुषेयागमस्यानुमानान्तर्भूतत्वादागमद्वैविध्यमयुक्तमिति शङ्कावारणाया-नुमानान्तर्भावं वदतो मतं दूषयितुमनुवदति– अपौरुषेय इति । अपौरुषेयागमः पृथक् प्रमाणमनुमानातिरिक्तं प्रमाणमित्यर्थः । प्राभाकरा आहुरिति शेषः ॥ उभयत्रेति । पौरुषेयवाक्यापौरुषेयवाक्यद्वयप्रतीत्योः सामग्र्योः कारणचक्रस्य साम्ये एकविधत्वमेवेति । विषयस्य वाक्यफलत्वानुमानफलत्वरूपवैरूप्यस्य कल्पकाभावादित्यर्थः । **पृ.सं- ५२८.**

उत वेदगतपदानां स्वस्वार्थसम्बन्धस्य नित्यत्वान्नित्यसम्बन्धसम्बद्धपदसन्दर्भात्मको वेदो नित्यतयाऽपौरुषेयः । तद्विलक्षणपदसन्दर्भात्मकः पुराणादिः पौरुषेयसम्बन्धघटितपदसन्दर्भात्मकत्वात् पौरुषेय इति विवक्षित इति विकल्पं मनसि निधायोक्तविधवैलक्षण्यस्य वेदपुराणयोरभावात् पौरुषेयत्वापौरुषेयत्वाभ्यां विभागो न युक्त इति भावेन शङ्कते- **वर्णा इति** ॥

**सर्वत्रेति** ॥ पौरुषेयापौरुषेयागमेषु सर्वेष्वित्यर्थः । **कूटस्थनित्या इति** ॥ कूटवत् तिष्ठतीति कूटस्थः । अव्याकृताकाशवन्निर्विकारितया आद्यन्तशून्या इत्यर्थः ।

**सर्वगताश्चेति** ॥ तथा च देशविशेषविशिष्टवेषेणाप्युत्पत्त्यादि[1] वक्तुं न शक्यत इति भावः । **नियतान्येवेति** ॥ नियतानुपूर्वीविशिष्टवर्णात्मकान्येवेत्यर्थः । तेषामिति वेदपुराणादिगतपदानामित्यर्थः । **वाक्य इति** ॥ वेदपुराणादिगतवाक्य इत्यर्थः ।

**स्वतन्त्रपुरुषपूर्वकत्वभावाभावाभ्याम् इति** ॥ तथा च **'जन्माद्यस्य'** (ब्र.सू.१.१.२) इत्यादौ पदानां प्रतीयमानानुपूर्वीविशेषः पौर्वापर्यक्रमः स्वतन्त्रपुरुषपूर्वकः[2] । वेदगतपदानामानुपूर्वीविशेषस्तु न तादृश इति वैलक्षण्यादेव पौरुषेयत्वादिविभागः । न तु वर्णादीनां नित्यत्वानित्यत्वादिविशेषविवक्षयेति भावः ।

यद्यपि पुराणादौ पदानामानुपूर्वीविशेष इव पदगतवर्णानामप्यानुपूर्वीविशेषोऽपि स्वतन्त्रपुरुषपूर्वक एव । तथाऽपि पुराणादिगतपदानां प्रतिकल्पमानुपूर्वीविशेषव्यत्यासवत् पदगतवर्णानामानुपूर्वीविशेषस्य व्यत्यासाभावादित्थमुक्तमिति ज्ञेयम् ।

१.**'उपपत्त्यादि'**- क. २.**'स्वतन्त्रपुरुषवेदगत-'** *इत्यादिसर्वमातृकापाठः ।*

अनुप्रमाणत्रैविध्यदृढीकरणायाऽगमस्यानुमानान्तर्भावमतं दूषयितु-मनुवदति- **आगम इति** ॥ अत्राऽदिपदेन सौगता उच्यन्ते । यत्र घटत्वादिप्रवृत्तिनिमित्तं तत्र तत्तच्छब्दवाच्यत्वमित्यनुसन्धानपूर्वकत्वा-दागमजन्यज्ञानस्य, आगमोऽप्यनुमान एवान्तर्भवतीति भावः ।

नन्वेवमपि पौरुषेयत्वापौरुषेत्वाभ्यामागमविभागो न युक्तः । पौरुषेयागमस्यानुमानान्तर्भूतत्वादिति मतं दूषयितुमनुवदति- **अपौरुषेय इति** ॥ **सामग्रीसाम्य इति** ॥ पदशक्तिग्रहतत्स्मरणादिसामग्र्याः उभयत्र पौरुषेयापौरुषेयागमजन्यपदार्थसंसर्गज्ञानोत्पत्तौ समत्वेऽप्यपौरुषेयागमे पदार्थसंसर्गज्ञानमागमजन्यम्, अन्यत्र त्वनुमानजन्यमिति विशेषकल्पका-भावादित्यर्थः । उक्तमुपसंहरति- **तदेतानीति** ॥

*(अर्थापत्त्यादीनामन्तर्भावकथनम्)*

**(प्र.प.) एतेष्वेवार्थापत्त्यादीनामन्तर्भावः । तथाहि । [1]अनुपपद्यमानार्थदर्शनात् तदुपपादके बुद्धिरर्थापत्तिः[2] । यथा जीवन् चैत्रो गृहे नास्तीति ज्ञाने सति बहिर्भावज्ञानम् ।**

**अत्र यद्यप्येकैकस्य बहिर्भावलिङ्गत्वं नोपपद्यते । व्यभिचारात् । तथाऽपि, चैत्रो बहिरस्ति जीवनवत्त्वे सति गृहेऽसत्त्वात् । यो जीवन् यत्र नास्ति स ततोऽन्यत्रास्ति । यथाऽहमिति मिलितयोर्जीवनगृहाभावयोर्लिङ्गत्वमुपपद्यत एव ॥**

---

१. **राघ.–** अनुपपद्यमानेति । येन विना यन्नोपपद्यते तदुपपादकम् । अन्यदुपपाद्यम् । तत्रानुपपद्यमानार्थदर्शनं करणम् । उपपाद्यविषयबुद्धिः फलम् । फलप्राधान्यविवक्षया बुद्धिरर्थापत्तिरित्युक्तम् । **पृ.सं- ५२९.**

२. **'अर्थतः प्राप्तिरेवार्थापत्तिरित्यभिधीयते । अर्थापत्तिश्चोपमा च ह्यनुमाभेद एव तु ॥'** (विष्णुतत्वविनिर्णयः उदा.ब्रह्मतर्कस्मृतिः । परिच्छेदः–१.)

**विरुद्धयोर्विशेषणविशेष्यभावानुपपत्तिरिति चेन्न । [1]सामान्य-विशेषयोरविरोधस्य स्वस्मिन्नेव दृष्टत्वात् । आत्यन्तिकविरोधे त्वर्थापत्तिरपि न प्रवर्तते । किन्तु विप्रतिपत्त्या सन्देह एव भवतीति ॥**

**(भा.च.)** अर्थापत्त्यादीनां पृथक् प्रमाणत्वात् कथं त्रैविध्यमित्या-शङ्क्योक्तान्तर्भावमाह- **अर्थापत्त्यादीनामिति** ॥ अर्थापत्तिशब्दः फलकरणसाधारणः । अनुपपद्यमानार्थदर्शनमर्थापत्तिरित्यनेन करणम्[2] उच्यते । तदुपपादके बुद्धिरित्यनेन फलमुच्यते ।

फलस्यानुमितिरूपत्वे वा करणमनुमानमेवेति भावेनाऽऽह- **अनुपपद्यमानार्थदर्शनादिति** ॥

ननु गृहासत्त्वमात्रं न बहिर्भावकल्पकम् । मृतेऽप्युपपत्तेः । नापि जीवनमात्रं, गृहेऽप्युपपत्तेरित्यत आह- **यद्यपीति** ॥

---

१. **वेदे.**– सामान्येति । विरोधो हि तदा स्यात् । यदि जीवनग्राहकज्योतिःशास्त्रेण गृहेऽस्तित्वं, यदि वा गृहाभावग्राहकप्रत्यक्षेण जीवनाभावः प्रतीयेत । न चैवम् । ज्योतिःशास्त्रेण सामान्यतः क्वचिज्जीवनबोधनात् । प्रत्यक्षेण च गृहेऽसत्त्वबोधनात् । सामान्ये सत्त्वस्य विशेषेऽसत्त्वस्य च स्वस्मिन्नेव सहभावदर्शनेनान्योन्यमविरुद्धत्वादिति भावः । यो हि मातापितृभ्यां सुशिक्षितो न जातु गृहान्निर्गच्छति सोऽन्यानपि तथा मन्यमानो जीवनप्रमाणस्य गृहे सत्त्वमेवार्थं प्रतिपद्यते । गृहाभावप्रमाणेनान्यत्रसत्त्वप्रमितिकथनविरोध इति पूर्वपक्षिणा स्वाभिसन्धावुद्धाटिते सत्याह- आत्यन्तिक इति । अर्थापत्तेर्बहिःसत्त्वनिश्चयो विप्रतिपत्त्येति त्वदुक्तरीत्या प्रमाणद्वयविरोधेन बहिःसत्त्वसन्देह एव स्यान्न तु निश्चय इत्यर्थः । **पृ.सं- ५३१.**

२.**'कारणम्'** - घ.

ननु चैत्रो बहिरस्ति जीवित्वे सति गृहेऽसत्त्वादित्यनुमानं यदि विवक्षितं तर्हि जीवत्त्वं[१] विशेषणम्[२]। गृहेऽसत्त्वं तु विशेष्यमिति वाच्यम्। नहीदं युक्तम्। जीवतः[३] स्वस्यैव कदाचिद् गृहेऽपि सत्त्वानुभवेन जीवित्व-गृहासत्त्वयोर्विशेषणविशेष्यभावायोगात्। तथा हेतोरसिद्धिरिति भावेन शङ्कते– **विरुद्धयोरिति** ॥

**सामान्यविशेषयोरिति** ॥ तथा च जीवतः[४] कुत्रचिदवस्थानस्यैव नियततया बहिस्सत्त्वेनापि जीवित्वसामान्यस्य[५] स्वस्मिन्ननुभवेन जीवत्त्वसामान्यगृहासत्त्वरूपविशेषयोरविरोधस्य स्वस्मिन्नेव दृष्टत्वा-दित्यर्थः।

ननु स्वस्मिन्नस्त्वविरोधदर्शनं जीवित्वगृहासत्त्वयोः, तथाऽप्ययं देवदत्तः गृह एव शतवर्षजीवीति शास्त्रविशेषान्निर्णये[६] तत्र जीवनगृहा-सत्त्वयोरात्यन्तिकविरोधान्नोक्तरीत्या बहिःसत्त्वानुमानसम्भवः। तथा च तत्र बहिस्सत्त्वकल्पकार्थापत्तिः पृथक् प्रमाणतयाऽङ्गीकार्ये-त्याशङ्क्य परिहरति– **आत्यन्तिकविरोधे त्विति** ॥ जीवित्वगृहा-सत्त्वयोरिति शेषः।

**अर्थापत्तिरपीति** ॥ यस्मिन् विषये गृह एव शतवर्षजीवित्वनिश्चयः, तस्य गृहासत्त्वज्ञाने सत्यपि बहिस्सत्त्वकल्पकार्थापत्तिरपि न प्रवर्तत इत्यर्थः। बहिःसत्त्वं विनाऽनुपपद्यमानार्थदर्शनाभावादिति भावः।

---

१. '**जीवित्वं**' - क.

२. '**जीवत्वविशेषणम्**' - घ.

३. '**जीविनः**' - ख.घ.

४. '**जीविनः**' घ.

५. '**जीवत्त्वसामान्यस्य**' घ.

६. '**शास्त्रविशेषनिर्णये**' - घ.

तर्हि तादृशस्थले गृहासत्त्वज्ञानात् किं भवतीत्यत आह- **किन्तु विप्रतिपत्त्येति** ॥ शतवर्षजीवित्वेन निश्चितस्य गृहासत्त्वज्ञाने सति जीवने विप्रतिपत्त्या किमयं देवदत्तो बहिरस्त्युत मृत इति सन्देह एव भवतीत्यर्थः । केवलं शास्त्रप्रमाणैरेव जीवनव्यतिरेकनिश्चयो न भवति । बहिरपि नास्तीत्याप्तोपदेशादिनाऽन्यत्राप्यभावनिश्चय एवेति भावः ॥

*(उपमानस्योक्तप्रमाणान्तर्भावनिरूपणम्)*

**(प्र.प.) [१]सादृश्यज्ञानसाधनमुपमानम्[२]। तत्र तेनायं सदृशः सदृशाविमावित्यादि वा ज्ञानं प्रत्यक्षजम् । गोगवयौ सदृशाविति वाक्यजं त्वागम एव[३]। गृह्यमाणे स्मर्यमाणसादृश्यं दृष्ट्वा स्मर्यमाणे यद् गृह्यमाणसादृश्यं प्रत्येति तदनुमानमेव ।**

---

१. राघ.–मीमांसकाभिमतोपमानं लक्षणोक्तिपूर्वमन्तर्भावयति– सादृश्यज्ञानेति । तत्त्रिविधं भवति । तेनायं सदृश इति वा सदृशावेताविति वा चक्षुरुन्मीलनानन्तरं जायमानं ज्ञानम् । इमौ सदृशावित्युपदेशानन्तरं जायमानज्ञानसाधनं वा । स्मर्यमाणगतसादृश्यज्ञानसाधनभूतं गृह्यमाण-पिण्डगतसादृश्यज्ञानं वेति । तत्त्रयमपि क्रमादन्तर्भावयति- तत्रेति । सादृश्यज्ञानसाधनत्वेनाभिमतेषु मध्य इत्यर्थः । ज्ञानशब्दः प्रमापरः । आगम एवेति । अन्तर्भवतीति योज्यम् । गृह्यमाण इति । पत्तने गामनुभूय वनं गतस्य गवयदर्शने सति गृह्यमाणगवये स्मर्यमाणपत्तनस्थगोसादृश्यं दृष्ट्वा स्मर्यमाणगोपिण्डे यद्गृह्यमाणं गवयसादृश्यं प्रत्येति । गृहे स्थिता गौर्गृह्यमाणगवयसदृशी एतस्य तत्सदृशत्वादिति प्रत्येतीत्यर्थः । तत्र गवयनिष्ठसादृश्यज्ञानमुपमात्वेन परसम्मतमनुमानमेवेत्यर्थः । **पृ.सं-५३३.**

२.'**दृष्ट्वा सदृशमेवान्यं पूर्वदृष्टे तु वस्तुनि । एतत्सदृशताज्ञानमुपमानं प्रकीर्तितम् ॥**'(विष्णुतत्त्वविनिर्णय. उदा. ब्रह्मतर्कस्मृतिः । परिच्छेदः – १)

३.'**त्वागमजमेव**'- च.

**नन्वनुभूयमानगतत्वेन प्रतीयमानं सादृश्यं करणम् । स्मर्यमाणगतं प्रमेयम् । तत्कथमनयोर्व्यधिकरणयोर्लिङ्ग-लिङ्गिभाव इति चेन्न । स गौरेतद्गवयसदृशः, अस्य गवयस्य तद्गोसदृशत्वात् । यो यत्सदृशः स तत्सदृशः, यथा यमो यमान्तरेणेति व्याप्तिसम्भवेन [१]व्यधिकरणस्यादोषत्वात् । एतद्गवयगतसादृश्यप्रतियोगित्वस्य वा लिङ्गत्वेन सामानाधि-करण्याच्चेति ॥**

**(भा.च.)** उपमानस्य[२] पृथक्प्रमाणतां निराकर्तुं लक्षणमाह - **सादृश्यज्ञानसाधनमिति ॥**

यद्यपि सादृश्यविशिष्टपिण्डज्ञानमुपमानम् । **'अयं गवयशब्द-वाच्यः'** इति सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतीतिः फलमिति तार्किकानां[३] पन्थाः । तथाऽपि तत्र गोसादृश्यरूपगवयलक्षणज्ञानसाध्यायाः वाच्य-वाचकभावसम्बन्धप्रतीतेरनुमानफलत्वात् तत्कारणम्[४] अनुमानमेव । गवयज्ञानं तु धर्मिज्ञानतयाऽनुमानाङ्गम् ॥

अनुमानप्रकारस्तु- अयं गवयशब्दवाच्यः । अगोत्वे सति गोसदृशत्वात्[५] । व्यतिरेकेण घटवदिति । एवं तं पक्षं निराकृतप्रायं मत्वा वाद्यन्तरमतमत्रानूद्य दूष्यत इति ज्ञेयम् ॥

---

१.**'व्यधिकरणत्वस्य'**च.

२.**'उपमानस्यापि'** क.

३.**'तार्किनाम्'** घ.

४.**'कारणम्'** घ.

५.गोसदृशे गवान्तरे व्यभिचारवारणाय **'अगोत्वे'** इति विशेषणम् ।

गोसदृशोऽयं गवय इति सादृश्यज्ञानमुपमितिः । तत्साधनमुपमान-मित्यर्थः । **वाक्यजं त्विति** ॥ वाक्यजं त्वागमजन्यत्वात् तत्कारणमागम एवेत्यर्थः । गृह्यमाणे गवये स्मर्यमाणगोसादृश्यं तत्स्मर्यमाणगत-सादृश्यज्ञानमनुमानमुपमितिरेवेत्यर्थः[१] । हेतुसाध्ययो-र्वैय्यधिकरण्यात् कथं तदनुमितिरिति शङ्कते- **नन्विति** ॥

*(अभावप्रमाणादीनामन्तर्भावकथनम्)*

**(प्र.प.) अभावज्ञानकरणमभावप्रमाणम् । तत्रेदानीं कौरवाद्यभावो भारताद्यागमादवगम्यते । देवदत्तस्य चक्षुराद्यभावो रूपाद्यदर्शनलिङ्गगम्यः । सुखाद्यभावप्रमितिस्तु साक्षिप्रत्यक्षेणैव । पुरोवृत्तिघटाद्यभावप्रमितिस्तु झटिति जायमाना प्रत्यक्षफलमेव । न त्वनुपलब्धिमात्रजन्या । अपरोक्षज्ञानत्वात् ।**

**अनुपलब्धिस्त्ववर्जनीयसन्निधिरेव[२] । यत्र त्वन्धकारे हस्त-प्रसारणादिरूपपरामर्शेन घटाभावं प्रत्येति न तदाऽनुपलब्धिः करणम् । किन्तु लिङ्गत्वनैव । अत्र घटो नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वादिति । [३]एवं प्रातर्गजाद्यभाव-ज्ञान-**

---

१. **'तज्जन्यम् अनुमितिरेवेत्यर्थः'** इति समीचीनः पाठः स्यात् ।

२. **अनुपलब्धेरवर्जनीयसन्निधित्वमात्रेण पृथक् प्रमाणत्वे भावोपलब्धाव-भावानुपलब्धिरपि प्रमाणं स्यात् ।** *(छलारिशेषाचार्यरचिता प्रमाणचन्द्रिका – आगमपरिच्छेदः – पृ.४४)*

३. **रा.टि.–** ननु प्रातश्चत्वरादौ प्रतियोगिस्मृत्यभावेन गजाद्यभावमनुभूय देशान्तरं गतो गजस्मृतिमान् प्रातस्तत्र गजो नाऽसीदिति प्रतिपद्यते । तत्र नाऽसीदिति प्रत्यक्षस्य प्रवृत्तिरतोऽनुपलब्धिः प्रमाणत्वेनोपेयेत्यत आह– एवमिति ॥ प्रातश्चत्वरे गजो नाऽसीत्तत्तुल्यपरिमाणानां सत्यप्युपलम्भे तस्याप्युपलम्भात्।

मनुपलब्धिलिङ्गजन्यम् । अभावस्येन्द्रियसन्निकर्षानुपपत्ति- रिति[१] चेन्न । भाववदभावस्यापीन्द्रियसन्निकर्षे बाधकाभावात् ।

[२]बहुलज्ञानेऽल्पज्ञानं सम्भवः । यथा शतमस्तीति ज्ञाने पञ्चाशज्ज्ञानम् । तदप्यनुमानमेव । देवदत्तः पञ्चाशद्वान्, शतवत्त्वात् । यथाऽहमिति प्रयोगसम्भवात् ।

प्रसक्तप्रतिषेधे परिशिष्यमाणे बुद्धिः परिशेषः । यथा देवदत्तयज्ञदत्तावेताविति ज्ञाने सत्येकस्मिन्नायं यज्ञदत्त इति प्रतिषेधे देवदत्तबुद्धिः । इयमनुमानजन्या । अयं देवदत्तः, देवदत्तयज्ञदत्तयोरन्यतरत्वे [३]सत्ययज्ञदत्तत्वात् । व्यतिरेकेण यज्ञदत्तवदिति प्रयोगोपपत्तेः ।

[४]उपक्रमादीन्यप्यनुमानान्येव । अनिर्दिष्टप्रवक्तृकं प्रवाद- पारम्पर्यमैतिह्यम् । यथाऽत्र वटे वैश्रवणोऽस्तीति वाक्यं तदागम एव ।

---

व्याघ्रादिवत् । न चासिद्धः । पूर्वं तत्तुल्यपरिमाणानामुपलम्भेऽपि तदुपलम्भो नाऽसीत् । तत्तुल्यपरिमाणानां स्मरणे सत्यपि तस्य स्मरणाभावादिति स्मृत्यभावलिङ्गेन गजाद्युपलब्ध्यभावनिश्चयसम्भवात् । स्मृत्यभावश्च साक्षिवेद्य इति नानवस्थादोष इति भावः । विस्तरस्तु,'**अर्थापत्त्युपमाभावा अनुमान्तर्गताः क्वचित् । प्रत्यक्षान्तर्गतो भावः सुखादेर्नियमेन च । अन्यत्र झटिति प्राप्तः**' ।। इत्यादिभक्तिपादीयानुव्याख्यानसुधयोर्ज्ञेयः ।। **पृ.सं -५३७.**

१. '**-नुपपत्तेर्नेति**'- च. २.'**बहुळज्ञाने**'- च.

३. घटादौ व्यभिचारवारणाय सत्यन्तम् । *(प्रमाणचन्द्रिका. पृ. ४४)*

४. उपक्रमादीनि बृहत्संहितायामुक्तानि – 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इति ।

*(ब्र.सू.भाष्योदाहृतप्रमाणवचनम् -१-१-४)*

**[1]एवमन्यान्यपि[2] प्रमाणान्युक्तेष्वेवान्तर्भाव्यानि ॥**

**(भा.च.)** अभावप्रमाणस्याप्यन्तर्भावं वक्तुं तल्लक्षणमाह- **अभावेति** ॥ तस्य यथासम्भवमन्तर्भावमाह- **तत्रेत्यादिना** ॥ **न त्वनुपलब्धिमात्रजन्येति** ॥ तथाचानुपलब्धिरभावग्राहकप्रत्यक्षस्य प्रतिबन्धकाभावरूपैव । न चाभावप्रमितिकरणमित्यर्थः[3] ।

एवं च प्रातःकाले राजद्वारं गतस्य तत्र गजाभावेन प्रत्यक्षेण गजोपलम्भस्याभावे सति पश्चात् तत्र राजद्वारे गज आसीत् न चेत्यनेन[4] पृष्टस्य [5]प्रातःकालीनगजाभावस्य यज्ज्ञानं तद् अनुपलब्धिकरणकमेव

१. वेदे.– ननु तथाऽपि शाकुनलिप्यक्षरचेष्टानां तथा श्रुतिलिङ्गादीनां नैयायिकोपमानस्य च पृथग्विद्यमानत्वान्नित्यत्वानुपपत्तिरित्यत आह– **एवमिति** ॥ यथासम्भवमिति शेषः । अयं भावः । शाकुनविशिष्टस्येष्टार्थानुमापकत्वेन शाकुनमनुमानान्तर्भूतम् । एवमपशाकुनेऽपीष्टार्थविघातित्वमनुमानं द्रष्टव्यम् । लिप्यक्षरचेष्टायाश्च वर्णस्मरणहेतुतया प्रत्यक्षेऽन्तर्भावः ।
मनस एव स्मृतिकारणत्वेन लिप्यादिदर्शनस्य संस्कारोद्बोधकत्वेन चरितार्थस्य कथं प्रत्यक्षत्वमिति । अर्थोपसर्पणतत्संयोगसहितचक्षुरादिवदवान्तरव्यापारसहितेन्द्रियस्यैव प्रत्यक्षत्वेन लिप्यादिदर्शनजन्यसंस्कारोद्बोधरूपावान्तरव्यापारसहितस्य मनस एव स्मरणकरणत्वे लिप्यादेरपि प्रत्यक्षत्वेन प्रत्यक्षशरीरान्तःप्रविष्टत्वेन प्रत्यक्षत्वमेवेत्यभिप्रायात् ।
श्रुतिलिङ्गादीनां च तात्पर्यानुमापकत्वेनानुमानत्वमेव । वाक्यप्रकरणादीनां स्वार्थे आगमत्वमपि । नैयायिकोपमानमप्यनुमानान्तर्भूतमेव । अयं गवयशब्दवाच्यः । अगोत्वे सति गोसदृशत्वात् । व्यतिरेकेण घटवदित्याद्यनुमानसम्भवादिति । **पृ.सं - ५३९.**

२. *शाकुनलिपिचेष्टादीनीति यावत् ।*

३.'**-प्रमितिकारणमित्यर्थः**' घ.

४.*अत्र* '**राजद्वारे गज आसीन्नवेति केनचित् पृष्टस्य**' *इत्यानुपूर्वी सम्भाव्यते ।*

५.*'प्रातः कालेन' इति सर्वत्र मातृकायां पाठः ।*

वाच्यम् । प्रातःकालीनाभावस्य सायङ्काले प्रत्यक्षायोग्यत्वादिति चोद्यमपास्तम् । प्रातस्तत्र गजो नाऽसीत् । तद्गतत्वेन स्मरणयोग्यत्वे सत्यस्मर्यमाणत्वादित्यनुपलब्धिलिङ्गकानुमानादेव च तत्सिद्धेरिति ॥

ननु प्रत्यक्षेण कथमभावज्ञानं सन्निकर्षाभावाद् इत्याशङ्कते- **अभावस्येति** ॥

सम्भवरूपप्रमाणस्यान्तर्भावमाह- **बहुलज्ञान इति** ॥

परिशेषस्यान्तर्भावमाह- **प्रसक्तस्येति** ॥ **देवदत्तेति** ॥ आगच्छतावेतौ देवदत्तयज्ञदत्तावित्याप्तोक्त्योक्तप्रकारेण ज्ञाने सतीत्यर्थः । **देवदत्तत्वबुद्धिरिति** ॥ तत्रेति शेषः । परिशेष इति पूर्वेण सम्बन्धः ।

ऐतिह्यस्यान्तर्भावं वक्तुमाह- **अनिर्दिष्टेति** ॥

**'वटेवटे वैश्रवणः चत्वरेचत्वरे शिवः ।**
**पर्वतेपर्वते रामः सर्वत्र मधुसूदनः'** इत्यादिपारम्पर्यम् इत्यर्थः ।

*(प्रामाण्यस्वतस्त्वविचारः)*

**(प्र.प.) नन्वेतेषां प्रमाणानां प्रामाण्यमप्रमाणानामप्रामाण्यं च केनोत्पद्यते ? केन वा ज्ञायत इति चेत् । उच्यते । तत्र ज्ञानानामुभयं स्वत एवेति साङ्ख्या मन्यन्ते । [1]ज्ञान-**

१. **वेदे.**– उत्पत्तौ स्वतस्त्वं निर्वक्ति– ज्ञानजनकेति । प्रमातदितरसाधारणधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयातिरिक्तानपेक्षत्वमित्यर्थः । अन्यथा गुणदोषयोरपि ज्ञानजनकत्वेन परतस्त्वपक्षसाधारण्यापत्तेरिति ध्येयम् । ज्ञप्तौ तन्निर्वक्ति– ज्ञानज्ञापकेति । अत्र ज्ञानज्ञापकपदेन ग्राह्यप्रामाण्याश्रयविषयकाप्रतिबद्धानुव्यवसायो विवक्षितः । तदतिरिक्तं प्रामाण्यानुमित्यादिरूपं प्रतिबद्धानुव्यवसायरूपं च । तदनपेक्षत्वं तद्ग्राह्यमिति नञ्द्वयेनोक्ता-

जनकातिरिक्तजनकानपेक्षत्वमुत्पत्तौ स्वतस्त्वम् । ज्ञानज्ञापकातिरिक्तज्ञापकानपेक्षत्वं ज्ञप्तौ स्वतस्त्वम् ।

उभयं परत एवेति नैयायिकादयः । ज्ञानजनकातिरिक्त-कारणजन्यत्वमुत्पत्तौ परतस्त्वम् । [1]ज्ञानज्ञापकातिरिक्त-प्रमाणापेक्षत्वं ज्ञप्तौ परतस्त्वम् । तत्र ज्ञानमिन्द्रियादिजन्यं प्रामाण्यं पुनरिन्द्रियादिगुणजन्यम् । [2]तथाऽप्रामाण्यं

---

नुव्यवसायत्वं लक्ष्यते । तथा चाप्रतिबद्धयावत्स्वाश्रयग्राहकानुव्यावसाय-ग्राह्यमित्येव पर्यवस्यति । नञ्द्वयगर्भतयोक्तिस्तूपपादनाय । यथाश्रुते प्रामाण्यानुमितेरपि ज्ञानग्राहकत्वेन तदतिरिक्तानपेक्षत्वस्य न्यायमत-साधारण्येन सिद्धसाधनतापत्तेरिति ध्येयम् । अत्र ग्राह्यप्रामाण्यस्या-प्रामाण्यशङ्कादिना प्रतिबद्धानुव्यवसायग्राह्यत्वाभावेन बाधवारणायाप्रतिबद्धेति विशेषणम् । न्यायमतेऽप्यनुव्यवसायविशेषग्राह्यत्वं प्रामाण्यस्याप्यस्तीति सिद्धसाधनतावारणाय यावदित्यनुव्यवसायविशेषणम् । ग्राह्यप्रामाण्ये यावदित्यनुव्यवसायग्राह्यत्वस्य बाधितत्वात्, स्वाश्रयग्राहकेति स्वाश्रयग्राहकज्ञानमात्रविवक्षायां ज्ञानं गुणो घटज्ञानमित्यादिशब्दजन्य-स्वाश्रयविषयकज्ञानग्राह्यत्वाभावेन पुनर्बाध एव ततोऽनुव्यवसाय इति । अनुव्यवसायशब्देन च प्रत्यक्षमेव विवक्षितमतो न कोऽपि दोष इति । पृ.सं- ५५६.

१. वेदे.– ज्ञप्तौ तन्निर्वक्ति– ज्ञानेति । उक्तानुव्यवसायातिरिक्तप्रमाणेनैव ग्राह्यत्वमित्यर्थः । अन्यथा प्रामाण्यस्य ज्ञानग्राहकानुव्यवसायातिरिक्त-प्रामाण्यानुमित्यादिग्राह्यत्वं स्वतस्त्वनयेऽपीति सिद्धसाधनता स्यादिति द्रष्टव्यम् । पृ.सं- ५५७.

२. 'यथा' च.

तद्दोषजन्यम् । एवं ज्ञानं मानसप्रत्यक्षवेद्यम् । तत्र प्रामाण्यमप्रामाण्यं च संवादविसंवादलिङ्गगम्यमिति ।

प्रामाण्यं परतोऽप्रामाण्यं स्वत इति बौद्धाः । प्रामाण्यं स्वतोऽप्रामाण्यं परत इति पक्षमङ्गीकुर्वाणा अपि भाट्टाः प्रामाण्यविशिष्टं ज्ञानं ज्ञातताविशेषेणानुमीयत इति ज्ञप्तौ स्वतस्त्वम् । अप्रामाण्यं तु विसंवादाद्यनुमानान्तरवेद्यमिति परतस्त्वं मन्यन्ते । स्वप्रकाशज्ञानेनैव प्रामाण्यविशिष्टज्ञानं सिद्ध्यति । अप्रामाण्यं तु नास्त्येवेति प्राभाकराः[१] ।

इन्द्रियादिमात्रेणैव प्रामाण्यविशिष्टं ज्ञानमुत्पद्यते । गुणास्त्वकिञ्चित्कराः[२] । अप्रामाण्यं दोषसहकृतेन्द्रियादिभिरुत्पद्यते । तथा ज्ञानं तत्प्रामाण्यं च साक्षिणैव ज्ञायते । अप्रमाणज्ञानस्वरूपमात्रं साक्षिवेद्यम् । तदप्रामाण्यं त्वनुमेयमित्याचार्याः ॥

---

१. रा.टि.– एवमुपन्यस्तपञ्चपक्षाणामनुभवादिविरोधेन स्फुटदूषणत्वाद्वा साङ्ख्यमतस्याप्रामाण्यस्वतस्त्वस्वीकारादपि (मायी वदति ।) साङ्ख्यनयानुव्याख्यानसुधयोर्नैयायिकादिमतस्य, **'प्रत्यक्षवच्च प्रामाण्यं स्वत एवाऽगमस्य च । अनवस्थाऽन्यथा हि स्यादप्रामाण्यं तथाऽन्यतः'** इति जिज्ञासानयानुव्याख्यानसुधयोर्देवतानयभाष्यटीकयोर्नविलक्षणत्वनयभाष्यटीकयोस्तत्वनिर्णयादौ च तथा बौद्धमतस्य च, 'सर्वस्यापि न चाभावो विश्वं सदिति गम्यते' इत्यादिना माध्यमिकनयानुव्याख्यानादौ च, भाट्टप्राभाकरमतयोश्च 'न ज्ञानदृष्टिमात्रेण प्रामाण्यमवसीयते' इति ज्ञानपादीयानुव्याख्यानसुधयोर्विवृतदूषणत्वाद्वाऽत्रानुक्तिः । स्वमतमाह– इन्द्रियादीति । ज्ञानसामग्रीमात्रेणैवेत्यर्थः ॥ **पृ.सं- ५४८.**

२. *एतद् वाक्यं च. पुस्तके नास्ति ।*

*(करणप्रामाण्यविचारः)*

करणानां तु ज्ञानजनकत्वशक्तिरेव [1]स्वकारणासादिता प्रामाण्यजनकत्वशक्तिः । अप्रामाण्यजनने त्वन्या शक्ति-र्दोषवशादाविर्भवति । ज्ञप्तिस्तु परत एव । इन्द्रियादिस्वरूपस्य यथायथं स्वप्रमाणवेद्यत्वात्[2] । यथार्थज्ञानसाधनत्व-स्यानुमानवेद्यत्वादिति ।

*(ग्रन्थोपसंहारः)*

तदेवम्भूतैः प्रमाणैः पदार्थानां नित्यानित्यत्वादिकं निश्चित्य

१. राघ.– स्वकारणेति । इन्द्रियादिकारणानां कारणेन या ज्ञानजनन-शक्तिरुत्पन्ना सैव तेषां कारणेनाऽसादिता सम्पादिता प्रामाण्यशक्तिरित्यर्थः । अत्र विशेषः । करणगताया यथार्थज्ञानजननशक्तेः, करणगता करणहेत्वासादिता सहजा या ज्ञानजननशक्तिस्तद्वत्सहजत्वं वा तदभिन्नत्वं वेति तर्कताण्डवोक्तदिशा ध्येयः । एवं भ्रमस्थले दोषेण प्रामाण्य-जननशक्तिप्रतिबन्धेऽपि न ज्ञानानुत्पत्तिशङ्का । तच्छक्तेरप्रतिबन्धात् । अभेदपक्षे तु प्रामाण्यांश एव प्रतिबन्धो न ज्ञानांश इति फलबलात् कल्प्यमिति । शक्तिभेदपक्षे द्वयोः सहजत्वान्न परतस्त्वापत्तिः । अत एवाऽह– अप्रामाण्यजनने त्वित्यादि । तत्र ज्ञानजननाप्रामाण्यजनन-शक्त्योर्भेदेऽप्यन्यस्याऽहितत्वेन सहजत्वाभावात् परतस्त्वमित्यर्थः ॥ यथायथमिति ॥ बाह्येन्द्रियस्वरूपं रूपज्ञानादिलिङ्गगम्यम् । मनस्तु साक्षिगम्यम् । लिङ्गशब्दस्वरूपं तु चक्षुःश्रोत्रादिप्रत्यक्षगम्यम् । इन्द्रिय-लिङ्गशब्दरूपत्रयस्यापि यथार्थज्ञानसाधनत्वरूपं प्रामाण्यं तु संवादि-ज्ञानजनकत्वादिलिङ्गेनानुमेयमिति स्वरूपग्राहकातिरिक्तग्राह्यतया परतस्त्वं तत्प्रामाण्यस्येत्यर्थः । पृ.सं- ५६२.

२.'स्वप्रमावेद्यत्वात्' - च.

**विषयेषु विरक्तस्य शमदमादिसम्पत्तिमतो वासुदेवैकशरणस्य तद्विषयाणि श्रवणमनननिदिध्यासनान्यादरनैरन्तर्याभ्यां बहुकालमनुष्ठितवतो भगवत्साक्षात्कारे सत्यत्युद्रिक्तया भक्त्या भगवत्प्रसादादशेषानिष्टनिवृत्तिविशिष्टानन्दादि- स्वरूपाविर्भावलक्षणा मुक्तिर्भवतीति ॥**

**जयतीर्थमुनीन्द्रेण बालबोधाय निर्मिता ।**
**प्रमाणपद्धतिर्भूयात् प्रीत्यै माधवमध्वयोः ॥**

**॥ इति श्रीमज्जयतीर्थपूज्यचरणविरचित-**
**प्रमाणपद्धतावागमपरिच्छेदः सम्पूर्णः ॥**
**॥ ग्रन्थश्चायं सम्पूर्णः ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

**(भा.च.) अप्रामाण्यमिति** ॥ अप्रमात्वम्[1] अयथार्थज्ञानकरणत्वं चेत्यर्थः । इदं तु प्रसङ्गाद्वा प्रामाण्ये स्वतस्त्वपरतस्त्वयोरन्यतर- पक्षस्याप्यसम्भवे प्रामाण्यस्वरूपानवकाशात् केवलादिविभागादिना प्रामाण्यचिन्ता दूरोत्सारितेति शङ्कापरिहारार्थं वा विचार्यत इति ज्ञेयम् ।

**उभयमिति** ॥ प्रामाण्यमप्रामाण्यं चेत्यर्थः ॥ **स्वत एवेति** ॥ ज्ञान- सामग्रीत एवेति जायते, ज्ञानग्राहकादेव गृह्यत इति चेत्यर्थः । तदेवाऽऽह– **ज्ञानेति** ॥ **उभयमिति** ॥ ज्ञानानां प्रामाण्यमप्रामाण्यं चेत्यर्थः । परत एव जायते परत एव गृह्यत इति चेत्यर्थः । नैय्यायिकादयो मन्यन्त इति सम्बन्धः ।

---

१.'**अप्रमाणत्वं**' - घ.

ज्ञानकारणातिरिक्ताप्रामाण्यसामग्रीं दर्शयति- **तत्रेति** ॥ प्रमासाधारणकारणं गुणः । तत्तु ज्ञानसामान्यसामग्रीतो भिन्नमेवेति भावः । तथात्वमसाधारणकारणं दोषः । तदपि ज्ञानसामग्रीतो[१] भिन्नमेवेति भावः ।

**संवादेति** ॥ अर्थक्रियासामर्थ्या[२]दिलिङ्गगम्यमित्यर्थः । तथाचेदं ज्ञानं प्रमाणं समर्थप्रवृत्तिजनकत्वाद् इत्यनुमानाभ्यां प्रामाण्याप्रामाण्ये गृह्येते इति भावः । **ज्ञाततविशेषेणेति** ॥ प्रमाणज्ञानाव्यभिचारिणा[३] ज्ञाततविशेषेणेत्यर्थः ।

**अनुमानान्तरवेद्यमिति** ॥ ज्ञानानुमापकज्ञाततासामान्यातिरिक्तविसंवादानुमानगम्यमित्यर्थः । **इन्द्रियादिमात्रेणेति** ॥ गुणदोषबहिर्भूतज्ञानसामान्यसामग्र्येत्यर्थः । ज्ञानप्रामाण्यस्य स्वतस्त्वमभिधाय करणप्रामाण्ये उत्पत्तौ स्वतस्त्वं कीदृशमिति शङ्कायामाह- **करणानां त्विति**[४] ॥

ज्ञानजनकत्वशक्तिरेव स्वस्वकारणैः स्वोत्पत्तिकाल एव सहजतयैव[५] प्राप्त्या यथार्थज्ञानजनकत्वशक्तिरिति ज्ञानजनकत्वशक्त्यैक्यमेव करणप्रामाण्यस्य स्वतस्त्वमिति भावः ।

तर्हि करणाप्रामाण्योत्पत्तावेतादृशं स्वतस्त्वं किमिति जिज्ञासायामाह- **अप्रामाण्यजनने त्विति** ॥ ज्ञानगतायाथार्थ्यजनन इत्यर्थः । तथा च करणगतायथार्थज्ञानजनकत्वरूपाप्रामाण्यस्य शक्तिभेद एव परतस्त्वमिति भावः ।

---

१.'**ज्ञानसामान्यसामग्रीतः**' घ. २.'**अर्थक्रियासामर्थ्यः लिङ्ग-**' घ.
३.'**-ज्ञानव्यभिचारिणा**' घ. ४.'**कारणानां त्विति**'- ख. घ.
५.'**सहजत एव**'- ख.घ.

यद्वा, चक्षुरादिकरणगतप्रामाण्यस्योत्पत्तौ स्वतस्त्वं नाम करणगतं हेतुमात्रजन्यत्वम्[1] । अयथार्थज्ञानकरणत्वरूपाप्रामाण्यस्योत्पत्तौ परतस्त्वं नाम करणहेत्वतिरिक्तहेतुजन्यत्वमिति बोध्यम् ।

अस्तु करणप्रामाण्यस्योत्पत्तावुक्तविधस्वतस्त्वम् । ज्ञप्तावपि किं चक्षुर्ग्राहकमात्रग्राह्यत्वरूपं स्वतस्त्वं विवक्षितमित्याशङ्कायामाह- **ज्ञप्तिस्त्विति** ॥ करणप्रामाण्यज्ञप्तिरित्यर्थः ।

परत एव चक्षुरादिकरणग्राहकादन्यत एव **यथायथ**मिति । इन्द्रिय-स्वरूपमनुमानवेद्यम् । नानुमानं तु प्रत्यक्षवेद्यम् । आगमस्तु श्रोत्रवेद्य इत्यर्थः । **यथार्थेति** ॥ यथार्थज्ञानसाधनत्वरूपकरणप्रामाण्यस्येत्यर्थः । प्रमान्वयव्यतिरेकानुविधायित्वलक्षणानुमानवेद्यत्वादित्यर्थः ।

अत्र श्रुत्युक्तं करणप्रामाण्यस्य ज्ञप्तौ स्वतस्त्वं तु ज्ञानकरणत्वं येन गृह्यते तेनान्वयव्यतिरेकानुविधायित्वे यथार्थज्ञानजनकत्वरूपं ज्ञान-प्रामाण्यमपि गृह्यत इत्युक्तत्वेनात्रोक्तपरतस्त्वेन इति ज्ञेयम् ।

ननु प्रमाणलक्षणादिकथनेनेदमेव प्रमाणं नान्यदित्यवधारणं भवति । नचैवंविधनिश्चयः स्वतः पुरुषार्थ इत्याशङ्क्य ग्रन्थारम्भकाले बोधसिद्धय इत्यनेन प्रतिज्ञातमस्य प्रमाणस्यापरोक्षज्ञानादिपुरुषार्थ-पर्यवसायित्वं सप्रकारमुपपादयति- **तदेवम्भूतैरिति** ॥

**नित्यत्वानित्यत्वादिकमिति** ॥ ऐहिकसुखसाधनत्वेनाभिमतानां स्रक्चन्दनवनितादीनां भोगकाल एव स्वेच्छानुसारित्वाभावेन दुःखसाधनत्वं च निश्चित्येत्यर्थः । तथाचानित्यस्यापि विषयस्य शाश्वतत्वानुसन्धानमप्रमाणम् । कुतः ? दुष्टकरणजन्यत्वात् ।

१. **'करणहेतुमात्रजन्यत्वं'** - घ.

अनित्यत्वानुसन्धानं तु बाधाभावाद् यथार्थम् । तस्मादनित्यमेवेति प्रत्यक्षयोग्यविषयेष्वनित्यतानिश्चयस्त्वित्थं सम्पादनीयः ।

स्वर्गादौ तु **'यावदिन्द्र'** इत्यादिवाक्यान्मोक्षादेस्तद्भागिनः स्वस्यापि नित्यतानिश्चयः सदागमेन सम्पादनीय इति भावः ।

**आनन्दादीति** ॥ आनन्दादि यद् जीवधर्मभूतं स्वरूपं तदाविर्भावलक्षणेत्यर्थः ।

इदानीं स्वकृतं प्रकरणं गुरुदेवतयोः समर्पयति– **जयतीर्थमुनीन्द्रेण इति** ॥

**॥ इति श्रीमद्रामचन्द्रतीर्थपूज्यपादानां शिष्येणोपेन्द्रभट्टसूनुना वानिवालनरसिंहेन कृतायां प्रमाणपद्धतिवाक्यविवृतौ भावचन्द्रिकायां तृतीयपरिच्छेदः[१] ॥**

**॥ समाप्तश्चायं ग्रन्थः ॥**

**॥ श्रीनरसिंहार्पणमस्तु[२] ॥**

---

१. 'तृतीयपरिच्छेदः समाप्तः'- घ.

२. 'श्रीलक्ष्मीनारायणार्पणमस्तु'- घ.

# उपयुक्तग्रन्थसूची (BIBLIOGRAPHY)


| सं. | ग्रन्थनाम | सङ्केताक्षरसूची | कर्तारः | प्रकाशनम् | वर्षम् |
|---|---|---|---|---|---|
| १. | अनुव्याख्यानम् | (अनुव्या.) | श्रीमदानन्दतीर्थ-भगवत्पादाः | द्वैतवेदान्ताध्ययनसंशोधन-प्रतिष्ठानम्, बेङ्गळूरु | १९९१ |
| २. | ऋक्संहिता | (ऋ.सं.) | — | स्वाध्यायमण्डल, सतारा | १९४० |
| ३. | कणादसूत्रम् | (क.सू.) | कणादः | चौखम्बासंस्कृतसीरीस्, काशी | १९२५ |
| ४. | कारिकावली | (का.) | विश्वनाथः | राष्ट्रियसंस्कृतसंस्थानम्, नवदेवली | २००२ |
| ५. | किरणावली | (कि.) | उदयनाचार्याः | बरोडा | १९६४ |
| ६. | गौतमन्यायसूत्रम् | (गौ.न्या) | गौतमः | चौखम्बासंस्कृतसीरीस्, काशी | १९२५ |

| | | | | | |
|---|---|---|---|---|---|
| ७. | जैमिनिसूत्रम् | (जै.सू) | जैमिनिः | आनन्दाश्रमः, पुणे | १९८१ |
| ८. | तन्त्रसारसङ्ग्रहः | (तं.सं) | श्रीमदानन्दतीर्थाः | श्रीभण्डारिकेरिमठः, उडुपि | १९९७ |
| ९. | तर्कताण्डवम् | (त.तां) | श्रीव्यासतीर्थाः | मैसूरुविश्वविद्यालयः, मैसूरु | १९४३ |
| १०. | तर्कसङ्ग्रहः | (त.सं) | अन्नम्भट्टः | भारतीयविद्यासंस्थान, काशी | २००२ |
| ११. | दिनकरी | (दि.) | दिनकरः | शङ्कररामशास्त्री, चेन्नै | १९२३ |
| १२. | न्यायकुसुमाञ्जलिः | (न्याय.कु) | उदयनाचार्याः | केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपतिः | १९८० |
| १३. | न्यायपरिशुद्धिः | (न्याय.प.) | श्रीवेङ्कटनाथाचार्याः | सुन्दराम् ऐय्यङ्गार् अण्ड सनूस्, चेन्नै | १९७४ |
| १४. | न्यायबिन्दुः | (न्याय.बि.) | धर्मकीर्तिः | बुद्धभारती, काशी, | १९९४ |
| १५. | न्यायभाष्यम् | (न्याय.भा) | वात्स्यायनम् | चौखम्बासंस्कृतसीरीस्, काशी | १९२५ |

| | | | | |
|---|---|---|---|---|
| १६. न्यायभूषणम् | (न्या.भू) | भासर्वज्ञः , | षड्दर्शनप्रकाशनप्रतिष्ठानम्, स्वामीयोगीन्द्रानन्द, काशी | १९६८ |
| १७. न्यायमञ्जरी | (न्या.म) | जयन्तः | प्राच्यविद्यासंशोधनालयः, मैसूरु | १९७० |
| १८. न्यायलीलावती | (न्या.ली.) | वल्लभाचार्यः | कृष्णदास अकाडमी, चौखम्बा संस्कृतसीरीस्, काशी | १९९१ |
| १९. न्यायवार्तिकम् | (न्या.वा) | उद्योतकरः | अनन्तलाल् ठक्कुरः, धर्भाङ्गा | १९६७ |
| २०. न्यायवार्तिक-तात्पर्यटीका | (न्या.वा.ता.टी) | वाचस्पतिमिश्रः, | चौखम्बा संस्कृतसंस्थान राजेश्वरशास्त्री, काशी | १९९० |
| २१. न्यायलङ्कारः - | (न्याया-) | न्यायविजयः | श्रीहर्षचन्द्रः वीरसंवत्, वारणासी, | २४४० |
| २२. पाणिनीयाष्टा-ध्यायीसूत्राणि | (पा.सू) | पाणिनिः | चौखम्बासंस्कृतसीरीस् आफीस् , वाराणसी | १९६६ |

| | | | | | |
|---|---|---|---|---|---|
| २३. | प्रकरणपञ्चिका | (प्रकरण.प.) | शालिकानाथः, | I.C.P.R, नवदेहली | २००४ |
| २४. | प्रमाणचन्द्रिका | (प्र.च) | छलारिशेषाचार्यः, | सत्याभिज्ञ-संस्कृतविद्यापीठम् बेङ्गळूरु | १९८६ |
| २५. | प्रमाणपद्धतिः | (प्र.प.) | श्रीजयतीर्थाः, | प्रो.के.टि.पाण्डुरङ्गि, द्वैतवेदान्ताध्ययनसंशोधन-प्रतिष्ठानम्,बेङ्गळूरु | १९९१ |
| २६. | प्रमाणपद्धति-राघवेन्द्रतीर्थीय-टिप्पणी, | (प्र.प.रा.टि) | श्रीराघवेन्द्रतीर्थाः | द्वैतवेदान्ताध्ययनसंशोधन प्रतिष्ठानम्, बेङ्गळूरु | १९९१ |
| २७. | प्रमाणपद्धति वेदेशीयटिप्पणी | (प्र.प.वे.टि) | श्रीवेदेशातीर्थाः | द्वैतवेदान्ताध्ययनसंशोधन-प्रतिष्ठानम्, बेङ्गळूरु | १९९१ |
| २८. | प्रमाणपरिभाषा | (प्र.परि.) | विजयधर्मसूरिः | श्रीहर्षचन्द्रः, काशी, वी.सं. | २४४० |

| | | | | |
|---|---|---|---|---|
| २९. प्रमाणलक्षणम् | (प्र.ल.) | श्रीमदानन्ततीर्थाः | श्रीविद्यामान्यतीर्थाः, बेङ्गळूरु | १९६९ |
| ३०. प्रमाणलक्षणटीका | (प्र.ल.टी.) | श्रीजयतीर्थाः | श्रीविद्यामान्यतीर्थाः, बेङ्गळूरु | १९६९ |
| ३१. प्रमाणवार्तिकम् | (प्र.वा.) | आचार्यधर्मकीर्तिः | बौद्धभारती, वारणासी, | १९९४ |
| ३२. प्रमाणवार्तिकवृत्तिः | (प्र.वा.वृ) | मनोरथनन्दिः | बौद्धभारती, काशी | १९९४ |
| ३३. प्रशस्तपादभाष्यम् | (प्र.भा) | प्रशस्तपादः | सम्पूर्णानन्दविश्वविद्यालयः काशी | १९७७ |
| ३४. ब्रह्मसूत्राणि | (ब्र.सू) | बादरायणः | सर्वमूलग्रन्थाः,(सं.१) अखिलभारतमाध्व-महामण्डलम्,बेङ्गळूरु | १९६९ |
| ३५. ब्रह्मसूत्रभाष्यम् | (ब्र.सू.भा) | श्रीमदानन्दतीर्थाः, | (सर्वमूलम् -सं-१) अखिलभारतमाध्व-महामण्डलम् | १९६९ |

| | | | | | |
|---|---|---|---|---|---|
| ३६. | श्लोकवार्तिकम् | (श्लो.वा) | कुमारिलभट्टः, | रत्ना पब्लिकेशन्, काशी | १९९३ |
| ३७. | विष्णुतत्वविनिर्णयः | (वि.त.वि) | श्रीमदानन्दतीर्थाः | श्रीमन्माध्वराद्धान्त-संवर्धिनी सभा, मद्रपुरी | १९६९ |
| ३८. | विष्णुतत्वविनिर्णय-टीका | (वि.त.वि.टी) | श्रीजयतीर्थाः | पूर्णप्रज्ञसंशोधनमन्दिरम् बेङ्गळूरु | २००० |
| ३९. | वेदान्तपरिभाषा | (वे.प.) | धर्मराजाध्वरीन्द्रः, | चौखम्बासंस्कृतसीरीस्. आफिस्, काशी | १९९२ |
| ४०. | शास्त्रदीपिका | (शा.दी) | पार्थसारथिमिश्रः, | धर्मदत्तसूरिः, मुम्बयी | १९१५ |
| ४१. | श्रीमन्न्यायसुधा | (न्या.सु) | श्रीजयतीर्थाः | सत्यप्रमोदतीर्थाः, शा.श. उत्तरादिमठः, बेङ्गळूरु, | १९०७ |
| ४२. | सिद्धान्तमुक्तावली | (सि.मु.) | विश्वनाथः | राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली | २००२ |

**English Text.**

४३. 'A History of the Dvaita School of Vedanta and its Literature', Dr.B.N.K. Sharma, Motilal Banarasi Dass, Delhi, 1981.

**Kannada Texts.**

४४. ग्रन्थमालिकाप्रसरः, श्रीगौडेगेरे गोपालकृष्णाचार्यः, प्रभामुद्रणालयः, बेङ्गळूरु, १९७६

४५. द्वैतवेदान्तवाङ्मय हागू इतिहास, एम्. के. भारतीरमणाचार्यः, द्वैतवेदान्तसंशोधनप्रतिष्ठानम्, बेङ्गळूरु, १९८६.

*****